# पाणिनीय-
# ...दार्थसम्बन्ध-सिद्धान्तः



डा. नरदेव-शास्त्री

# वाग्द्वारम्

'पाणिनीयशब्दार्थसम्बन्धसिद्धान्तः' इति ग्रन्थे ग्रन्थकारस्य विद्यावारिधिनरदेवशास्त्रिणः पाणिनीयतत्त्वान्वेषि वैदुष्यवैभवं श्रमातिशयञ्च सुविलोक्य प्रमोदते मे सुतरां चेतः। पाणिनीयं सर्वपार्षदमिति ब्रूते तत्रभवान् पतञ्जलिः, परं पाणिनीयात्मनोऽस्य विदुषः शास्त्रैकहृदयस्य शास्त्रकौशलं निरीक्ष्य नितरामेतत् प्रतीयते यत् पाणिनीयं वाग्विश्लेषणं न केवलं सर्वपार्षदमेवापि तु तत् सार्वकालिकमपि सार्वदेशिकञ्चापि शब्दतत्त्वानुशासनम्। ग्रन्थस्यास्य पुरोवाचि भाषातत्त्वविदा डा० बलदेवसिंहेन एतद्ग्रन्थविषये सत्यमेवैतद् विलिखितम्—"**बहुकालानन्तरं पाणिनीयं समाश्रित्य एतादृशो वैदुष्यप्रयासो दृष्टिपथमायातः।**" इति।

भगवतः पाणिनेः पूर्वम्, तदनन्तरञ्च शब्दानुशासनस्य स्थितिः, विकासः, पाश्चात्त्येषु भाषातत्त्ववित्सु पाणिनेरक्षुण्णः प्रभावश्च यथा महता कौशलेन शास्त्रश्रमेण च शास्त्रिवर्येण उद्भावितः, तद् दृष्ट्वैवागन्तुं शक्यते। साम्प्रतिकं भाषाविज्ञानापरनाम भाषातत्त्वशास्त्रं पाणिनीयेन भृशमुपकृतम्, पाणिनीयञ्च विना तत् कथञ्चिदपि क्षणमपि च नैव स्थातुं शक्नोति इति प्रतिपादनेऽनेकत्र ग्रन्थकारः कुशलः सफलश्च सञ्जातः। नूनमेतत् सर्वं ग्रन्थप्रणेतुः पाणिनीये तलस्पर्शिनः शास्त्रश्रमस्यैव सुपरिणामः। एतदर्थं डा० नरदेवशास्त्रिणोऽनेकशो धन्यवादार्हाः।

विज्ञानामनुधित्सूनाञ्च कृते अनेकैर्विशिष्टैः परिशिष्टैः विभूषितस्य विविधगुणग्रथितस्यास्य ग्रन्थस्याहं भूयो भूयः प्रचारप्रसारौ सततं कामये।

संस्तौति शुभाकाङ्क्षी

दि० २४।१२।१९८७

**डा० सत्यव्रतशास्त्री**

प्राचार्यः संस्कृतविभागे

दिल्लीविश्वविद्यालयस्य

वाणिज्यविधिविज्ञाय विश्वविद्यासुसंवृद्धे
हरस्वरूपवर्याय कुलश्रेष्ठाय सादरम्।
ग्रन्थः शब्दार्थसम्बन्धात्मज्ञानः पाणिनीयकः;
शास्त्रिणा नरदेवेन सुहृदे समुपाहृतः।

नरदेवशास्त्री
५/२/२२

# पाणिनीय-शब्दार्थसम्बन्ध-सिद्धान्तः






लेखकः—

**डा० नरदेवशास्त्री**

(लब्धस्वर्णपदकः)

व्याकरणाचार्यः, एम० ए०

विद्यावारिधिः (पी-एच० डी०) साहित्यरत्नम् ।

प्राध्यापकः, संस्कृतविभागे

हिमालचलप्रदेशविश्वविद्यालये, शिमलास्थे

हि० प्र० १७१००५



**पिपठिषु-प्राच्यविद्या-प्रतिष्ठानम्**

१८/५५०, विजयपार्कः (आनन्दविहारः)

मौजपुरम्, दिल्ली-११००५३

२०४४ वैक्रमाब्दे    १९०८ शकाब्दे    १९८७ खीष्टाब्दे

पाणिनीयशब्दार्थसम्बन्धसिद्धान्तः

लेखकः, सम्पादकः प्रकाशकश्च—डा० नरदेवशास्त्री

प्रथम-संस्करणम् १९८७ ख्रीष्टाब्दे



मूल्यम् : रु० २५०.००
(सार्धशतद्वयरूप्यकाणि)

प्राप्तिस्थानम् :
पिपठिषु-प्राच्यविद्या-प्रतिष्ठानम्
१८/५५०, विजयपार्कः (आनन्दविहारः)
मौजपुरम्, दिल्ली-११००५३

मुद्रकः—
वैदिकप्रेसनामा मुद्रणालयः
कैलाशनगरम्, दिल्ली-११००३१

# पाणिनीय-शब्दार्थसम्बन्ध-सिद्धान्तः

## ✻ समर्पणम् ✻



पितरौ सादरं नत्वा
ध्यात्वोपकार - परम्पराम् ।
तयोर्वै पादपद्मेषु
ग्रन्थोऽयमर्प्यते मुदा ।।

सरस्वतीप्रसूतेन पञ्चानन्दात्मजेन च ।
सम्प्राप्तशास्त्रसारेण नरदेवेन शास्त्रिणा ।।

# पाणिनीय-शब्दार्थसम्बन्ध-सिद्धान्तः

## * अभ्यर्थना *

दुर्बोधाम्भोधि शास्त्रम्
    दुरधिगममहो ! शब्दतत्त्वं विशेषात्,
दुर्मोषो दोषकोषो
    मतिरपि न दृढा ह्यञ्जसा तत्त्वसंस्था ।
सिद्धान् बद्धाञ्जलिः
    तद्गुणगणनिकषान् प्रार्थये तत्त्वविज्ञान्,
आतोषं वै विदोषम्
    गणयितुमखिलं जोषमेवानतोऽहम् ॥

विदुषामाश्रवः—

नरदेवशास्त्री




# पुरोवाक्

अर्थं प्रत्याययितुमनसो वक्तारः प्रत्येतुकामाश्च श्रोतारः शब्देषु सम्प्रवर्तन्ते। शब्दप्रयोगस्य स्वाभाविकी सुनियता व्यवस्था भाषा भवति। यद्यपि प्रयोक्तृषु सा व्यवस्था पूर्वं यादृच्छिकी एव भवति तथापि तत्र चिरं यावच् शब्दप्रयोगपरम्परामनुसृत्य शाब्दिका आचार्याः सुनियतां व्यवस्थां सम्पादयन्ति। अत एव भाषा नाम अनादिकालिकवाग्व्यवहारपरम्परासम्प्राप्ता एका सामाजिकी सम्पदुच्यते। यद्यपि कतिपयादत्तविशिष्टपदप्रयोगान् समीक्ष्य भाषाशास्त्रिभिः वैयक्तिकी भाषाऽपि परिकल्पिता तथापि तत्र तादृशैः वैयक्तिकपदैरपि सामाजिकं तादात्म्यं भवत्येव। एतदभिलक्ष्यैव प्रस्तुतः पाणिनीयशब्दार्थसम्बन्धसिद्धान्त-ग्रन्थकारः "यः शाब्दः सङ्केतः समाजे यत्रार्थे निश्चीयते तेन शाब्देन सङ्केतेन स एवार्थोऽभिधीयते। अतो लोकव्यवहारादेव प्रयोक्ता शब्दप्रयोगे समर्थो भवति।" इत्येतत्कथने समुत्सहते।

नवजातः शिशुः स्वाभिप्रायं प्रकटयितुं कञ्चनापि शाब्दं सङ्केतं न विजानाति। सर्वतः पूर्वं रोदनादिभिरेव साधनैः शिशुः स्वगतमाशयं बोधयति। शिशुगतं स्फोटतत्त्वमधिगच्छन्ती तस्य जननी तैः रोदनादिभिरेव साधनैः शिशोरभिप्रायं समधिगच्छति। कीदृशेन रोदनेन शिशुः दुग्धं कामयते, कथङ्कारं काङ्क्षणेन च शौचं लघुशङ्कां वा कर्तुमिच्छति, केन पाणिपादादि सञ्चालनेन स किं वाञ्छतीति माता सम्यक् विजानाति। सर्वस्यापि प्राणिजातस्य भाषाप्रयोगविषये ईदृशी एव गतिर्भवति।

कालान्तरे स शिशुः मातुः साहाय्येन शनकैः शनकैः वाक्प्रयोगं शिक्षते। अम्बाऽम्बेति शिक्षमाणो बालः प्राग् 'अम्भ अम्भ' इति अव्यक्तमेव उच्चारयति। तत्सङ्केतनिदानाच्च पारिवारिकाणां तादृशैरव्यक्तरवैरपि सम्प्रत्ययो भवति। शिशोरारम्भिकीयं वाक्सम्पद् मातुः सकाशात् प्राप्यते इत्यतो मातृभाषेयमित्युच्यते। ग्रन्थिबद्धं स्वल्पं वस्तु इव स्वल्पतमामिमां मात्रा प्रदत्तां वाक्सम्पदं समादाय बालः समाजे समवतरति, लौकिके व्यवहारे च

प्रवर्तते। मातुः सकाशादागत्य बालोऽसौ लोके सर्वतः प्राक् स्ववयस्यान् प्राप्नोति। तत्र समेषामपि वयस्यानां वाक्सम्पत् परस्परं व्यवहारवशाद् एकात्मिका जायते। जीवने शाब्दव्यवहारस्येदं प्रथमं पर्व विद्यते। तदनन्तरं बालस्य वाक्सम्पत् क्रमशो विस्तृता सञ्जायते।

यस्य बालस्याभिभावका यस्मिन् व्यवसायविशेषे दक्षाः कार्यरताश्च भवन्ति, तेषां सन्निकटवर्ती बालोऽसौ तद्व्यवसाये व्यवह्रियमाणान् विशेषान् शब्दान् व्यवहर्तुं दक्षो भवति स्वभावतः। अध्ययनाध्यापनयोः व्यस्तानां सन्निकटवर्ती बालः तत्सम्बद्धान् शब्दान् सारल्येनावगन्तुं समर्थो भवति। कृषिकर्मणि निरतानां सन्निकटवर्ती बालः कृषिकर्मोपयोगिभिः वस्तुभिः सम्बद्धान् शब्दान् व्यवहर्तुं स्वभावतो दक्षो भवति। एवञ्च यादृशे समाजे बालः सन्तिष्ठते तत्रत्यायां भाषायां स सारल्येन प्रवीणो भवति। अत एव भारतीयार्याणां बाला अरबीकादिभाषापेक्षया संस्कृतशब्दोच्चारणे सारल्यमनुभवन्ति। एवमेव यवनानां बालाः संस्कृतादिभाषापेक्षया अरबीक-फारसीक-शब्दोच्चारणे सारल्यं प्रतीयन्ति।

शनैः शनैरस्याः समाजे व्यवह्रियमाणाया भाषायाः स्वरूपद्वयी विजायते। तत्रैका आपामरप्रसिद्धा सामान्या अपरा च शिष्टानां संस्कृता। एवमेव भाषाणां मौखिकी लैखिकी इति भेदद्वयी चापि सञ्जायते। साधनसम्पन्नानां शिष्टानाञ्च भाषा लैखिकी जायते। आपामरप्रसिद्धा एव च भाषा मौखिकी भवति।

तत्र मौखिक्यां भाषायाम् अल्पादेव देशभेदादल्पादेव च कालभेदाच्छीघ्रतया परिवर्तनं विजायते। लैखिक्यां भाषायामतीव शनकैः शनकैः परिवर्तनं भवति। सामर्थ्यशालिनो जना अध्यवसायेन शीघ्रमेव स्वकीयां मौखिकीमपि भाषां लैखिकीमपि विदधति। पञ्चनदप्रदेशे प्रयुज्यमाना पञ्जापीया (पञ्चनदीया-पञ्जाबीति) मौखिकी भाषा अद्य न खलु लैखिकी एवापितु तत्रत्यस्य विश्वविद्यालयस्य शिक्षाया अपि माध्यमा विद्यते।

भाषा हि नाम लोकपरिपाटीति सुविदितं वाक्तत्त्वविदाम् भाषाशिक्षणेऽनुकरणात्मिका प्रवृत्तिः प्राधान्येन सहायिका भवति। अनुकरणञ्च खलु शब्दस्यार्थस्य चोभयस्यैव विजायते। भाषा विकासे मूलमनुकरणमेव मुख्यतः परिगण्यते। अनुकरणञ्च कात्स्न्र्येन नैव शब्दस्य सम्भवति नापि अर्थस्यैव। अत एव साधुत्वेन स्वीकृतेषु शब्देषु सततं विकृतयो विजायन्ते। तत्रार्थपरि-

वर्तनञ्चापि दृश्यते। अशक्तैरभिधातृभिः वक्तृत्वदौर्बल्याच्छब्दाः शुद्धरूपेण नोच्चार्यन्ते। यथाद्यतने शाब्दे व्यवहारे बहुभिः—"ज्ञ (ज्ञ) इति प्रयोक्तव्ये 'ग्ञ' 'ग्य' वेति प्रयुज्यते। 'य' इति प्रयोक्तव्ये 'ज' इति प्रयुज्यते। 'ष' इति प्रयोक्तव्ये ख/श/स-वेति प्रयुज्यते। 'क्ष' (क्ष) चेति प्रयोक्तव्ये 'छ' इति प्रयुज्यते।"

प्रतिपत्तृत्वदौर्बल्याच्च अज्ञैः शब्देनाभिप्रेतो नियतोऽर्थो नावगम्यते। अतो व्याकरणस्यावश्यकताऽनुभूयते। व्याकरणेन यथासम्भवं शब्दविकृतयोऽवरोध्यन्ते। लोकव्यवहारे नियतार्थे नियतस्यैव शब्दस्योच्चारणं भवेद्, नियतेन शब्देन च नियतस्यैवार्थस्यावगतिः स्याद् इत्येतदर्थं कश्चिद् यत्नः कार्य एव। अन्यथा व्यवहारनिर्वाहः सर्वथैवासम्भवः स्यात्। पाणिनीयस्यास्य तन्त्रस्येदमेव गुरुतरं लक्ष्यं विद्यते। प्रस्तुते पाणिनीयशब्दार्थसम्बन्धसिद्धान्ताख्ये ग्रन्थे विदुषा ग्रन्थकृता शब्दार्थसम्बन्धे पाणिनीयं सिद्धान्तं प्रतिपादयता तथ्यमेतत् सम्यङ् निरूपितं यथास्थानम्।

ग्रन्थेऽस्मिन् ग्रन्थकृता यथाशास्त्रं प्राणिषु अनुभूतेरभिव्यक्तेश्च स्वाभाविकी प्रवृत्तिश्चर्चिता। यथा बुभुक्षा पिपासा इत्येवमादयः प्रवृत्तयः प्राणिनो बाधन्ते तथा अभिधित्सापि अनुभववतः प्राणिनः सततमभिव्यक्तिकार्ये प्रयोजयन्ति। बुभुक्षादिप्रवृत्तीनां स्वाभाविकत्वेऽपि बुभुक्षादिपरिसमाप्तये समाजे भोजनादिसामग्रीभेदः परिदृश्यते। तत्र व्यक्तीनां रुचिभेदः सामर्थ्यभेदः देशादिभेदश्च कारणत्वेन परिगणयितुं शक्यते। अस्मादेव कैश्चित् सक्तुः पीयते, अन्यैः यवागूर्लिह्यते, अपरैरोदनमुपभुज्यते, एकैश्चापूपः खाद्यते।

वाक्प्रयोगविषयेऽपि एतादृशी एव गतिर्भवति। स्वभावतो विद्यमानेऽपि अभिधानसामर्थ्ये सामाजिकी परिस्थितिः भाषाभेदं जनयति। यं समाजमधिवसति प्रयोक्ता तदनुसारेण खलु तस्य भाषा प्रजायते। अत एव कैश्चित् संस्कृतभाषाङ्गीक्रियते, अन्यैः हिन्दी, अपरैराङ्गलभाषा एकैश्च अरबीकादिवाग्विकारः। बहुभिश्च बह्वचो भाषा यथास्थानं प्रयुज्यन्ते।

यत्किञ्चिन्निमित्तमाश्रिता भवति प्राणिनां शब्दप्रवृत्तिः। पतञ्जलिनाभिधेयदृष्टया चतुष्टयी शब्दानां प्रवृत्तिः समाख्याता—१. जात्यात्मिका, २. गुणात्मिका, ३. क्रियात्मिका, ४. यदृच्छात्मिका च। तदनुसारेणास्मिन् ग्रन्थे शब्दकाण्डस्य पञ्चमसमुद्देशे ग्रन्थकृता शब्दभेदः समाख्यातः।

शब्दानां लाघवेनानुशासनलाभाय अवगतये चैकां वैज्ञानिकीं पद्धति-

माश्रित्य पाणिनिना पदानां द्वैविध्यं स्वीकृतम्—१. सुबन्तम्, २. तिङ्न्तञ्च। सामान्यवता विशेषवता च लक्षणेन शब्दानामनुशासनसौविध्यमाचार्येण प्रदर्शितम्। प्रकृतेः प्रत्ययस्य चानन्त्याल्लक्षणं विना सर्वे पदराशयोऽवगन्तुमशक्या एव जायन्ते —

प्रकृतिप्रत्ययानन्त्याद् यावन्तः पदराशयः।
लक्षणेनानुगम्यन्ते कस्तानध्येतुमर्हति॥ तं० वा०

सुबन्ते तिङ्न्ते च पदानां व्यवस्थितत्वात् तत्रैव पाणिनेः प्रवृत्तिदर्शनादत्र गरिष्ठेऽस्मिन् ग्रन्थे पाणिनिः द्विधापदवादी स्वीकृतः। वाक्यप्रयोगाय कारकस्य आख्यातस्य परिज्ञानमावश्यकं भवति। ग्रन्थेऽत्र उपर्युक्तस्य पदविषयकस्य तथ्यस्य विवेचना यथास्थानं विशदमुपस्थापिता। लोके सञ्ज्ञाकरणप्रवृत्तौ पाणिनीयमनननिष्कर्षोऽपि महता वैदुष्येण विदुषा ग्रन्थकारेण सम्प्रदत्तः।

अस्मिन् ग्रन्थे पाणिनीयसिद्धान्तानुसारेण शब्दाभिधेयोऽपि सम्यक् समाख्यातः। शब्दार्थसम्बन्धविषये पाणिनीयसिद्धान्तेन सह संवादिनो विसंवादिनश्चाचार्यस्यापि मतमत्र यत्र तत्र सम्यङ् निर्दिष्टम्। शब्दार्थविषयक एष प्रसङ्गोऽस्य ग्रन्थस्यार्थकाण्डे प्रवृत्तो विद्यते। अर्थोऽत्र पाणिनीयसिद्धान्तानुसारेण द्विधा प्रविभक्तः—१. वस्त्वर्थः, २. शब्दार्थश्च। शब्दार्थो वस्त्वर्थेन सह संवादी एव स्यादिति न भवति आवश्यकम्। यतः शब्दार्थः खलु लोकव्यवहारपद्धतिमाश्रितो भवति। असतो बाह्यार्थस्यापि शब्दसामर्थ्यादभिधानं दृश्यते। सर्वथाऽसम्भवोऽतिशयोक्तिपूर्णश्चापि पदार्थः शब्दैरभिधीयमानो दृश्यते।

पृथिव्यादिषु गन्धादिरिव कस्मिंश्चच्छब्दविशेषे कश्चिदर्थविशेषो नियतो न भवति। लोकव्यवहारादिभिरेव साधनैः केनचिच्छब्दविशेषेण कश्चिदर्थविशेषो निश्चीयते। शब्दार्थयोः परस्परं सम्बन्धपरिकल्पनस्यायमेवाधारो विद्यते। नियतेनैव शब्देन नियतस्यार्थस्याभिधानं स्यादित्येतदर्थं शब्दशास्त्रं प्रवर्तते। अत एव शब्दार्थयोः परस्परं सम्बन्धोऽत्र ग्रन्थे सम्बन्धकाण्डेऽनुसन्धत्तः ग्रन्थकृता महता श्रमेण।

शब्दानां साधुत्वासाधुत्वनिर्णयः सर्वथा पार्षद एव विद्यते। पाणिनीये तन्त्रे यादृशं साधुत्वमभिमतम्, तादृशैः साधुभिरेव शब्दैः भाषितव्यं नासाधुभिरिति पाणिनीयस्य तन्त्रस्य सिद्धान्तो विद्यते। रागद्वेषादिभिः मनोमलः, वातपित्तकफैः शरीरमलः, वक्तुरसामर्थ्येन च वाङ्मलः प्रजायते। यथा

अध्यात्मशास्त्रेण मनोमलः, चिकित्साशास्त्रेण च शरीरमलः समाधीयते तथा शब्दशास्त्रेणापि वाङ्मलस्य निदानं सम्भवि। इत्येवास्ति पाणिनीयतन्त्रस्य प्रवृत्तिनिमित्तम् —

कायवाग्बुद्धिविषया ये मलाः समवस्थिताः।
चिकित्सालक्षणाध्यात्मशास्त्रैस्तेषां विशुद्धयः॥ वा० प० १।१४७

भुवि सुप्रथितं नाम पाणिनीयं शब्दानुशासनं वैदिकलौकिकवाग्व्यवहाराणां साधुत्वसुविख्यापकम्। पाणिनीयं समाश्रित्याद्य सुविपुलं वाङ्मयं न केवलं भारते संस्कृतायामेव वाचि अपि तु सकलेऽपि जगति सर्वास्वेव वाक्षु विद्यमानं भाषातत्त्वमनीषिणां कृते महदाकर्षणमाविष्कुरुते। विश्ववाङ्मये नूनं स प्रमाणभूत आचार्यः पाणिनिः सर्वथा ज्ञानप्रकाशाविष्कारकः। सुविपुलेऽपि तस्मिन् समस्ते पाणिनीयवाङ्मयेऽद्य नूनं कश्चिदभिनवो यत्नः सामासादितोऽनेन पाणिनीयशब्दार्थसम्बन्धसिद्धान्ताभिधानेन ग्रन्थसमारम्भेण विदुषा नरदेवशास्त्रिणा। शब्दशास्त्रे कृतभूरिपरिश्रमेण पाणिनीयार्थमर्मविदा विद्यावारिधिविज्ञेनास्माकं गुरुभ्रात्रा लघिष्ठेनापि वैदुष्यभूयिष्ठेन सर्वथा पाणिनीयात्मना चिरं यावत् पाणिनीयमध्यापयताऽनुसन्दधानेन व्याचक्षाणेन च नरदेवशास्त्रिणा पाणिनीयार्थसाधकमिमं पाणिनीयागमसङ्ग्रहरूपं 'पाणिनीयशब्दार्थसम्बन्धसिद्धान्त' इत्याख्यं ग्रन्थं सम्प्रस्तूय पाणिनीये वाङ्मये नूनमैतिहासिकं विशिष्टं वैदुष्यसाधकञ्च पाणिनीयं तपः समासादितम्।

ग्रन्थादौ ग्रन्थकृता भाषातत्त्वदृष्ट्या पाणिनीयवाङ्मयदृष्ट्या च एका अतीव महत्त्वपूर्णा मौलिकी विस्तृता प्रस्तावना सम्प्रदत्ता। तत्र अनादिकालाद् वैदिकवाङ्मयादारभ्याद्यावधि यावत् सवैदुष्यं शब्दतत्त्वप्रवृत्तिरुपवर्णिता, अपि च भारते भारताद् बहिश्च पाणिनीयप्रसारपरम्परापि सम्यगुपस्थापिता। तत्र ग्रन्थकृत्प्रवृत्तिरिति शीर्षकेण ग्रन्थसारभूतः कारिकात्मकः पाणिनीयनिष्कर्षश्चापि महता वैदुष्येण ग्रन्थकृता समुपस्थापितः। नूनमस्मिन् सन्दर्भे यत्र ग्रन्थकर्तरि भर्तृहरेः दार्शनिकगाम्भीर्यमिव तलस्पर्शि पाणिनीयवैदुष्यं परिलक्ष्यते तत्रैव प्रतिपादने वाचि च प्रसादगुणवैभवञ्चापि मुहुर्मुहुः द्रष्टुं शक्यते।

ग्रन्थान्ते प्रदत्तानि परिशिष्टानि न केवलमनुसंधित्सूनामेव कृते महत्त्वपूर्णानि अपि तु ऐतिहासिकदृष्ट्या पाणिनीयं परिचेतुकामानां चापि कृते परमोपा-

देयानि । बहुकालादनन्तरं पाणिनीयं समाश्रित्य एतादृशो वैदुष्यप्रयासो दृष्टिपथमायात इत्येतदर्थं ग्रन्थकारः हार्दिकैः धन्यवादैरशेषाशीर्वचोभिश्च सबहुमानं मुहुर्मुहुः संस्तूयतेऽस्माभिः । ग्रन्थोऽयं पाणिनीयशब्दार्थसम्बन्ध-सिद्धान्तः विज्ञानां शब्दतत्त्वस्य महते मोदाय कल्पतामिति कामनया विरम्यते ।

शुभाशंसी —
डा० बलदेवसिंहः
व्याकरण-भाषाविज्ञानप्राचार्यः, संस्कृतविभागे
हिमाचलप्रदेश-विश्वविद्यालये शिमलास्थे
हि० प्र०-१७१००५

शिमलातः
१४।१।१९८७ खीष्टाब्देषु

# ग्रन्थकारीयप्रस्तावना

## (क) शब्दशास्त्रस्य अनादिप्रवाहपरम्परा--

पाणिनीयं खलु शब्दानुशासनं सिद्धं शब्दम् अर्थं तयोश्च सम्बन्धं स्वीकृत्य[1] प्रवर्तते पाणिनीयेऽस्मिन् शब्दानुशासने शब्दतत्त्वस्य अर्थतत्त्वस्य तयोश्च सम्बन्धतत्त्वस्य मौलिकं स्वरूपं सूत्रकारेण वार्तिककारेण महाभाष्यकारेण अन्यैश्च व्याख्याकारैः सम्यक् समुद्घाटितम् । यतोऽनादिपरम्परातः अत्यन्त-सिद्धे शब्दार्थसम्बन्धे पाणिनीयमेतच्छब्दशास्त्रं प्रवर्तते, अतः आचार्यपाणिनितः पूर्वमपि शब्दशास्त्रस्य शब्दतत्त्वान्वेषणायाश्च प्रवृत्तिः सुस्पष्टमनुमीयतेऽभ्युपगम्यते च । स्वयं पाणिनिना आचार्येण स्वकीये अष्टके अनेके पूर्ववर्तिनो वैयाकरणाः सादरं संस्मृताः । आचार्यपाणिनिना संस्मृतेषु शाब्दिकेषु आचार्याः (क) शाकल्यः, (ख) काश्यपः, (ग) शाकटायनः, (घ) सेनकः, (ङ) आपिशलिः, (च) चाक्रवर्मणः, (छ) स्फोटायनः (ज) गालवः, (झ) भारद्वाजः, (ञ) गार्ग्यश्च ससम्मानं संगृहीताः ।[2] एतत् पाणिनितः पूर्ववर्तिनों शब्दशास्त्रस्य समृद्धपरम्परायाः सत्तां द्योतयति ।

---

१. सिद्धे शब्दार्थसम्बन्धे । अष्टा०, महाभा०, पस्पशा० ।

२. (क) सम्बुद्धौ शाकल्यस्येतावनार्षे । अष्टा० १।१।१६ ।
 (ख) तृषिमृषिकृशेः काश्यपस्य । अष्टा० १।२।२५ ।
 (ग) लङः शाकटायनस्यैव । अष्टा० ३।४।१११ ।
 (घ) गिरेश्च सेनकस्य । अष्टा० ३।४।११२ ।
 (ङ) वा सुप्यापिशलेः । अष्टा० ६।१।९२ ।
 (च) ई चाक्रवर्मणस्य । अष्टा० ६।१।९९ ।
 (छ) अवङ् स्फोटायनस्य । अष्टा० ६।१।१२३ ।
 (ज) तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य । अष्टा० ७।१।७४ ।
 (झ) ऋतो भारद्वाजस्य । अष्टा० ७।२।६३ ।
 (ञ) ओतो गार्ग्यस्य । अष्टा० ८।३।२० ।

## (ख) वैदिकवाङ्मये शब्दतत्त्वजिज्ञासाप्रवृत्तिः—

पाणिनीयैराचार्यैः प्रयुक्तान्वाख्यानं नाम व्याकरणं स्वीक्रियते। पाणिनिना अनादिप्रयोगपरम्पराप्राप्तानां शब्दानाम् अनुशासनमष्टकेन तन्त्रेण समारब्धम्, शब्दतत्त्वजिज्ञासा च समाहिता। शब्दतत्त्वजिज्ञासायाश्च अनादिपरम्परा वैदिकवाङ्मयादेव समुपलभ्यते। वैदिकदेवसंस्थासु वाचो हि महत्त्वपूर्णं स्थानं विद्यते। वैदिकचिन्तनायां मूलभूततत्त्वावधारणायां वाग् विद्यते विशिष्टा। वैदिकवाङ्मये आलङ्कारिकं वाक्तत्त्वाख्यानं विविधरूपेण समुपलभ्यते। क्वचिद्धि सृष्टिप्रक्रियासम्बद्धं वाक्तत्त्वाख्यानं दृश्यते। क्वचिच्च देवासुरसङ्ग्रामसम्बद्धं वाक्तत्त्वाख्यानमुपलभ्यते। अनेकत्र वाङ्मनः सम्बद्धं वाक्तत्त्वम् आख्यायते। भाषातत्त्वदृष्ट्या चानेकत्र मानववागिन्द्रियसम्बद्धं वाग्व्यापाररूपं वाक्तत्त्वं मन्त्रेषु समाख्यायते। विशेषतः ऋक्संहितायाः १।१६४, १०।७१, १०।१२५ चेति सूक्तत्रये उक्तं वाच आख्यानस्वरूपचतुष्टयं सुस्पष्टं द्रष्टुं शक्यते। तत्र ऋचः १।१६४-तमम् आस्यवामीयाभिधं सूक्तं समग्ररूपेण सृष्टिचक्रप्रवर्तनापरं विलोक्यते।

तत्र ऋक्संहितायाः १।१६४।२३ मन्त्रे 'देवैः विविधच्छन्दोव्याजेन वाणीयं संसृष्टेति सम्यगुपवर्णितम्[1]। ब्रह्मणः सृष्टिरियं यज्ञभूता संस्मर्यते। अस्मिन् सृष्टियज्ञे शब्दगुणकोऽयमाकाशो नाम मन्त्ररूपाया वाचो ब्रह्मा। पृथिव्याश्चान्तःयज्ञवेदिर्विद्यते। भुवनस्यास्य नाभिश्च वाग्रूपस्य मन्त्रस्य प्रयोगक्षेत्रमस्ति[2]। सृष्टिमूलभूताया अस्या वाचो हि चत्वारि सन्ति रूपाणि। वाक्तत्त्वविदो जानन्ति सम्यगेतानि। तत्र आद्यानि त्रीणि अव्यक्तानि सन्ति। चतुर्थी वाग् व्यक्ता भवति। तामेव व्यक्तां वाचं सामान्या जना विदन्ति वदन्ति च[3]।

ऋक्संहितायाः १०।७१ तमं सूक्तं बृहस्पतिसूक्तं वाचस्पतिसूक्तं वाऽभिधीयते। वैयाकरणा व्याकरणाध्ययनप्रयोजनं प्रतिपादयन्तः सूक्तादस्मात् प्रायः मन्त्रद्वयं (१०।७१।२, १०।७१।४ च) समुद्धरन्ति। अत्र सूक्ते वाचस्पतिः

---

१. गायत्रेण प्रतिमिमीते अर्कमर्केण साम त्रैष्टुभेन वाकम्।
वाकेन वाकं द्विपदा चतुष्पदाऽक्षरेण मिमते सप्त वाणी॥ ऋक्० १।१६४।२३।

२. इयं वेदिः परो अन्तःपृथिव्या अयं यज्ञो भुवनस्य नाभिः।
अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम॥ ऋक्० १।१६४।३५।

३. चत्वारि वाक् परिमिता पदानि, तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति, तुरीयं वाचो मनुष्या वदन्ति॥ ऋक्० १।१६४।४५।

बृहस्पतिर्वा ऋषिः ज्ञानदेवतां स्तौति। एतस्मिन्नेव सन्दर्भे परिशुद्धाया वाचः वैशिष्ट्यम् ऐश्वर्यञ्च उपस्थाप्यते। परिशुद्धा प्रयुक्ता अर्थवती वाग् अन्योन्य-मानवसंव्यवहाराय सफला भवति। सैव च छन्दस्वती वागभ्युदयाय कल्पते[1]। अन्तःप्रविष्टां तां छन्दस्वतीं वाचं वाग्यज्ञव्यापारः प्रकाशयति। तामेव अपगताप-शब्दसंस्काराम् अन्तर्वर्तनीं वाचमनुकुर्वाणा मनुष्याः स्वसामर्थ्यानुसारं विभिन्न-रूपां सम्पादयन्ति[2]। वागिन्द्रियप्रसूतायां तस्यां विलक्षणायां व्यक्तायां वाचि अपूर्वं सौन्दर्यं सन्तिष्ठते। तामपूर्वसौन्दर्यां वाचं दृष्ट्वाऽपि सामान्या जनाः केचन नैव पश्यन्ति, श्रुत्वाऽपि च नैव शृण्वन्ति। प्रकृति-प्रत्यय-प्रविभागरूप-शब्दानुशासनज्ञानवतां व्याकुर्वाणानां समक्षन्तु पत्ये रूपवती जायेव वाणीयं मनोहारिणी स्वकीयम् अलौकिकं रूपलावण्यम् उद्घाटयति[3]। यो हि शब्द-मर्थं तयोश्चाभिसम्बन्धं सम्यग् जानाति स एव वाग्योगविद् वाचं छन्दस्वतीं सन्दुह्य वेदार्थामृतं समश्नुते। परं यः खलु नैव शब्दं जानाति नापि अर्थ-तत्त्वमधिगच्छति, न च तयोः परस्परम् अभिसम्बन्धमेव वेत्ति, तस्य कृते तु एषा छन्दस्वती वाग् जीविताऽपि मृतेव व्यर्था। स ज्ञानराशिं दृष्ट्वा श्रुत्वा-ऽपि च नैव किञ्चिदवाप्तुं शक्नोति[4]।

ऋक्संहिताया १०।१२५ सूक्तं वाक्सूक्तं समाख्यायते। अस्मिन् सूक्ते वागियं समस्ततत्त्वस्य प्रेरिका, उद्भाविका, पालिका, संहारिका च वर्ण्यते। मन्त्रमयी वागेषा रुद्रैः वसुभिरादित्यैः विश्वदेवैश्च सह सञ्चरति सततम्। मित्रावरुणौ इन्द्रम् अग्निम् अश्विनीकुमारौ च संधत्ते वागियम्[5]।

संव्यवहारसाधना वागियं संयोजयति सर्वान् समन्ततः।
सर्वसम्पदां ज्ञानभण्डारस्य च वागेव मूलं निगद्यते।
प्रयोक्तृदेवैः वाचोऽनेकानि रूपाणि सम्प्रदत्तानि लोके।

---

१. सक्तुमिव तितउना पुनन्तो यत्र धीरा वाचमक्रत।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि॥ ऋक्० १०।७१।२

२. यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन् ऋषिषु प्रविष्टाम्।
तामाभृत्या व्यदधुः पुरुत्रा तां सप्तरेभा अभि संनवन्ते॥ ऋक्० १०।७१।३

३. उत त्वः पश्यन् न ददर्श वाचम्, उत त्वः शृण्वन् न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः॥ ऋक्० १०।७१।४

४. उत त्वं सख्ये स्थिरपीतमाहुः नैनं हिन्वन्त्यपि वाजिनेषु।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम्॥ ऋक्० १०।७१।५

५. अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा॥ ऋक्० १०।१२५।१

प्रयोगसामर्थ्यात् सर्वत्र प्रसृतत्वाद् वागियं व्यापिका विशाला च व्यजायत[1]। व्यावहारिकजगति वाक्प्रयोगस्य प्रभावः महत्त्वञ्च सुस्पष्टं दृश्यते । प्राणिषु मैत्री, घृणा, शत्रुता, वात्सल्यं चेत्येवं प्रभृतिगुणाः वाक्प्रयोग-बलेन निरन्तरमुत्पद्यन्ते । वाक्प्रयोगकौशलेन कश्चित् सुसंस्कृतो जायते, कश्चिच्चाशिष्टः कथ्यते, कश्चन समृद्धो जायते अन्यो विपन्नो भवति, एको-विजेता भवति अपरः पराजितो निगद्यते। विद्वान् मूर्खश्चापि वाग्बलादेव उच्यमानोऽवलोक्यते । वाग्व्यापारः सहस्रधा विश्वं व्याप्नोति । ऋक्संहितायां १।१३।९ सूक्तमन्त्रे वाचः "इळा, सरस्वती महीति त्रीणि रूपाणि वर्ण्यन्ते[2] ।" अन्यत्र ऋचि १०।११०।८ मन्त्रे महीत्यस्य स्थाने भारतीति नामोल्लेख उपलभ्यते[3]। इत्थं संहितासु वाक् सृष्टिप्रेरिका मानवव्यवहारसंसाधिका याज्ञिकविधिसम्पादिका च समुपवर्ण्यते ।

संहितानन्तरं वागियं ब्राह्मणारण्यकोपनिषत्सु विविधा अनेकधा च समा-ख्यायते । जैमिनीयब्राह्मणे ('२।२४२)ऐतरेय ब्राह्मणे (प्रपा० २५) कौशीतिकी-ब्राह्मणे १२।५।१४ २७।१।११) च वाक् प्रजापतेः सिसृक्षा सृष्टिप्रक्रिया वा निरूप्यते । सृष्टेरादौ वागेवासीदिति जैमिनीयब्राह्मणस्यैकस्मिन्नाख्याने निरूपितम् । वाग् यज्ञमनुष्ठितवती । तया प्रदत्ता आहुतयो द्वादशमासाः समजायन्त । तया पुनः सम्पादिते यज्ञे आहुतयः त्रिंशद्दिवसा बभूवुः । इत्थ-मेव संवत्सरोऽपि अजायत । अयं संवत्सर एव प्रथमो यज्ञः सम्बभूव ( जै० ब्रा० २।३६६), ऐतरेयब्राह्मणे (प्रपा० २५) एतदाख्यानं श्रूयते यत् प्रजापतिः पृथिवीम् अन्तरिक्षं दिवञ्चासृजत। क्रमशः पृथिव्या अग्निः, अन्तरिक्षाद् वायुः, दिवश्च आदित्य उदपद्यत । एते एव ऋचि यजुषि साम्नि च परिणताः । एतेषामेव त्रयाणां सारतत्त्वेन 'भूः भुवः स्वः' इति महाव्याहृतयः समुत्पन्नाः । 'अ, उ, म्' इति अक्षरत्रयेण एत एव क्रमशः समवगताः । वाचो विभिन्ना स्थितिः स्वरूपनिरूपणा च काठकब्राह्मणे १२।५।१४) शतपथब्राह्मणे (१४।६।१०।५-६, ३।६।२।२, २।१।४।३०, ४।६।९।१७) कौशीतिकीब्राह्मणे (२७।४) ताण्ड्यब्राह्मणे (४।९।६)अन्यत्र अनेकत्रापि च सम्यक् समुपलभ्यते ।

---

१. अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ॥ ऋक्० १०।१२५।३

२. इळा सरस्वती मही तिस्रो देवीर्मयोभुवः ।
बर्हिः सीदन्त्वस्रिधः ॥　　ऋक्० १।१३।९

३. आ नो यज्ञं भारती तूयमे त्विळा मनुष्वदिह चेतयन्ती ।
तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदन्तु ॥ ऋक्० १०।११०।८

भाषातत्त्वदृष्ट्या शतपथब्राह्मणे (१४।४।३।१०) वाचो महत्त्वपूर्णं स्वरूप-निर्वचनमुपस्थाप्यते। तत्र वाङ्मनः, प्राणतत्त्वानां ध्वन्युपलम्भकं त्रैवृत्त्यमुपवर्ण्यते। वाक् पृथिवीरूपा ऋग् विद्यते। अन्तरिक्षरूपं मनो यजुरस्ति। आकाशरूपाश्च प्राणाः सन्ति सामानि। छन्दस्वत्या वाचो ध्यानयोगसमधिगम्यत्वाच् चित्तवृत्तिनिरोधसापेक्षत्वाद्वा तत्र अनेकत्र वाङ्मनसोः मुहुर्मुहुराभिमुख्यमाख्यायते। तत्र शतपथब्राह्मणे (४।१।३।१६) व्यक्ताव्यक्तभेदेन वाग् द्विविधा निरूप्यते। व्यक्ता वाङ्मनुष्याणां भवति। अव्यक्ता च वाग् मनुष्येतराणां जायते। अव्यक्ता वागपि त्रिधा विद्यते। प्रथमरूपा अव्यक्ता वाक् सर्पस्य जन्तोः फूत्कारादिरूपा कीटादीनाञ्च झणत्कारादिरूपा च दृश्यते। द्वितीयकल्पा अव्यक्ता वाक् पक्षिणां कलरवरूपा, तृतीया चाव्यक्ता वाक् पशूनां रम्भणादिरूपा जायते। मनुष्याणां व्यक्ता वागपि साध्वसाधुभेदेन द्विप्रकारा भवति। प्राप्तसाधुभावा वाक् शिष्टा संस्कृता कथ्यते, अप्राप्तसाधुभावा च अशिष्टा असंस्कृता। सम्पन्ना अपि असाधुवाचः असंस्कृतभाषिणो वा पराजिता जायन्ते। साधुवाचः संस्कृतभाषिणो वा विपन्ना अपि शिष्टवाग्वैभवेन क्रमशः सम्पन्नाः सन्तः विजयिनो दृश्यन्ते। एषा मानवीया व्यक्ता परिष्कृता परिशुद्धा संस्कृता वागेव शिष्टैः समाद्रियते—

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि॥
ऋक्० १०।७१।२

## (ग) व्याकरणसम्प्रदायाः—

ब्राह्मणेषु आरण्यकेषु (ऐतरेया० ३।२।१) शाखाग्रन्थेषु च वर्णोच्चारणशुद्धतायै महान् प्रयत्नः समासादितः। एतदर्थमेव प्रातिशाख्येषु वर्णोच्चारणक्रमः सुस्पष्टं समाख्यातः। एतस्मिन्नेव सन्दर्भे नैरुक्तानाम् आचार्याणां पाणिनितः पूर्वभाविनां वैयाकरणानां महान् शब्दतत्त्वान्वेषणाश्रमः सततं श्लाघ्यो विद्यते। वागिन्द्रियसम्बद्धस्य अनुशासनीयस्य शब्दतत्त्वस्यायम् ऐतिहासिकः क्रमसन्दर्भः महानुपादेयो विद्यते। यथाऽस्माभिः पूर्वं निर्दिष्टं स्वयं पाणिनिना आचार्येण स्वकीये शब्दशास्त्रे अनेके पूर्ववर्तिनः शब्दशास्त्रिण आचार्याः यथाप्रसङ्गं सादरं संस्मृताः। यद्यपि अष्टके कण्ठतः पाणिनिना प्रमुखतमा दशसंख्याका एव आचार्याः सबहुमानं निर्दिष्टाः, तथापि 'उदीचामिञ्' ४।१।१५३ 'प्राचां ष्फस्तद्धितः' ४।१।१७, 'आदाचार्याणाम्' ७।३।४९, 'यजुष्येकेषाम्' ८।३।१०४, इतिसूत्रेषु 'उदीचाम्, प्राचाम् आचार्याणाम्, एके-

षाम्' इति सामान्यनिर्देशचतुष्टयेन समस्तभूमण्डलवर्तिनः स्वपूर्ववर्तिनः सर्वे वैयाकरणा एव सादरमुल्लिखिताः। आचार्यपाणिनितः पूर्वम् अनेके सम्मानिताः व्याकरणसम्प्रदायाः प्रचलिता आसन्। तेषु खलु इमे व्याकरणसम्प्रदायाः प्रमुखतमाः ख्याताः—

१. ऐन्द्रव्याकरणसम्प्रदायः,
२. शाकटायनव्याकरणसम्प्रदायः,
३. गार्ग्यव्याकरणसम्प्रदायः,
४. आपिशलव्याकरणसम्प्रदायः,
५. शाकल्यव्याकरणसम्प्रदायः,
६. काशकृत्स्नव्याकरणसम्प्रदायः,
७. भारद्वाजव्याकरणसम्प्रदायः,
८. गालवव्याकरणसम्प्रदायः,
९. काश्यपव्याकरणसम्प्रदायः,
१०. पौष्करसादिव्याकरणसम्प्रदायः।

पाणिनीयं हि नाम सर्वपार्षदं व्याकरणमिति अभियुक्तैः सबहुमानं निरूप्यते। अत्र सर्वचरणानां कृते सर्वे वैदिका लौकिकाश्च शब्दा अन्वाख्यायन्ते। पाणिनीयमेतन्नैव केवलं प्रातिशाख्यं नापि क्षेत्रियं व्याकरणम्। पाणिनीयस्य गौरववैशिष्ट्यादेव अन्ये सर्वे व्याकरणसम्प्रदायाः नामशेषा एव सम्बभुवुः।

## (घ) पाणिनीयव्याकरणे शब्दस्वरूपम्—

पाणिनीये व्याकरणे अभिप्रेतस्य शब्दार्थसम्बन्धस्य विषये स्वयं पाणिनिना मुनिना कण्ठतः स्वसिद्धान्तो निर्दिष्टः। पाणिनीया अष्टाध्यायी सूत्रशैली-निबद्धा एका विशिष्टा कृतिर्विद्यते। स्थूलदृष्ट्या प्रत्यक्षतः तत्र शब्दार्थयो-र्विषये सैद्धान्तिकं प्रतिपादनं नैवावलोक्यते। ज्ञापनादिपद्धतिकौशलेन आचार्यः स्वकीयं मन्तव्यं प्रकटयति सर्वत्र। पाणिनीयाष्टकस्य वार्तिककारैः भाष्यकारैः वाक्यपदीयकारैः टीकाकारैश्च पाणिनीयशब्दार्थसम्बन्धसिद्धान्तः सुगमतया सुस्पष्टं ज्ञातुं शक्यते। विशिष्टरचनापद्धतिवशाद् अष्टाध्याय्याः आन्तरिक-सङ्गत्या अभिव्यक्तिकौशलेन च सूत्रेषु पाणिनीयतन्त्रे अभिप्रेतः शब्दार्थ-सम्बन्धसिद्धान्तः अन्वेष्टुं शक्यते।

उदाहरणार्थमत्र पाणिनीयेषु सूत्रेषु निर्दिष्टम् अभिप्रेतं शब्दतत्त्वम् अर्थ-तत्त्वञ्च समुपस्थाप्यते। शब्दतत्त्वसम्बद्धानि चत्वारि सूत्राणि पाणिनिना आचार्येण प्रणीतानि—

१. स्वं रूपं शब्दस्याशब्दसञ्ज्ञा। (अष्टा० १।१।६८)
२. वचोऽशब्दसञ्ज्ञायाम्। (अष्टा० ७।३।६७)

३. शब्दवैर-कलहाभ्रकण्वमेघेभ्यः करणे । (अष्टा० ३।१।१७)
४. व्यक्तवाचां समुच्चारणे । (अष्टा० १।३।४८)

'अग्नेर्ढक्' (४।२।३३) इत्यादिविधिस्थलेषु अग्नीतिस्वरूपस्य तत्पर्यायाणाञ्च ग्रहणे सम्प्राप्ते अनियमे नियमार्थं खलु 'स्वं रूपं शब्दस्याशब्दसञ्ज्ञा' इत्येतच्छास्त्रं पाणिनिना समारभ्यते। 'अग्नेर्ढग्' इत्यत्र पाणिनिना या अग्नीति व्यक्तिरुच्चारिता, तस्याः सर्वोच्चारणेष्वनुगतं रूपसामान्यं गृह्यते। अष्टाध्याय्यां शब्दशब्दः पारिभाषिके अपारिभाषिके चार्थे प्रयुज्यते। परं विधिस्थलेषु शब्दशास्त्रीय-पारिभाषिकसञ्ज्ञां विहायान्यत्र गृहीतशब्दस्य नैजं भाषिकमेव स्वरूपं गृह्यते। सूत्रेऽस्मिन् शब्दपदं शब्दतत्त्वस्य पारिभाषिकेऽर्थे प्रयुज्यते। इत्थमेव 'वचोऽशब्दसञ्ज्ञायाम्' इत्यत्र अशब्दसञ्ज्ञायां वचेः वाच्यमिति निष्पाद्यते। परं शब्दसञ्ज्ञायान्तु वचेर्वाक्यमित्येव निष्पद्यते। उभयत्रापि सूत्रे प्रयुक्तं शब्दपदम् अर्थाभिधानसमर्थे प्रतीतपदार्थके मानवीयवाक्तत्त्वार्थे विद्यते। उद्धृतसूत्रद्वयगत-शब्दपदध्वनितम् एतदेव तथ्यं भाष्यकारः पतञ्जलिः "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति, स शब्दः।" इति ग्रन्थेन प्रस्तौति।

परं 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे।' (३।१।१७) इति सूत्रे प्रयुक्तः शब्दशब्दः प्रतीतपदार्थकाप्रतीतपदार्थकसामान्यं श्रवणेन्द्रियग्राह्यं ध्वनिमात्रं सङ्केतयति। अत्र सूत्रे प्रयुक्तस्य शब्दशब्दस्य अर्थाभिधानसमर्थः प्रतीतपदार्थकः मानवीयवाक्तत्त्वविशेषः अभिप्रायो नास्ति। "व्यक्तवाचां समुच्चारणे' (१।३।४८) इति सूत्रेण आचार्यो व्यक्ताव्यक्तयोः वाचोः परस्परं भेदं प्रस्तौति। सुस्पष्टवर्णात्मकत्वाद् अर्थावगतिहेतुत्वाच्च मनुष्याणां वाग् व्यक्ता भवति। सा व्यक्ता मनुष्यवाग् व्यक्ततरा व्यक्ततमा चापि वक्तुं शक्यते। मनुष्येतराणां वागव्यक्ता भवति। तत्र अव्यक्तातिशयतादृष्ट्या अव्यक्ततरा अव्यक्ततमा चेत्यपि निर्देष्टुं शक्यते। शतपथब्राह्मणे (४।१।३।१६) चापि व्यक्ताव्यक्तयोः वाचोरेष आन्तरिकभेदक्रमः सुस्पष्टं समुपवर्णितः। यद्यपि शुक-शारिका-कुक्कुटादीनां रुतेष्वपि "अस्येदं रुतमिति" स्वरूपेण व्यक्तता प्रतीयते, तथापि पुरुषप्रयत्नवशेन क्वाचित्केऽस्पष्टतो व्यक्तत्वाभासेऽपि न तत्र स्पष्टतः वर्णात्मकत्वबोधः इति न तत्र स्वाभाविकं व्यक्तत्वं कथञ्चिदपि वक्तुं शक्यते। मनुष्येतराणां पश्वादीनां ध्वनिप्रवृत्तिस्तु काम-क्रोध-लोभ-मोह-बुभुक्षा-भीति-प्रभृतिसंवेगमात्रसहकृता भवति न तु अर्थप्रतिपादनेच्छाविशिष्टविवक्षावशात्। तत्र व्यक्तायां मानववाचि अपि साध्वसाधु-शब्दविवेकः प्रस्तूयते। साधुशब्दानाम् अनुशासनं पाणिनीयेन ,तन्त्रेण आवि-

ष्क्रियते। विवक्षातः शब्देषु प्रवृत्तौ साधुभिरेव शब्दैः भाषितव्यं नासाधुभिः शब्दैरिति विद्यते पाणिनीयशब्दसिद्धान्तः।

## (ङ) पाणिनीयव्याकरणे अर्थस्वरूपम्—

अर्थतत्त्वसम्बद्धं सूत्रद्वयं पाणिनिना इत्थं प्रणीतम्—

१. अर्थवदधातुरप्रत्ययः प्रातिपदिकम्। (अष्टा० १।२।४५)

२. प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्। अष्टा० १।२।५६।
इति च :

अर्थवदिति सूत्रे प्रयुक्तः अर्थशब्दो नास्ति प्रयोजनवचनः, नैव च निवृत्तिवचनः, नापि धनवचनः। अपि त्वयम् अर्थशब्दः अभिधेयवचन आचार्येण सूत्रे प्रयुक्तः। अभाव-शशविषाणादीनां शब्दानां बहिःसत्ताकस्यार्थस्य अनुपलम्भादत्र सन्दर्भे बुद्ध्युपारोहरूप एवार्थः शब्दप्रयोगे कारणं स्वीक्रियते। बुद्धिबोध्यः शब्दव्यापारगम्यः अभिधेयार्थ आन्तरः शाब्दः कश्चिदन्यो भवति, चक्षुरादिगम्यश्च बाह्यार्थः कश्चिदन्यः। अत्र अर्थवदिति सूत्रे प्रयुक्तेन अर्थशब्देन नैवासौ बाह्यार्थो लक्षितः, अपि तु ततोऽतिरिक्तो बौद्धोऽभिधेयार्थः। आन्तरः शाब्दोऽभिधेयार्थः बाह्यार्थेन संवादी एव स्यादिति आवश्यको न भवति। सर्वथा बाह्यार्थशून्योऽपि बौद्धो भाषिकोऽभिधेयार्थः शब्दैरभिधीयते। यदि बहिः सन्तमेवार्थं शब्दा अभिदधति तदा 'घटोऽस्ति, घटो नास्ति' इत्येवं प्रयोगो नोपपद्यते। एकत्र पौनरुक्त्यादपरत्र च विरोधात्। बुद्ध्युपारूढस्य बहिः सत्त्वासत्त्वस्य प्रतिपादनाय तु उपपद्यते खलु उक्तः प्रयोगः सुतराम्। एवमेव "अपाक्षीत्, पक्ष्यति, एषां सूत्राणां शाटकं वय" इत्यादिप्रयोगेष्वपि बुद्ध्युपारूढ एव पच्यादीनामर्थः विद्यते, न तु शब्दप्रयोगकाले खलु बाह्यार्थसिद्धिः दृश्यते। इत्थमत्र बाह्यार्थमुपेक्ष्य आन्तरं बौद्धमभिधेयार्थं शब्दानाम् आचार्यो द्योतयति अर्थवदितिसूत्रेण। चक्षुरादिग्राह्यं बाह्यार्थमभिलक्ष्य आचार्यः "प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्।"(१।२।५६) इति सूत्रेण प्रधानप्रत्ययार्थव्यवस्थां निराकरोति। यतः चक्षुरादिग्राह्यो बहिःसत्ताकोऽर्थः व्याकरणस्य विषयो नास्ति, अतः शब्दानुशासनविषयबहिर्भूतत्वात्तत्र लोकत एव प्रधानप्रत्ययार्थव्यवस्था सम्पादनीया भवति। व्याकरणन्तु केवलं बौद्धाभिधेयार्थविषयकं विद्यते। शब्दार्थयोः परस्परं कार्यकारणभावादिसम्बन्धबोधेन निरन्तरम् अभ्यासेन योग्यतया च शब्दाभिधेयार्थविषयको बौद्धः संस्कारः परिपक्वो जायते। इत्येवं शब्दाभिधेयार्थबोधको बौद्धसंस्कार सहकृतो भवति वाग्व्यापारः। बाह्यार्थग्राहकं च भवति चक्षुरादिबाह्येन्द्रियं मनश्चान्तरिन्द्रियम्। इत्थमर्थस्य बुद्ध्युपारोहः खलु पाणिनीयार्थसिद्धान्तः अभ्युपेयः।

## (च) पाणिनीयव्याकरणे सम्बन्धस्वरूपम्—

पाणिनीयेऽस्मिन् शब्दानुशासने अभिधायकात्मनामित्येन शब्देन अभिधेयात्मनः नित्यस्य बौद्धस्य अर्थस्याभिधाने शब्दार्थयोः परस्परं योग्यतालक्षणाख्यः कार्यकारणभावलक्षणाख्यश्च नित्यः सम्बन्धः स्वीक्रियते । अन्यथा सर्वेण शब्दजातेन सर्वस्यैव अर्थजातस्य प्रत्यायनापत्तिप्रसङ्गः समापद्येत । अतो येन शब्देन यस्मिन्नर्थे योग्यतया कार्यकारणभावेन वा गृहीतसम्बन्धो भवति श्रोता, स तेन शब्देन तस्मिन्नर्थे विज्ञातावबोधो जायते । नियतेन शब्देन नियतस्यार्थस्य प्रत्यायकोऽयं शब्दार्थयोः सम्बन्धः परम्परासिद्धः अनादिर्नित्यः प्राप्ताविच्छेदः स्वभावसिद्धो भवति । धातु-प्रातिपदिक-प्रत्यय-निपातानामर्थादेशनस्य कर्तुमशक्यतां प्रदर्श्य पतञ्जलिराचार्यः समर्थसूत्रवार्तिकभाष्ये शब्दार्थयोः सम्बन्धस्य स्वभावसिद्धतां निर्दिदेश —

"अर्थादेशनात् । तच्च लघ्वर्थम् । को हि समर्थो धातुप्रातिपदिकप्रत्ययनिपातानामर्थानादेष्टुम् ।" (महाभा० २।१।१)

इन्द्रियविषयवद्वा प्रकाश्यप्रकाशकभावेन समयोपाधियोग्यता शब्दार्थयोः सम्बन्ध आचार्यैः प्रस्तूयते । यथा चक्षुरिन्द्रियं रूपस्य विषयस्य प्रकाशकं विद्यते तथा खलु अभिधायकः शब्दः अर्थस्य प्रकाशको भवति, अर्थश्चासौ प्रकाश्यः । इत्येवं शब्दार्थयोः पाणिनीयसम्बन्धसिद्धान्तो निरूपितः ।

## (छ) पाणिनीयप्रसारपरम्परा—

पाणिन्युपज्ञं पाणिनीयमिदं शब्दशास्त्रं त्रिमुनि व्याकरणमभ्युपगम्यते । मुनित्रये च पाणिनिकात्यायन-पतञ्जलयः परम्परातः परिगण्यन्ते प्रामाणिकैः । तत्रापि मुनित्रये यथोत्तरं मुनीनां प्रामाण्यं स्वीक्रियते । पाणिनि-प्रणीतानि सूत्राणि, कात्यायनकृतानि वार्तिकानि, पतञ्जलिप्रणीतञ्च महाभाष्यं पाणिनीयस्य शब्दार्थसम्बन्धसिद्धान्तस्य मूलाधारो विद्यते । मुनित्रयग्रन्थसाहाय्यं विना कथमपि पाणिनीयशब्दार्थसम्बन्धसिद्धान्तः निर्णेतुं नैव शक्यते । कात्यायनवार्तिकानामाधारभूतानि सन्ति पाणिनीयानि अष्टाध्यायीसूत्राणि । सूत्रवार्तिकानि च समाश्रित्य पतञ्जलिना प्रणीतं महाभाष्यं नाम पाणिनीयव्याकरणव्याख्यानम् ।

पतञ्जलिमुनेः महाभाष्यनिर्माणात् प्रागस्य पाणिनीयस्य व्याकरणस्य उपपत्त्योपोद्वलकोऽनुष्टुभा श्लोकलक्षपरिमितः सङ्ग्रहनामा वैयाकरणदाक्षायणव्याडिना विरचितोऽभियुक्तैः भृशं चर्चितो व्याकरणागमप्रतिपादनपरो

महानिबन्धः आसीत् । अस्मिन् सङ्ग्रहाभिधाने महाग्रन्थे कात्यायनवार्तिकैर्विनैव केवलानि पाणिनीयानि सूत्राण्येव समाश्रित्य व्याकरणस्य न्यायबीजानि तत्त्वानि दर्शनानि च व्याडिना महता कौशलेन दर्शनीयतया च सम्यक्प्रतिपादितानि । यथा भर्तृहरिः स च सङ्ग्रहनामा आगमनिकायग्रन्थः क्लेशभीरुत्वात् संक्षेपरुचीन् स्वल्पविद्यापरिग्रहान् वैयाकरणान् सम्प्राप्य अस्तमुपागतः ।

पाणिनीयोपकारके व्याडिसङ्ग्रहे परिसमाप्ते व्याकरणस्यानेकेषां च दर्शनानाञ्च आगमविशेषान् व्याख्यातुकाम. पतञ्जलिराचार्यः पाणिनीयसूत्रैः सह कात्यायनवार्तिकव्याख्यानपुरःसरमर्थतोऽगाधमपि शब्दसौष्ठवेन श्रोतृचित्ताकर्षकं महाभाष्यं नाम महाग्रन्थं प्रणिनाय । सङ्ग्रहेऽस्तमुपागते यद्यपि सङ्ग्रहानुसारेणैव भगवता पतञ्जलिना संक्षेपरुचीनां शीघ्रव्याकरणबोधकामानाञ्च कृते सङ्ग्रहसंक्षेपभूतमेव महाभाष्यं ग्रन्थरत्नमुपरचितं तथापि गुरूपदेशानुगतशास्त्राभ्यासजनितव्युत्पत्तिवैकल्यानामकृतबुद्धीनां निर्णयपर्यन्तो बोधो नैवाजायत महाभाष्ये । शुष्कतर्कमात्रानुसारिणः वैजि-सौभव-हर्यक्षादयः सङ्ग्रहप्रतिकञ्चुकं ग्रन्थम् आर्षं पातञ्जलं पाणिनीयमहाभाष्यम् आभासीकृत्य विनाशितवन्तः । महाभाष्यव्याकरणागमोऽयं पतञ्जलेः सम्प्रदायव्यवच्छिन्नः दुर्बलेभ्यः पतञ्जलिशिष्येभ्यः भ्रष्टः सन् दाक्षिणात्ये ग्रन्थमात्रे व्यवस्थितो जातः । तदेवमुत्सन्नकल्पः खलु पाणिनीयो व्याकरणागमः सञ्जातः ।

यथैकानुश्रुतिः लङ्कावस्थितत्रिकूटपर्वतैकदेशत्रिलिङ्गपर्वतैकदेशात् खलु चन्द्राचार्य-वसुरातगुरुप्रभृतिभिः पतञ्जलेः महाभाष्यं पुनः लब्ध्वा महाभाष्यावस्थितन्यायबीजानुसारेण पुनरपि व्याख्याय गुरुशिष्यसम्प्रदायप्रवर्तनेन बहुशाखत्वं समानीतम् । भर्तृहरिगुरुः आचार्यः वसुरातः मूलभूतव्याकरणागमे महाभाष्ये ज्ञातान् न्यायप्रस्थानमार्गान् पाणिनीये शब्दार्थसम्बन्धसिद्धान्ताञ्चाभ्यस्य परमवात्सल्येन अध्याप्य भर्तृहरिमाचार्यं वाक्यपदीयरूपं काण्डत्रयात्मकम् आगमसङ्ग्रहं प्रणेतुं समादिष्टवान् । एवञ्च वाक्यपदीये लब्धप्रतिष्ठे आगमग्रन्थे शब्द-वाक्य-पदविषये स्वसिद्धान्तपरसिद्धान्तवर्तिनां पदार्थानां युक्तायुक्तविचारनिर्णीतिः सम्पादिता आचार्येण भर्तृहरिणा । महाभाष्यानन्तरं नूनं वाक्यपदीयं पाणिनीयगौरवाधायकं ग्रन्थरत्नम् ।

पाणिनीयेषु सूत्रेषु कात्यायनवार्तिकेषु च,
पतञ्जलेः महाभाष्ये शब्दानुशासनागमे ।

वाक्यपदीयसद्ग्रन्थे नूनं भर्तृहरेस्तथा,
विनष्टे सङ्ग्रहे चापि पाणिनीयं प्रतिष्ठितम् ।। (ग्रन्थकृतः)

भर्तृहरेराचार्यस्यानन्तरमपि भृशं समृद्धा सुबद्धा च पाणिनीयशब्दानुशासनपरम्परा । स्वयं भर्तृहरिः दीपिकया महाभाष्यं स्वोपज्ञया च वाक्यपदीयमप्यटीकत । वृषभदेवेन पुण्यराजेन च विदुषा पद्धत्याख्यया प्रकाशाख्यया च व्याख्यया वाक्यपदीयं प्रस्फुटितार्थं सम्पादितम् । साम्प्रतं चरमाश्रमे जीवनस्य वर्तमानो विद्यावयोवृद्ध आचार्यो बहुमानो राष्ट्रपतिसम्मानितो रघुनाथशर्मा अम्बाकर्त्रीनामिकया टीकया गूढार्थं सटीकमपि वाक्यपदीयं विशदार्थं विहितवान् । हरिबद्धसारग्रन्थसेतुना अतिगम्भीरभाष्याब्धि सन्तर्तुं कैयटः प्रदीपटीकां रचयामास । कैयटप्रदीपं प्रस्फुटितार्थं कर्तुकामो नागेशभट्ट उद्द्योताख्यां टीकां निर्मितवान् । पाणिनीयार्थविद् असौ आचार्यनागेशभट्टः पाणिनीयशब्ददर्शनागमग्रन्थं वैयाकरणसिद्धान्तमञ्जूषानामकं निर्मितवान् । अस्यैव महाग्रन्थस्य संक्षिप्तरूपं वैयाकरणसिद्धान्तलघुमञ्जूषा वैयाकरणसिद्धान्तपरमलघुमञ्जूषा चानेनैव विदुषा सम्पादिता । भट्टोजीदीक्षितकृताया वैयाकरणसिद्धान्तकौमुदीटीकाया मनोरमाया बृहच्छब्देन्दुशेखराख्यां टीकामपि महत्त्वपूर्णां नागेशभट्टो रचयामास । अस्या एव टीकायाः संक्षिप्तरूपं लघुशब्देन्दुशेखराख्यमपि समुपलभ्यते लब्धप्रतिष्ठम् ।

श्रीभोजः शृङ्गारप्रकाशे शब्दब्रह्म-स्फोट-प्रतिभादिविषये भर्तृहरितः स्ववैमत्यमाविष्कृतवान् । पुरुषोत्तमदेवः भाषावृत्तिं कारकचक्रञ्च, माधवाचार्यः सवर्दर्शनसङ्ग्रहम्; शेषश्रीकृष्णः शब्दाभरणम्, स्फोटतत्त्वनिरूपणम्, भट्टोजीदीक्षितः वैयाकरणसिद्धान्तकौमुदीम्, वैयाकरणभूषणकारिकाम्, शब्दकौस्तुभम्; कौण्डभट्टश्च वैयाकरणसिद्धान्तभूषणकारिकायाः टीकाग्रन्थं वैयाकरणभूषणसाराख्यं च निर्मितवान् । जगदीश-गिरिधर-भरतमिश्र-कृष्णमित्र-हरिदीक्षित-रामाज्ञापाण्डेय-कृष्णभट्टाश्चेत्येवंप्रभृतय आचार्याः पाणिनीयशब्दार्थसाधकाः विख्यातैः स्वग्रन्थैः पाणिनीयमुपकृतवन्तः । वर्तमानयुगेऽपि रामाज्ञापाण्डेयः व्याकरणदर्शनभूमिकां व्याकरणदर्शनपीठिकाञ्च उपस्थाप्य पाणिनीयं शब्दार्थसिद्धान्तं समाचष्ट ।

आधुनिकयुगे संस्कृतेतरभाषास्वपि पाणिनीयमधिकृत्य अनेकैर्विद्वद्भिः अनेके ग्रन्था विरचिताः । डॉ० गौरीनाथशास्त्री 'द फिलासाफी आफ वर्ड एण्ड मीनिङ्ग' इति आङ्गलभाषायां शब्दार्थदर्शनमुपस्थाप्य भर्तृहरिसम्मतं शब्दार्थसिद्धान्तं व्याख्यातवान् । हिन्दीभाषायां डॉ० कपिलदेवद्विवेदी "अर्थविज्ञान और व्याकरणप्रदर्शन" इति ग्रन्थं निर्माय पाणिनीयशब्दार्थदर्शनविषयकं

स्ववैदुष्यवैभवम् उपस्थापितवान्। डॉ० पी० सी० चक्रवर्ती चापि पाणिनीय-मनीषी "द फिलासफी आफ संस्कृतग्रामर" इति सम्मानितेन आङ्गलभाषा-ग्रन्थेन स्वमनननिष्कर्षमुद्घाटितवान्। डॉ० सत्यकामवर्मा वाक्यपदीयगतं भाषातत्त्वमुपलक्ष्य हिन्दीभाषाया "भाषातत्त्व और वाक्यपदीय" इति नामकं परम्परावैमत्यान्वितं स्वग्रन्थं सम्प्रकाशितवान्। शब्दतत्त्वविदुषी डॉ० एम० बियार्दोनाम्नी वाक्यपदीयं तट्टीकाश्च सम्यगधीत्य वाक्यपदीयगतां हरिवृषभ-वृत्ति फ्रान्सीसी भाषायामनूदितवती। पाणिनीये शब्ददर्शने विशेषतो वाक्य-पदीये कृतभूरिपरिश्रमः डॉ० के० ए० सुब्रह्मण्योऽय्यरो महता श्रमेण श्रद्धा-वैभवेन च प्राचीनटीकासन्दर्भे वाक्यपदीयाध्ययनमिति विषयको ग्रन्थ आङ्गल-भाषायां सम्प्रस्तुतवान्। कालान्तरे ग्रन्थस्यास्य हिन्दीभाषायां 'भर्तृहरि' इति नाम्ना अनुवादोऽपि डॉ० रामचन्द्रद्विवेदिना विहितः। पाणिनीयमनीषिणा डॉ० विद्यानिवासमिश्रेण साम्प्रतिक-भाषातत्त्वशास्त्रदृष्टचा पाणिनीयं सम्यक् समुपस्थापितम्। ग्रन्थस्यास्यान्ते विदुषामनुग्रहार्थिभिरस्माभिः प्राचीनार्वा-चीनानाञ्चाचार्याणामेका सादरं संस्मृतिः समर्पिता प्रथम-तृतीय-चतुर्थ-परिशिष्टेषु।

**अयं ग्रन्थः—**

ममायं 'पाणिनीयशब्दार्थसम्बन्धसिद्धान्तः' इतिनामा ग्रन्थो यद्यपि १९६३ ख्रीष्टाब्दत एव विषयेऽस्मिन् अनुसन्धातुं सर्वात्मना संलग्नेन मया १९६६ ख्रीष्टाब्दे लिखितुं समारब्धः, १९६८ ख्रीष्टाब्दे च पूर्णताङ्गतः। मम साधना-भावदौर्भाग्याच्च बहुविलम्बेनाद्य १९८७ ख्रीष्टाब्दे प्राकाश्यं नीयते, अस्मिन् महति कालिके अन्तराले पाणिनीयेऽस्मिन् सन्दर्भे बहुभिः विद्वद्भिः बहवो ग्रन्थाः सम्प्रकाशिताः तथापि प्रस्तुतेऽस्मिन् ग्रन्थेऽस्माभिः प्रतिपादिते पाणिनीयसैद्धा-न्तिकतथ्यविषयेऽद्यापि तेभ्यो ग्रन्थप्रयत्नेभ्यः प्रयत्नस्यास्य स्वकीयं पार्थक्यं विद्यते।

अस्मन्मते समग्रेऽपि वैदिकलौकिकसंस्कृत-वाङ्मये केवलं पाणिनिरेव तत्रभवान् पार्षदवासनाशून्यः शाब्दिकः। 'यच्छब्द आह तदस्माकं प्रमाणमि'-ति भाषातत्त्वैकदृष्ट्यैव साम्प्रदायिकसंस्कार-विवर्जितः पाणिनिराचार्यः शब्दानुशासनाय शब्देषु सम्प्रवर्तते। अन्यशाब्दिकमतस्य प्रत्याख्याने समर्थने वा प्रमाणभूतस्य आचार्यस्य पाणिनेरियमेव तात्त्विकी दृष्टिः विद्यते सर्वत्र। पाणिनीयस्य व्याख्यातुः कात्यायनस्य पतञ्जलेः भर्तृहरेर्वाचार्यस्यापि इयं तात्त्विकी दृष्टिः नैव क्वचिदपि संलुप्ता। पाणिनीयस्य सर्वातिशायि सुमहद् वैशिष्ट्यं पार्थक्यञ्चान्येभ्यः खल्वेतत्। प्रस्तुते ग्रन्थेऽस्मिन् एतदर्थमस्माभिः

सर्वात्मना सम्प्रयतितम् ।

आचार्य-जयादित्य-वामनाभ्यां परवर्तिभिः आचार्यैः प्रायः एतत् पाणिनीयं वैशिष्ट्यं विस्मृतम् । शब्दतत्त्वनिरूपणासन्दर्भे प्रायः परवर्तिषु आचार्येषु क्वचित् तन्त्रशास्त्रीयवासनाप्रभावः क्वचिच्चाद्वैतवेदान्तसंस्कारः परिलक्ष्यते । क्वचिच्चान्यत्र अन्यशास्त्रीयप्रभावश्चापि द्रष्टुं शक्यः । पाणिनेः गणितात्मिका सूत्रभाषाशैली तु भाषातत्त्वदृष्ट्या केवलां शब्दभावनां प्रस्तौति । पाणिनीयशब्दार्थसम्बन्धसिद्धान्तनिर्णये नितरां सा पार्षदवासनाशून्या पाणिनीया दृष्टिरपेक्षते । २ । २ । १७८६ दिनाङ्के श्रीमतो जोन्सवर्यस्य उद्बोधनाद् अनन्तरं यद्यपि अल्पेनैव कालेन कृतश्रमैः पाश्चात्त्यैः विद्वद्भिः प्रभूतं बहिरङ्गं पाणिनीयं वाङ्मयमुपस्थापितम्, तथापि प्रायो विषयभेदान्नैव तत् प्रायोऽस्माकं विचारविषयम् । अत्र ग्रन्थे पाणिनीयसम्बद्धं प्रायः अन्तरङ्गमेव वाङ्मयम् (अष्टकेन साक्षात् सम्बद्धम्) अस्माभिः चर्चितम् । विश्रुतयशसां तेषां पाश्चात्त्याचार्याणां वैदुष्यवैभवं प्रति विनीतस्य मम कथञ्चिदपि अन्यथाभावो नैव कल्पनीयः ।

तदेवमस्मिन् पाणिनीयसम्प्रदायसंरम्भसन्दर्भे 'पाणिनीयशब्दार्थसम्बन्धसिद्धान्तः' इति ग्रन्थेन मया पाणिनीयशास्त्रसन्दोहः पाणिनीयशब्दार्थसम्बन्धसिद्धान्तः विदुषां विशेषज्ञानां समक्षं सादरं समुपस्थापितः शब्दब्रह्मार्थसिद्धये । प्रस्तावनातोऽव्यवहितमेवाऽस्माभिः ग्रन्थस्यास्य सारभूतः ग्रन्थकृत्प्रवृत्तिरिति शीर्षकेण पाणिनीयशब्दार्थसिद्धान्तविषयकः कारिकासन्दर्भः पाणिनीयात्मभिः सम्प्रदत्तो विदुषामनुग्रहार्थिभिः ।

## (ऋ) पाश्चात्त्ये जगति भाषाविज्ञानपरम्परा—

अनादि-निधना वैदिकसंहितावाक् संस्कृता विश्वस्य आदिभाषा स्वीक्रियतेऽभियुक्तैः । वैदिकसंस्कृतायां लौकिकसंस्कृतायाञ्च वाचि विकृतिसुरक्षार्थं पुरा भारते वर्षे ऋषिभिराप्तैः सुमहान् प्रयत्नः समासादितः । विवक्षातः शब्देषु प्रवृत्तौ वक्तृत्वदौर्बल्यादुच्चारणवैकल्याच्च स्वभावतोऽपशब्दप्रवृत्तेः दुर्निवारत्वात् साधुशब्दप्रयोगपरम्परापरिरक्षणार्थं सुमहतः शास्त्रीयप्रयासस्य वाक्ये पदे ध्वनौ चापेक्षा आचार्यैः साक्षात्कृतधर्मभिरनुभूता । एतदर्थमेव प्रतिशाखं प्रतिचरणं वा प्रातिशाख्यग्रन्थपरम्परा शिक्षाग्रन्थपरम्परा च गुरुशिष्यपरम्परया सुबद्धं प्रचलिता । एतेषु शैक्षिकसम्प्रदायपरम्परासन्दर्भेषु एव ऋषिभिराचार्यैश्च प्रातिशाख्येषु शिक्षाग्रन्थेषु निघण्टुनिरुक्तेषु व्याकरणादिषु च वाक्यविज्ञानं, भाषाविज्ञानं शब्दानुशासनं पदविज्ञानं ध्वनिविज्ञानञ्चेत्येवंप्रभृतीनि भाषातत्त्वसम्बद्धानि शास्त्राणि आविष्कृतानि प्रतिपादितानि व्याख्यातानि च । एतस्य सुमहतोऽध्यवसायस्यैवायं सुपरिणामो यद्यापि

एतावति सुमहति काले समतीतेऽपि वैदिकसंहितानाम् अन्येषाञ्च संस्कृत-ग्रन्थानां यथाशास्त्रं शिष्टोच्चरितं यथावच्छब्दस्वरूपं सर्वथा शुद्धं सुरक्षित-मद्यापि ।

जगति संस्कृतवाचोऽन्यत्र वाक्षु तद्वाङ्मयेषु च नैतादृशः कश्चन भाषा-शास्त्रीयप्रयासः अद्यावधि क्वापि कदाचिदपि दृष्टिपथमायातः । नूनं तदानीं संस्कृतवागतिरिक्ता अन्ये वाग्विशारदाः अनधिगतभाषातत्त्वज्ञानरहस्या भ्रान्ता वा आसन् । अष्टादशशतं ख्रीष्टाब्दात्पूर्वं पाश्चात्ये जगति भाषा-तत्त्वसम्बन्धी कश्चन तलस्पर्शी विवेको नावलोक्यते । संस्कृतभाषां पाणिनी-यञ्च संविज्ञायैव पाश्चात्त्यैः विद्वद्भिः ग्रीकलातिनीभाषयोः परस्परं कश्चन भाषातात्त्विकः सम्बन्धः सुविज्ञातः । अष्टादशशतख्रीष्टाब्दानन्तरं स्वल्पेनैव कालेन संस्कृता भाषा यूरोपे विश्वे च पुनः सम्प्रसृता । ततश्च विज्ञैः संस्कृतसजातीयानां भारोपीयानां संस्कृतानुजानां संस्कृतसहजानाञ्च भाषाणां वर्गभेदाः समाश्रिताः । आङ्गलाः, फ्रान्सदेशजाः, शर्मण्यदेशजाः, रूसदेशीयाः, अमेरिकीयाः, स्वीडीयाः, डेनीयाः, डचाश्चेत्येवंप्रभृतयः स्वनामधन्याः सारस्वता विद्वान्सः पाणिनीयं शब्दानुशासनं समधीत्य लब्धज्ञानप्रकाशाः ग्रीक-लातिनी-गाथिकी-लिथ्वानीयादिभाषासु संस्कृतभाषया सह सुनिभृतं भृशं साम्यं समवलोक्य तुलनात्मकपद्धत्या सम्बन्धं निर्धार्य आधुनिकं भाषाविज्ञान-शास्त्रं सम्प्रवर्तितवन्तः ।

अष्टादशशतख्रीष्टाब्दान्ते पाश्चात्त्ये जगति संस्कृतभाषायाः पाणिनीय-व्याकरणस्य च ज्ञानं सम्प्रवृत्तम् । यूरोपे संस्कृतज्ञानागमन्यायप्रस्थानमार्ग-प्रापको यशस्वी आङ्गलजो विद्वान् भारते ब्रिटिशशासनन्यायाधीशोत्तमः मनस्वी श्रीविलियमजोन्समहोदयः सम्बभूव । प्रायः नववर्षपर्यन्तम् अनवरतं संस्कृतभाषां संस्कृतवाङ्मयञ्च समधीत्य १७८६ ख्रीष्टाब्दे फरवरी-द्वितीय-दिनाङ्के एशियायीसमितेः तृतीयवार्षिकसमारोहाभिभाषणे महाविद्वानसौ सरोपाधिकः श्रीविलियमजोन्सः साधिकारं समाचष्ट यत् "संस्कृतभाषा यावती खलु प्राचीना स्यात् तस्या भाषिकी संरचना नूनं प्रतिभावैशद्यविस्मय-कारिणी । इयं संस्कृतभाषा नियतं ग्रीकभाषातोऽपि समृद्धा, लैटिनभाषाया-श्चापि व्यापिका, उभयतश्चापि सुपरिष्कृता विद्यते । अनयोः ग्रीकलातिनी-भाषयोः संस्कृतभाषया सह एतावत् सुमहत् साम्यं विद्यते यत् संस्कृतभाषया सह मौलिकसम्बन्धं विना कथञ्चिदपि नैव सम्भवति ।" यद्यपि श्रीविलियम-जोन्सः अस्मिन् तात्त्विके हृदयोद्गारे किञ्चित् साक्ष्यं नैव समुप-स्थापयति तथापि अस्माभिरनुमीयते यज्जोन्सस्य अस्मिन्

सत्याविष्करणे तस्य आसां भाषाणां गहनाध्ययनानन्तरं प्रतिभाप्रसूता अन्तःकरणप्रवृत्तिः कारणमिति। नूनं पाणिनीयशब्दानुशासने संस्कृतभाषाविश्लेषणं पदविवरणञ्च वैज्ञानिकं समवलोक्यैव श्रीविलियम-जोन्सस्य इयं पारदर्शिनी अन्तर्दृष्टिः समुदिता। जोन्ससङ्केतितं पाणिनीय-प्रभावितञ्च भाषाविज्ञानं पाश्चात्त्ये जगति तुलनात्मकपद्धत्या ऐतिहासिक-दृष्ट्या च विश्वभाषाः सन्दुह्य सम्प्रवृद्धम्। आधुनिकं पाश्चात्त्यं ध्वनिविज्ञानम् अपि प्रभूतं पाणिनीयप्रभावितं विद्यते। अस्यापि प्रयोजकः श्रीविलियम-जोन्स एव विद्यते। अस्मिन् सन्दर्भे लिटिसियसः, विलियमडी० ह्विटनेः, ए०जे० एलिशः, बैलः स्वीटश्चेति विद्वान्सः सादरं संस्मरणीयाः विद्यन्ते।

जर्मण्यां पाणिनीयतत्त्वमर्मज्ञेषु प्रो० ए० एल० चेजीशिष्यो वाग्योगवित् फ्रान्त्सबॉपः अन्यतमः सुविख्यातः पाश्चात्त्ये जगति भाषाशास्त्रपितामहः। असौ विद्वान् फ्रान्त्सबॉपः "काञ्जुगेशन सिस्टेम डेर संस्कृत स्प्राख इन फरेग्लाइशुंग मिट येनेम डेर ग्रीसिशेन लटाइनिश्शेन, पेसिश्शेन उण्ड गेर्मा-नीश्शेन स्प्राख" इत्याख्यं ग्रीक-लातिनी फारसी-ट्युटामिकभाषापेक्षया संस्कृतभाषाया धातुरूपपद्धतिरिति विशिष्टं ग्रन्थं १८१६ खीष्टाब्दे प्रकाशित-वान्। अर्वाचीनस्य तुलनात्मकभाषाविज्ञानशास्त्रस्य संस्थापकः खलु श्रीमान् फ्रान्त्सबॉपः। साम्प्रतिका योरोपीयभाषा विलोड्यासौ मनीषी संस्कृतशब्दैः सह तासां तादात्म्यं वर्णयामास। लौकिकसंस्कृतामसौ मूलवैदिकसंस्कृताया भाषायाः सरक्षिकां व्याचष्ट।

अस्मिन् सन्दर्भे केचन पाणिनीये पल्लवग्राहिपाण्डित्याश्चापि पाश्चा-त्त्यविद्वान्सोऽजायन्त, ये खलु अल्पबोधवशात् पाणिनीये शब्दानुशासने छिद्रान्वे-षणं चापि अकुर्वन्। विद्वान्सौ बेनफी-ह्विटनीसञ्ज्ञकौ एतादृशौ एव। वस्तुतः जनसामान्यशिक्षणप्रयोजनके प्राथमिकस्तरीयसंस्कृतभाषाव्याकरणे ह्विटनीमहोदयः पाणिनीयभाषातात्त्विकगाम्भीर्यं परिचेतुं समर्थो नासीत्। लैटिनभाषासदृशीं रूपमालां समाश्रित्यैवासौ ह्विटनीवर्यः पाणिनीयं ज्ञातुं तत्परः सम्बभूव। वस्तुतः पाणिनीये वाक्यात् पदानां कश्चन आत्यन्तप्रविवेको नैवाभिमतः। परवर्तिभिः अनुसन्धित्सुभिः पाश्चात्यैर्विद्वद्भिरेव पाणिनीयं परिज्ञातुं ह्विटनीमहोदयस्य असामर्थ्यं स्वीकृतम्।

पाणिनिविशेषज्ञः ओतोबोतलिङ्कः एकशताब्दतोऽपि अतः पूर्वं पाणिनि-रीत्या साइबेरियायाः तर्किक-याकूतभाषां १८५१ खीष्टाब्दे व्याचकार। विद्वान् एडवर्डसपीरः अस्य पाणिनिप्रभावितं भाषाविश्लेषणं पदविवरणञ्च प्रशंसितवान् भृशम्। अमेरिकाराष्ट्रे भाषायाः विवरणात्मकपद्धतौ पाणिनीयं

सबहुमानं समादृतम् । मूलानाम् अमेरिकीयभाषाणां विवरणात्मकाध्येता विद्वान् फ्रान्सबायेजः यद्यपि प्राचीनयोरोपीयव्याकरणपरम्परादीक्षित आसीत्, तथाप्यसौ आसां भाषाणां प्रक्रियापरकवर्णने पाणिनिं समाश्रितः। एडवर्डस-पीरशिष्यः केलिफोर्नियाविश्वविद्यालयस्य संस्कृतभाषाविज्ञानविभागे पूर्व-प्राचार्यः प्रो० एम० बी० एमेन्यूमहोदयः भाषाविवरणात्मकाध्ययने फ्रान्सबायेजं पाणिनिप्रभावितं नानुमनुते, परं प्रक्रियापरकवर्णने पाणिनिसादृश्यं स्वीकुरुते इति पुनस्तत्रैव अवलम्बितो वेतालः। विद्वान् एडवर्डसपीरः फ्रान्स-बायेजशिष्येषु अन्यतमो विद्यते ।

पाणिनीयगहनाध्ययनसम्प्राप्तभाषातत्त्वबोधः अमेरिकीयभाषावैज्ञानिकेषु प्रमुखतम आचार्यो लियोनार्डब्लूमफील्डः भाषातत्त्वसमीक्षायां पूर्णतया पाणिनीयात्मा दृश्यते । पाणिनीयं विना तस्य स्वनिमविज्ञानम्, रूपिम-विज्ञानं वाक्यविज्ञानञ्च तादृशं परिपूर्णं महत्त्वपूर्णञ्च सर्वथा असम्भवमेव । आचार्यब्लूमफील्डः स्वमित्राणि सततं कथयतिस्म यत् पाणिनीयव्याकरणं तस्य तादृशेषु ग्रन्थेषु सङ्गृहीतमासीद् यानसौ अवकाशक्षणेषु निरन्तरमध्येति स्म । पाणिनीयं तस्य कार्यगौरवाधायकं सम्बभूव । परवर्तिषु अमेरिकीय-भाषावैज्ञानिकेषु पाणिनिप्रभावितस्य लियोनार्डब्लूमफील्डस्य प्रबलप्रभावः सुस्पष्टं द्रष्टुं शक्यते । फ्रान्सबायेजशिष्यस्य एडवर्डसपीरस्य शिष्य एमेन्युः सुस्पष्टं निश्चप्रचं भाषाविज्ञानछात्रेभ्यः अनिवार्यतः संस्कृताध्ययनं प्रस्तौति । तन्मते पाणिनीयशब्दानुशासनाध्ययनं विना कथमपि कश्चन भाषाविज्ञान-च्छात्रः भाषाविज्ञानमूलोत्सेन परिचितो नैव भवितुमर्हति । वस्तुतः पाणिनीय-सम्प्रबोधं विना भाषातत्त्वसम्बद्धे ध्वनिविज्ञाने पदविज्ञाने वाक्यविज्ञाने भाषाविज्ञाने वा कथञ्चिदपि भाषिकपरिपक्वता निर्णयदृढता च समायातुं नैव शक्यते । फ्रान्सबायेजे एडवर्डसपीरे च प्रत्यक्षतः साक्षात्पाणिनेरनुसरणं नैवापि स्यात्, परमुभयोः वैदुष्ये पाणिनीयतन्त्रस्य तलस्पर्शी बोधः सर्वथा परिलक्ष्यते । अस्मन्मते तयोः भाषिकबोधगाम्भीर्यस्य मूलं तयोः पाणिनीय-सम्परिज्ञानमेव ।

यथा भाषाविज्ञानस्य ध्वनि-पद-वाक्यादिविषयक्षेत्रे पाश्चात्त्यं विद्वज्जगत् पाणिनिना भृशमुपकृतं शिक्षितञ्च तथा भाषाविज्ञानस्य अर्थविज्ञानेऽपि पाश्चात्त्यैः विद्वद्भिः पाणिनीयतन्त्रेण भारतीयेन दार्शनिकवाङ्मयेन काव्य-शास्त्रेण च बहु शिक्षितव्यं विद्यते । न केवलं पाणिनीयशब्दानुशासनपरम्प-रायां पाणिनिना, पतञ्जलिना, भर्तृहरिणा अन्येन चाचार्येणैव अर्थतत्त्वं सम्यक् चर्चितं चिन्तितं व्याख्यातञ्चापितु मीमांसादर्शने निरुक्ते अन्यत्र च

दर्शनसाहित्ये काव्यशास्त्रेऽपि च गाम्भीर्येण अर्थतत्त्वप्रतिपादनं सम्यगुपलभ्यते । नूनमिमे अर्थतत्त्वप्रतिपादनसम्बद्धाः ग्रन्थाः प्रौढशैल्या क्लिष्टभाषापद्धत्या वा विलिखिताः सन्ति, येषां पठनाय तत्त्वार्थावबोधाय चापेक्षितं प्रतिभा-सामर्थ्यं प्रायः पाश्चात्त्यविद्वद्वरेण्येषु अत्यल्पमेव सम्भवति, तथापि तेषु पारस्परिकसहयोगसापेक्षमनुसन्धानसामर्थ्यं सर्वथा प्रशंसनीयं भवति । तथ्यान्वेषणतत्परता चापि अनुकरणीया जायते । नूनमेतत् पाश्चात्त्यं विद्वज्जगद्यदा संस्कृतवाङ्मये अर्थतत्त्वसिद्धान्तमन्वेष्टुं बद्धपरिकरं भविष्यति तदा असौविध्यमेतदवश्यं समाधास्यति ।

ब्रिटिशशासनबद्धेऽपि भारते भारतीयप्राच्यविद्यानुरागी प्रिंसिथः प्रायः १८३० खीष्टाब्दे विस्मृतान् अशोकशिलालेखान् पठितुं प्रारभत । १६०० खीष्टाब्दे विद्वान् पिशेलः भारतीयभाषारूपाणां तुलनात्मकं विवरणम् ऐतिहासिकाध्ययनञ्च सम्प्रकाशितवान् । १६५३ खीष्टाब्दे अमेरिकीय-प्राच्यविद्यासभासत् फ्रेङ्कलिन एडगर्डनः बौद्धधर्मसम्बद्धं संस्कृतमयं मध्य-भारतीयभाषाविवरणं प्रामाणिकाध्ययनाय सम्प्रकाशितवान् । जूलिशब्लोको विद्वान् वैदिकभाषातः साम्प्रतिकभाषाः यावद् भाषाविकासक्रमस्वरूपं-प्रस्तुतवान् । नेपालीभाषाविद् राल्फर्टनरश्चापि सन्दर्भेऽस्मिन् विख्यातो विद्वान् । सरोपाधिकः श्रीमान् जौर्जः अब्राह्मग्रीयर्सनो महत्त्वपूर्णं भारतीय-भाषासर्वेक्षणं सम्पादितवान् । यद्यपि एतद्विवरणं विभागीयैः अपरिपक्व-पटवारीकर्मकरैः निश्चितप्रश्नमालामाध्यमेन सङ्गृहीतम्, तथापि व्यापक-सर्वेक्षणेनानेन भारतीयवाक्षु भाषिकं याथार्थ्यम् अन्वेष्टुं सौविध्यं सञ्जातम् । पुनरपि कार्यविधेरप्रामाणिकत्वाद् विवरणमेतत् प्रामाणिकं वक्तुं नैव शक्यते । साम्प्रतम् अस्माकं ज्येष्ठसतीर्थ्यः पञ्जावविश्वविद्यालये संस्कृतविभाग-प्राध्यापको लब्धनेहरूपीठवृत्तिको भाषिकविदाचार्यः डॉ० देवीदत्तशर्मा हिमालयपर्वतीयप्रदेशेषु प्रयुज्यमानाः संस्कृतसजातीया अन्या वा भाषाः सप्रयत्नं विवृणोति । अन्योऽस्माकं ज्येष्ठसतीर्थ्यो गुरुबन्धुः हिमाचलप्रदेश-विश्वविद्यालये संस्कृतविभागभाषाविज्ञानप्राध्यापकः वाक्तत्त्वविदाचार्यः डॉ० बलदेवसिंहः पदपदार्थसमीक्षां प्रस्तुत्य पाणिनीयपदरचनाकौशलसामर्थ्यं समुद्घाटितवान् । ग्रंथस्यास्यान्ते द्वितीयपरिशिष्टेऽस्माभिः पाश्चात्त्यपाणिनीय-विदुषां सादरं संस्मृतिरेका समर्पिता ।

पाणिनीयसम्प्रेरितं तुलनात्मकभाषाविज्ञानमद्यत्वे पाश्चात्त्ये जगति शिथिलगतिकं विद्यते । नवीनानां खलु पश्चात्त्यविदुषां मतिसङ्कीर्णतामेवात्र कारणत्वेन वक्तुं शक्यते । तेषां सङ्कीर्णमानसी नाम इयमाशङ्का यदित्थं

यदि जनसामान्ये तुलनात्मकभाषाध्ययनप्रवृत्तिप्रसारो भविष्यति तदा नूनं संस्कृतभाषाया महत्त्वातिशयेन सर्वभाषाणां मातृकल्पत्वं सर्ववाचामग्रजत्वं वा सर्वविदितं सुनिश्चितम्। परोक्षतो भारतस्यापि एवं ज्ञाने वाचि संस्कृतौ सभ्यतायाञ्च वैशिष्ट्यातिशयं सेत्स्यति। इत्येवं सङ्कीर्णमतिप्रसूतमहाभीत्या यूरोपे अमेरिकाराष्ट्रे चाद्य तुलनात्मकभाषाविज्ञानाध्ययनस्य सम्प्रचारः शैथिल्यं सम्प्राप्तः। ज्ञानक्षेत्रे नूनं सुमहत् खेदास्पदमेतत्। न खलु केवलम् आर्यावर्तस्यैव आधुनिकानां भाषाणाम्, अपितु योरोपियाङ्गलजार्मण्यादिभाषाणां तद्विभाषाणामपि विकासज्ञानाय मूलोद्गमस्रोतः संस्कृतभाषैव विद्यते। संस्कृतभाषया सह आङ्गलजार्मण्यादिभाषाणां तुलनात्मकशिक्षणपद्धत्या यत्र आङ्गलजार्मण्यादिभाषाभाषिणां महानुपकारो भविता तत्र संस्कृतज्ञेभ्यो भाषातत्त्वदृष्ट्या आङ्गलजार्मण्यादिभाषाणामध्ययने सुमहत् सौविध्यं स्यात्। महामनीषी मोक्षमूलरः आङ्गलीयां भाषां संस्कृतभाषायाः परमां नेदीयसीं भाषां स्वीकुरुते। यथा मोक्षमूलरं कोऽपि आङ्गलीयो जनोऽद्यत्वे तादृशीमेव मूलवाग्विकृतां भाषां ब्रूते यादृशीमद्यत्वे कश्चन भारतीयो ग्राम्यजनो मूलवाग्विकृतां संस्कृतसम्बद्धामाधुनिकां विभाषाम्। यतो यथा वक्तृत्वासामर्थ्याद्दुच्चारणवैकल्याच्च अद्यत्वे भारते प्रचलिताः संस्कृतविकृतयो नैकाः विभाषाः तथैव खलु योरोपामेरिकादिष्वपि राष्ट्रेषु आङ्गल-ग्रीक-लातिन-गाथिक-लिथ्वानीयावेस्तादिभाषाः संस्कृतभाषासजातीयाः संस्कृतभाषाविकृतयः विभाषा एव सन्ति। कदाचिद् यूरोपे योरोपीयभाषाणां मूलतया हिब्रूभाषामेव भ्रान्त्या स्वीक्रियतेस्म, हिब्रूभाषात एव च सर्वे शब्दा निष्पन्ना इति प्रतिपाद्यतेस्म। परं संस्कृतभाषायाः सम्यग्ज्ञानं सम्प्राप्य पाणिनीय-पर्यालोडनया इयं भ्रान्तिः परिसमाप्ता। इयञ्च निर्णीतिः स्वीकृता यत् समग्रा अपि योरोपीया भाषाः संस्कृतभाषासजातीया एव सन्ति, नास्ति हिब्रूभाषया सह तासां कश्चनापि मौलिकः सम्बन्धः।

इत्थं पाश्चात्त्ये जगति भारताद् बहिर्भागे वा भूमण्डले संस्कृतभाषायाः प्रवेशार्थं प्रसारार्थञ्च पाणिनीयं शब्दानुशासनं सुनिभृतं श्रेयो भजते। संस्कृतवाचं समाश्रित्य विश्ववाचां तुलनात्मकभाषाविज्ञानं तु पाणिनीयस्य सम्यगध्ययनस्यैव सुपरिणामः। पाश्चात्त्यानां विदुषां वैदिके वाङ्मये प्रवृत्तिप्रयोजकञ्चापि पाणिनीयं शब्दशास्त्रमेव। वैदेशिकवाक्षु संस्कृतभाषया सह शब्दसादृश्यं शब्दवैरूप्यं च सुविलोक्य तत्र भाषातात्त्विककारणम् अन्वेष्टुकामाः पाश्चात्त्यविद्वांसः पाणिनीयदृशा तुलनात्मक-भाषाशास्त्रे प्रवृत्ताः। पाणिनीयसिद्धान्तनिर्णये यथा भारतीय-विदुषामपि भ्रान्तिः जायते तथैव पाश्चात्त्यविदुषामपि सम्भविनी सा। तथापि उभयत्र भ्रान्तेः कारणं पृथक् पृथग्

भवति । भारतीयविद्वत्सु यत्र व्याकरणेतरसम्प्रदायवासनावासितान्तःकरणं पाणिनीयसिद्धान्तनिर्णयभ्रान्तौ कारणं भवति, तत्रैव पाश्चात्त्यविद्वत्सु पाणिनीयपरम्परायाः ज्ञानाभावः तादृशभ्रान्तौ कारणं जायते ।

पाणिनीयतत्त्वपरिज्ञानार्थं भाषावैज्ञानिकसिद्धान्तस्थापनार्थं वा तात्त्विकं भाषिकं वाचकशब्दस्वरूपम्, शब्दैरभिधेयार्थस्वरूपम्, उभयोश्च शब्दार्थयोः विद्यमानं सम्बन्धस्वरूपं सुस्पष्टं ज्ञातुमपेक्षते । अपेक्षिततादृशज्ञानसामर्थ्याभावे सुस्पष्टं सिद्धान्तसंस्थापनं कथमपि सुकरं न भवति ।

एतेनास्माभिः पाश्चात्त्ये जगति संस्कृतप्रवेशस्य तत्र वा भाषाविज्ञानपरम्परैतिह्यस्य च प्रस्तुतेन ग्रन्थेन सह प्रकरणसम्बद्धता प्रतिपादिता ।

भारतीयविदुषां व्याकरणेतरसम्प्रदायवासनावासितान्तःकरणं पाणिनीयसिद्धान्तनिर्णयभ्रान्तौ कीदृशं कथञ्च कारणं भवतीति प्रदर्शयितुमत्रैकम् उदाहरणं प्रस्तूयते । 'स्वं रूपं शब्दस्याशब्दसञ्ज्ञा' (अष्टा० १।१।६८) इति सूत्रस्थं भाष्यं टीकमानः कैयटः सर्वार्थप्रत्यायनशक्तियुक्तं शब्दं सर्वशब्दप्रत्याय्यशक्तियुक्तञ्चार्थं व्याचष्ट । यतः केनापि शब्देन व्यवहारादिवशात् कश्चनाप्यर्थो व्यपदेष्टुं शक्यते । कैयटेन प्रतिपादितः खल्वेष स्वाभाविको भाषातात्त्विको नियमो विद्यते । परमेवं सति कश्चनापि व्यवहारः सम्पादयितुं नैव शक्यते । प्रत्यर्थं शब्दानां पृथक् पृथग् अभिधानसम्पादनसम्भवे सत्येव व्यवहारस्य सम्पाद्यत्वसम्भवात् । अत एव शक्त्यवच्छेदाय वस्तूनां नामकरणं विधीयते । व्यवहारसम्पादनाय च शब्दार्थयोः सम्बन्धनियमः स्वीक्रियते । शब्दव्यवहाराय एतदावश्यकं विद्यते यद्—

(अ) नियतेन शब्देन नियत एवार्थः प्रत्याय्येत ।

(इ) नियतोऽर्थः नियतेनैव शब्देन बोध्येत ।

इत्येवं शब्दार्थसम्बद्धो द्विविधो नियमः आविष्क्रियेत । तदेवं कैयटस्य वचः—

"देवदत्तादयश्च सञ्ज्ञाशब्दा नियमार्था इति सिद्धान्तः । सर्वार्थप्रत्यायनशक्तियुक्तो हि शब्दः सर्वशब्दप्रत्याय्यशक्तिश्चार्थ इति व्यवहाराय नियमः क्रियते ।" (अष्टा० १।१।६८ महाभा० प्र० )

भाषातात्त्विकं कैयटाभिमतमिमं नियमं नागेशोऽन्यथा प्रत्यपादयत् । नागेशमते कैयटप्रतिपादितोऽयं भाषासम्बद्धो विषयः कश्चनालौकिको विषयो विद्यते । कश्चन योगी एवैतज् ज्ञास्यति यत् सर्वैः शब्दैः सर्वेऽर्थाः प्रत्येतुं शक्या इति । कश्चन शब्दशास्त्राधिकारी तु कथञ्चिदपि एतज्ज्ञातुं नैव शक्नोतीति ।

शब्दतत्त्वे पाणिनीये च कृतश्रमोऽपि नागेशः कथमेवं व्यलिखदिति महदाश्चर्यम्। तदेवं नागेशस्य अभिलेखः —"वस्तुतस्तु सर्वेषां सर्वार्थवाचकत्वेऽपि तन्नास्मदादिज्ञानविषयः। सर्वार्थः सर्वशब्दानामस्माकं विशिष्याज्ञानात्। किन्तु योगिनामेव तज्ज्ञानम्। एवञ्च शास्त्राधिकारिणोऽस्मदादीन् प्रति नियमार्थत्वं शास्त्रस्य असम्भवि एव। इयं कथा तु सर्वस्य ब्रह्मरूपत्वकथावद् न व्यवहारोपयोगिनी।" (अष्टा० १।१।६८। महाभा० प्र० उद्द्योते)

नूनं नागेशोऽत्र सन्दर्भे अद्वैतवेदान्तसम्प्रदायवासनावासितान्तःकरणः पाणिनीयसिद्धान्तनिर्णये भ्रान्त एव। ग्रन्थेऽस्मिन् भाषाशास्त्रीयं प्रश्नमिमं समाधातुं प्रयत्नो विहितः। तदर्थं शब्दस्वरूपस्य अर्थस्वरूपस्य तयोश्च सम्बन्धस्वरूपस्य परिज्ञानमावश्यकं परिज्ञाय ग्रन्थेऽत्र शब्दस्वरूपमर्थस्वरूपं सम्बन्धस्वरूपञ्च विशदं प्रतिपादितम्। पाणिनीयतत्त्वाववोधाय स्वान्तःसुखाय च प्रयत्नोऽयमस्माभिरङ्गीकृतः शब्दतत्त्वस्य जिज्ञासुभ्यः कश्चन सहायको भवेदिति कामनया विरम्यते विज्ञवर्येषु।

देहली
मेषसङ्क्रान्तौ
२०४३ विक्रमाब्देषु

विदुषां वशंवदः
नरदेवशास्त्री

# आभारविज्ञापना

यस्मादृते न सिद्धचति यज्ञो विपश्चितश्चन ।
स धीनां योगमिन्वति ॥ (ऋक्सं० १।१८।७)

शब्दतत्त्वस्यानुकम्पया विना कश्चनापि ग्रन्थविस्तरो नामासम्भवीति को न वेत्ति विपश्चित् । महतो महिष्ठं गुणतो गरिष्ठमिदं शब्दतत्त्वं विश्वतो वरिष्ठं खलु निगद्यते । यस्माच्च विपश्चितः शब्दतत्त्वं परिज्ञाय दुःखगाहमिमं पाणिनीयं शब्दार्थसम्बन्धविषयकं सिद्धान्तं विनिश्चेतुं दुःसाहसिकोऽहं प्रवृत्तः, कथमद्य प्रथितयशसः तस्य गुरोः वैयाकरणशिरोमणेः नाम कथञ्चिदपि विस्मरेयम् । आजीवनं शब्दतत्त्वाध्ययनाध्यापनयोः व्यस्तानां पण्डितप्रवराणां श्रीमतां कुवेरदत्तशास्त्रिणामद्य भूयोभूयः सादरमाभारमावहामि यैरान्तरस्य वात्सल्यस्य मां मात्रं परिकल्प्य सस्नेहं शब्दतत्त्वमध्यापितम् । अद्यतनोऽयं प्रयासो नूनं तस्यैव परिणामः ।

मम गुरुभ्रातृषु अन्यतमः खलु ज्येष्ठो वैदुष्यगौरवगरिष्ठः वाग्विदाचार्यः श्रीमान् डॉ० बलदेवसिंहः शिमलास्थे हिमाचलप्रदेशविश्वविद्यालयसंस्कृत-विभागे व्याकरणभाषाविज्ञानप्राचार्यः परमकृपया हार्दिकवात्सल्येन च ग्रन्थ-स्यास्य वैदुष्यमण्डितां पुरोवाचं व्यलिखदिति मान्याय विपश्चिते हार्दिकाभारं विज्ञापयामि । ग्रन्थेऽत्र येषामाचार्याणां प्रत्यक्षतः परोक्षतश्च ये ग्रन्थाः सिद्धान्ताश्च समुद्धृताः, तेषामहं केन वचोबलेनानृण्यं कामये ? मम वाग्दा-रिद्रय्चं तेषामाभारवहनेऽपि असामर्थ्यमेवानुभवति । केषाञ्चन विश्रुतयशसा-माचार्याणां सिद्धान्तोऽत्र ग्रन्थे सम्यक् समालोचितः क्वचित् खण्डितश्चापि । तान् प्रति विनम्रस्यापि मम कर्त्तव्यभार एव तादृश्यां प्रवृत्तौ निमित्तमभूत् । तत्र कथञ्चिदपि कश्चिदपि ममान्यथाभावो नैव कल्पनीयः । एकैकशो नाम-निर्देशस्य गुरुतामाकलय्य विस्तरभयाच्चाहमान्तरेण स्फोटेन समेषामाचार्याणा-माभारं विनम्रभावेन स्वीकुर्वे ।

मम समस्तप्रवृत्तौ सहवर्तिनी धर्मपत्नी श्रीमती सुनयनादेवी अत्रापि छायेवानुयोगिनीति तां प्रति आभारविज्ञापना तु औपचारिकी प्रक्रिया एव ।

ग्रन्थस्यास्यानुक्रमणिकादिनिर्माणे ममात्मजायुष्मती मञ्जुला आत्मजश्चायुष्मान् प्रभात: प्रदीप: प्रशान्तश्च महत्त्वपूर्णं सहयोगं प्रायच्छन्निति हार्दिकशुभाशिषा स्निह्यते मुहुर्मुहुर्मया।

वैदिकमुद्रणालयाध्यक्षो मम परमसुहृद् एम०ए० साहित्याचार्योपाधिक: श्रीविश्वदेवशास्त्री मुद्रणकौशलप्रवीण: आरभ्य ग्रन्थान्तं पाण्डुलिपि-प्रूफसंशोधनादिकं कृत्वा मुद्रणादेशञ्चापि सर्वं व्यदधात्। अत: सोऽपि ग्रन्थस्यास्य मुद्रणे हार्दिकसहयोगाय सततं धन्यवादै: समलङ्क्रियते नाम।

— डॉ० नरदेवशास्त्री



# ग्रन्थकृत्प्रवृत्तिः

## (क) प्रस्तावः

अथ शब्दार्थसम्बन्धसिद्धान्तः पाणिनीयकः ।
ग्रथ्यते पाणिनीयस्य शास्त्रसारः समाहृतः ॥ १ ॥
मुनित्रयं समाश्रित्य चान्यानाचार्यपुङ्गवान् ।
नव्यानि शब्दशास्त्राणि साम्प्रतिकानि तत्त्वतः ॥ २ ॥
वेदवेदाङ्गतत्त्वानि बद्धो व्याकरणागमः ।
विद्वद्भ्यः शब्दतत्त्वानां यथाशास्त्रं महीयताम् ॥ ३ ॥
आलोड्य न्यायबीजानि सिद्धे व्याकरणागमे ।
विभिन्नागमतत्त्वानि गद्यशैल्यां विनिर्मिताः ॥ ४ ॥
सिद्धान्तनवनीतोऽयं विज्ञसम्प्रीतये सदा ।
न्यक्षेणोपाहृतो ग्रन्थ आबद्धो महता मुदा ॥ ५ ॥
पाणिनीयेषु सूत्रेषु च कात्यायनवार्तिकेषु वै ।
पतञ्जलेः महाभाष्ये शब्दानुशासनागमे ॥ ६ ॥
वाक्यपदीयग्रन्थे च नूनं भर्तृहरेस्तथा ।
विनष्टे सङ्ग्रहे चापि पाणिनीयं प्रतिष्ठितम् ॥ ७ ॥
सरस्वतीप्रसूतेन पञ्चानन्दात्मजेन च ।
कुबेरदत्तशिष्येण न्यायप्रस्थानमार्गतः ॥ ८ ॥
विज्ञहर्षितपौत्रेण लोके च संस्कृतात्मना ।
पाणिनीयप्रबोधाय विदुषामाशिषे मुदे ॥ ९ ॥
सदुपासितवृद्धेन भिन्नागमावबोधतः ।
पाणिनीये चिराद् धृत्या कृतभूरिश्रमेण च ॥ १० ॥
विद्यावारिधिविज्ञेन नरदेवेन शास्त्रिणा ।
बद्धः शब्दार्थसम्बन्धसिद्धान्तः पाणिनीयकः ॥ ११ ॥

गद्यग्रन्थस्य तस्यैव सुबद्धः सारसङ्ग्रहः ।
कारिकासु च ह्येतासु ग्रन्थकृता स्वयं मुदा ॥ १२ ॥
सङ्क्षेपतोऽवबोधाय सारांशश्चात्र वर्णितः ।
गद्यात्मकश्च वै कृत्स्नः ग्रन्थोऽयं दृश्यतां बुधैः ॥ १३ ॥

शास्त्रार्थहृदया विज्ञाः कृतिश्रमपरीक्षकाः ।
निबद्धुः प्रश्रयाः शिष्टाः तत्त्वदृशो मनीषिणः ॥ १४ ॥

सन्दोहः शब्दशास्त्रस्य शब्दार्थतत्त्वसंश्रितः ।
निरुक्तः सम्प्रदायोऽत्र वैयाकरणसम्मतः ॥ १५ ॥

सुधीयामप्रबोधिन्यै शब्दब्रह्मार्थसिद्धये ।
जन्मदात्रे सरस्वत्यै मात्रे भूयो नमो नमः ॥ १६ ॥

वैदिकलौकिकापारः आद्यन्तरहितस्तथा ।
शब्दाब्धिः क्वातिगम्भीरः तरङ्गोत्तोलितः सदा ॥ १७ ॥
स्नातोऽपि शब्दशास्त्रे वै क्वाहं हीनप्लवो जनः ।
तथापि स्यां समुत्तीर्णः पाणिनिशास्त्रसेतुना ॥ १८ ॥
पाणिनीयाश्च वै आप्ताः सहायाः सन्ति मे सदा ।
आचार्याः लब्धप्रामाण्या आगमतीर्थदर्शिनः ॥ १९ ॥
ग्रथ्नाति नरदेवोऽद्य शास्त्रार्थमर्मसम्मतम् ।
ह्येतं शब्दार्थसम्बन्ध-सिद्धान्तं पाणिनीयकम् ॥ २० ॥
गुरुप्रसादपाथेयः शास्त्रधीधैर्यभावनः ।
पाणिनीयं समाख्यातुं नरदेवः तनोति शम् ॥ २१ ॥

(ख) पाणिनीयं स्वरूपम्—

अनादिरव्यवच्छिन्ना शब्दतत्त्वपरम्परा ।
लब्धा ख्याता च लोकेऽस्मिन् आचार्यैः सम्प्रसारिता ॥ २२ ॥
आचार्यपद्धतौ नैके सम्प्रदायाः प्रकीर्तिताः ।
शब्दशास्त्रस्य लोकेऽस्मिन् वैदिका लौकिकास्तथा ॥ २३ ॥
प्रातिशाख्येषु शिक्षासु भाषा-चरणभेदतः ।
वैदिकी वर्णिता शिष्टैः विकृतिरोधतत्परैः ॥ २४ ॥
वैदिकशब्दतो भेदो लौकिके नैव जायताम् ।
इत्येवं कामतश्चापि लौकिकाः शाब्दिकाः रताः ॥ २५ ॥
समन्वयस्य वक्ताऽसौ पाणिनिर्वदतांवरः ।
पाणिनीयस्य सिद्धान्तो वैदिक-लौकिकोभयः ॥ २६ ॥
शब्दाः शब्दत्वसम्पन्ना वैदिका लौकिकास्तथा ।
प्रयुक्ता लौकिकाः शब्दा अप्रयुक्तास्तु वैदिकाः ॥ २७ ॥
लौकिकैरर्थसम्बोधः वैदिकैः पुण्यसञ्चयः ।
इत्यपि मन्वते केचिदाचार्या मूलरक्षकाः ॥ २८ ॥

वैदिके लौकिके शब्दे अतिदौर्यं न जायताम् ।
यतितव्यं तथा शिष्टैरिति भाति मनोरथः ॥ २९ ॥
पाणिनिः पूजितः शिष्टैः वैदिकैः लौकिकैस्तथा ।
आचार्यैः शब्दतत्त्वज्ञैः विज्ञैः श्रद्धान्वितैः भृशम् ॥ ३० ॥
पाणिनीयं महच्छास्त्रं भाषिकं लोकवेदयोः ।
सर्वपारिषदं ख्यातं शब्दानुशासनं परम् ॥ ३१ ॥
भाषाशास्त्रं पुरा प्रोक्तमथ शब्दानुशासनम् ।
शब्दनिर्वचनञ्चापि व्याकरणं हि सम्मतम् ॥ ३२ ॥
भाषातत्त्वाख्यशास्त्रञ्च भाषाविज्ञानमुच्यते ।
कोशकाराश्च सम्प्राहुः "विज्ञानं शिल्पशास्त्रयोः" ॥ ३३ ॥
शब्दोऽर्थोऽस्य च सम्बन्धः परिभाष्योपवर्ण्यते ।
शास्त्रे हि पाणिनीयेऽत्र शिष्टे शब्दानुशासने ॥ ३४ ॥
शब्दस्वरूपवैमत्यं शास्त्रेषु परिदृश्यते ।
ध्वनिर्वा स्फोटरूपो वा शब्दोऽयं परिभाष्यते ॥ ३५ ॥
शब्दस्य चार्थतत्त्वस्य सम्बन्धस्य च सम्मतम् ।
स्वरूपं पाणिनीयेऽत्र यथाशास्त्रं निरूपितम् ॥ ३६ ॥

(ग) शब्दस्वरूपम्–

येनोच्चारिततत्त्वेन अर्थबोधो विजायते ।
स हि शब्दोऽवगन्तव्यः ध्वनिर्वा शब्द उच्यते ॥ ३७ ॥
स्फोटो नादैरभिव्यक्तः शब्दोऽर्थप्रतिपादकः ।
स्फोटोऽर्थान्तरो बौद्धः ध्वनिः शब्दस्य वै गुणः ॥ ३८ ॥
व्यञ्जकत्वाद्धि शब्दस्य ध्वनिश्चैवोपकारकः ।
सम्मतो द्विविधः स्फोटः आभ्यन्तरश्च बाह्यकः ॥ ३९ ॥
श्रवणगोचरो बाह्यः जातिव्यक्तिप्रभेदवान् ।
आभ्यन्तरश्च नामाऽसौ मनोमात्रसुगोचरः ॥ ४० ॥
वक्तृबुद्धिश्च श्रोतृस्था शब्दैरेवाभिजायते ।
अतो वै उच्यते शिष्टैः शब्दो बुद्ध्यनुसंहृतिः ॥ ४१ ॥
उच्चरितः ततः पूर्वमुच्चारणादनन्तरम् ।
त्रिधा शब्दस्थितिः वक्तुः अर्थस्य प्रतिपादने ॥ ४२ ॥
ध्वनिनोच्चारितः स्फोटः श्रुतः श्रोत्रा ततः परम् ।
शब्दप्रवाहकुल्येव त्रैविध्यं शब्दसंस्थिते ॥ ४३ ॥

व्यक्ताव्यक्तौ च शब्दौ तौ श्रवणाप्तस्वरूपतः ।
व्यक्ता च मानवीया वाग् अव्यक्ता पशुपक्षिणाम् ॥४४॥
व्यक्ताश्च द्विविधाः शब्दाः साध्वसाधुप्रभेदतः ।
शिष्टैरुच्चारितः साधुः अशिष्टैर्वै असाधवः ॥४५॥
साधुभिरेव वक्तव्यं शब्दैर्नासाधुभिः क्वचित् ।
सिद्धान्तः पाणिनीयोऽयं पाणिनीयैः समाश्रितः ॥४६॥

(घ) अर्थस्वरूपम्—

शब्दार्थश्चाभिधेयार्थः बाह्यार्थो नैव सम्मतः ।
सर्वथाऽसति बाह्यार्थे शब्दैरर्थोऽभिधीयते ॥४७॥

(ङ) सम्बन्धस्वरूपम् —

कार्यकारणभावेन योग्यतालक्षणेन च ।
सम्बन्धेन च वै शब्दः, अभिधेयार्थवाचकः ॥४८॥

(च) पाणिनीयं व्याकरणदर्शनम्—

बौद्धः शब्दश्च बौद्धोऽर्थः सम्बन्धोऽनादिपरम्परा ।
अपौरुषेयसन्दर्भः शास्त्रेऽस्मिन्नुपवर्णितः ॥४९॥
सिद्धे शब्दार्थसम्बन्धे प्रवृत्तं पाणिनीयकम् ।
सर्वपारिषदं ख्यातं व्याकरणमलौकिकम् ॥५०॥
पाणिनीये च शब्दोऽयं स्फोटो वाक्यात्मको मतः ।
प्रतिभा चैव शब्दार्थो बौद्ध आन्तर उच्यते ॥५१॥
वाक्यात्मकस्य बौद्धस्य शब्दस्य प्रतिभात्मनः ।
शब्दार्थश्चाभिधेयार्थः प्रतिभैव विजायते ॥५२॥
श्रोतृस्था प्रतिभा वक्तुः शब्दैरेवाऽभिजायते ।
वक्तृश्रोतृद्वये नूनं प्रतिभा शब्दभावना ॥५३॥
एकोऽनवयवः शब्दः वाक्यमतो निगद्यते ।
वाक्यादेव हि कृत्स्नार्थो वक्तुश्चैवाभिव्यज्यते ॥५४॥
शब्दोऽक्रमो हि वाक्यात्मा वक्तुश्च प्रतिभात्मकः ।
प्रतिभात्मा च शब्दार्थः पदक्रमस्तु कालिकः ॥५५॥
शब्दात्मकोऽध्वनिः स्फोटः प्रतिभार्थस्य स्फोटकः ।
प्रतिभास्फोटको वक्तुः शब्दैरुच्चारितैस्तथा ॥५६॥
शब्दार्थयोश्च तादात्म्यम् अनयोरेकरूपयोः ।
वक्तुश्च प्रतिभा शब्दैः श्रोतरि वै विवर्तते ॥५७॥

प्रतिभात्मा च वै शब्दः अर्थश्च प्रतिभात्मकः।
विवर्ततेऽर्थभावेन शब्द एव प्रयोगतः ॥५८॥
वक्तृबुद्धेश्च वाऽध्यासः श्रोतृबुद्धौ निरूप्यते।
शब्दैः शब्दार्थयोः तस्मात् सम्बन्धोऽध्यासमूलकः ॥५९॥
वक्तुश्च प्रतिभैवेयं श्रोतृस्था दृश्यते यतः।
तादात्म्यं चानयोः तस्मात् संसर्गः परिकल्पितः ॥६०॥
शब्दः कारणमर्थस्य वाचकवाच्यभावतः।
आचार्यैश्च समाख्यातः सम्बन्धः शक्तिरूपकः ॥६१॥
शब्दाभ्यासदशायाञ्च यत्रार्थः शब्दशो मतः।
कार्यकारणभावाख्यः सम्बन्धः तत्र कल्प्यते ॥६२॥
अभ्यासे परिपक्वे च शब्दार्थयोरयत्नतः।
योग्यताख्यश्च सम्बन्धः तव विज्ञैः सुसम्मतः ॥६३॥
बुद्ध्यर्थमाश्रितः शब्दः श्रुतः बुद्ध्यर्थबोधकः।
स्वाभाविकश्च सम्बन्धः शब्दार्थयोः स्वभावतः ॥६४॥
यः कश्चिदपि शब्दार्थः व्यवहारादियोगतः।
येन केनापि शब्देन अभिधातुञ्च शक्यते ॥६५॥
अतो वै उच्यते शिष्टैः 'सर्वे सर्वार्थवाचकाः'।
प्रतिभास्फोटकः शब्दः प्रतिभार्थस्य बोधकः ॥६६॥
व्यवहारो न वै सिद्धः शब्दैः सर्वार्थवाचकैः।
तदर्थं शिष्टसिद्धेऽस्मिन् पाणिनीये प्रवर्तताम् ॥६७॥
नियतेनैव शब्देन नियतार्थोऽभिधीयताम्।
शब्दार्थयोश्च सम्बन्धः सर्वत्र परिकल्प्यताम् ॥६८॥
अर्थसम्बद्ध एवाऽसौ शब्दः सर्वैः प्रयुज्यते।
सम्बद्धार्थश्च वै शब्दः श्रोतृभिः परिगृह्यते ॥६९॥
अर्थावगतयो लोके शब्दैरेव न केवलम्।
अन्यथाऽक्षिनिकोचेन पाणिविहारतोऽपि च ॥७०॥
शब्दैर्यावान् हि कृत्स्नार्थः सौविध्येनावगम्यते।
न स तथान्यथा शक्यः अवगन्तुं कथञ्चन ॥७१॥
पाणिनीयो हि सिद्धान्तः शब्दार्थयोश्च सम्मतः।
सम्बन्धे चात्र कार्त्स्न्येन सारांशेन समुद्धृतः ॥७२॥

### (छ) पाणिनीयशब्दानुशासनस्य पाश्चात्त्ये जगति प्रसारः—

भाषाविज्ञानमित्युक्तं पाश्चात्त्यैरनुसृतम्।
नवायं नूतनः शब्दः चिराल्लब्धप्रयोगतः ॥ ७३ ॥

वाग्विद्याविदां शास्त्रं संस्कृताधीतिसम्भवम् ।
पाश्चात्त्यैर्ग्रथितं ख्यातं भाषाविज्ञाननामकम् ॥ ७४ ॥
संस्कृतज्ञानमाश्रित्य पाणिनीयप्रचोदितः ।
तुलनात्मकपद्धत्या वाग्विद्या प्रवर्तिता ॥ ७५ ॥
पाणिनिशास्त्रविज्ञानं पाश्चात्त्यानां विशेषतः ।
भाषाविज्ञाननाम्ना सा वाग्विद्या प्रथिता बुधैः ॥ ७६ ॥
आदिभाषेति विख्याता वैदिकी संस्कृता मता ।
वैदिकं लौकिकञ्चेति ख्यातं संस्कृतं वचः ॥ ७७ ॥
आदिवाग् वैदिकी भाषा लोके सैव च संस्कृता ।
संस्कृतभाषिणः शिष्टाः वाग्विद्भिः सम्प्रकीर्तिताः ॥ ७८ ॥
संस्कृता सर्वभाषाणामादिभाषाऽनुमन्यते ।
माता वा विश्वभाषाणां वक्तुञ्च शक्यते मुदा ॥ ७९ ॥
संस्कृतवाक्सजातीयाः भाषाः भूमण्डले स्थिताः ।
काश्चित् संस्कृतसम्बद्धाः अन्याः संस्कृतसम्भवाः ॥ ८० ॥
संस्कृतायाः समाकाराः सहजा अनुजा अपि ।
संस्कृतायाः सजातीया भाषाश्च विविधा मताः ॥ ८१ ॥
व्याकृतिः शब्दसम्पत्तिः समाना संस्कृतभाषया ।
दृश्यते श्रूयते चापि शब्दविद्भिः दिवानिशम् ॥ ८२ ॥
आङ्ग्लादिवाग्विभेदानां व्याख्यानं सर्वसम्मतम् ।
इदमित्थन्तया नूनं संस्कृतज्ञानसम्भवम् ॥ ८३ ॥
अष्टादशशतख्रीष्टाब्दे ग्रीकलातिनयोः पुरा ।
सम्बन्धोऽज्ञात एवासीत् पाश्चात्त्यवाग्विदामपि ॥ ८४ ॥
संस्कृतां समधीत्यैव साम्यं तासां विलोक्य च ।
संस्कृतया स सम्बन्धो विद्वद्भिश्च विनिश्चितः ॥ ८५ ॥
पाणिनीयं समाश्रित्य संस्कृतां समधीत्य च ।
तुलनात्मकपद्धत्या भाषाशास्त्रं विनिर्मितम् ॥ ८६ ॥
भारतीयैश्च विद्वद्भिः मान्यैः पाश्चात्त्यपण्डितैः ।
श्रद्दधानैः विनम्रैश्च पाणिनीयं सुसेवितम् ॥ ८७ ॥
तुलनात्मकवाक्शास्त्रं संस्कृतबोधमन्तरा ।
व्याख्यातुं शक्यते नैव, पाणिनीयञ्च शासनम् ॥ ८८ ॥
अर्थप्रवृत्तितत्त्वानां शब्दा वै सन्ति वाचकाः ।
वेदेऽर्थो वैदिकैः शब्दैः लोके च लौकिकैस्तथा ॥ ८९ ॥

विवक्षातश्च लोकोऽयं शब्देषु सम्प्रवर्त्तते ।
शब्दत्वञ्चापशब्दत्वं वक्तुः सामर्थ्यसंश्रितम् ॥ ८९॥
प्रकृतिः विकृतिश्चापि शब्दानां देशकालतः ।
प्रयुक्ता वक्तृभिर्नित्यं वक्तृत्वाशक्तिकारणात् ॥ ९०॥
प्रकृतिः संस्कृता वाणी मूलभाषा निगद्यते ।
प्रकृतौ विकृता भाषा भवार्थं प्राकृता मता ॥ ९१॥
ख्यातो लोके हि शब्दस्य प्रयोगविषयो महान् ।
सप्तद्वीपा मही सिद्धा वाङ्मयं विपुलं तथा ॥ ९२॥
इतस्ततश्च गच्छन्ति यत्र तत्र जना भृशम् ।
लघुसंक्षेपभावाभ्यां ते शब्दाननुकुर्वते ॥ ९३॥
तत्र वक्तृत्वदौर्बल्याच्छब्दविकृतयस्तदा ।
ध्वनयो विकृताः शब्दे लुप्ताः केचन चागताः ॥ ९४॥
स्वराणां व्यञ्जनानाञ्च ध्वनीनाञ्चैकरूपता ।
प्रकृति - प्रत्ययादीनां पदानाञ्चैव भूरिशः ॥ ९५॥
दूरगास्वपि भाषासु योरोपीयासु चैव वा ।
बध्नाति आत्मसम्बन्धं संस्कृतया दिवानिशम् ॥ ९६॥
भाषावर्गाश्च विद्वद्भिरत एव समाश्रिताः ।
ध्वनितुलनया दृष्टया सम्बन्धोऽत्र विनिश्चितः ॥ ९७॥
जर्मण्यां गाथिको भाषा लिथ्वानोया रसातले ।
द्रुमशाखेव लोकेऽस्मिन् विद्यते संस्कृतानुजा ॥ ९८॥
ग्रीकलातिनपोलोया आङ्ग्लाद्यास्तथैव च ।
भाषाः सर्वाश्च सादृश्याद् व्याहृताः संस्कृतानुजाः ॥ ९९॥

संस्कृतभाषाविकृतिः—

वक्तृत्वदुर्बलैश्चैव प्रतिपत्तृत्वदुर्बलैः ।
प्राकृतैः संस्कृता लोके आदिभाषा हि विकृता ॥ १००॥
संस्कृतवाक्सजातीयाः भाषाश्च प्राकृता मताः ।
अपभ्रंशाश्च संसृष्टाः अशक्तैरभिधातृभिः ॥ १०१॥
प्रवृत्तिः शब्दतत्त्वस्य विवक्षातः प्रजायते ।
साधुभिरेव वक्तव्यं नासाधुभिः कदाचन ॥ १०२॥
प्रकृतिप्रत्ययैः युक्ताः शब्दाः शिष्टानुमोदिताः ।
साधवोऽशक्तिजाः शब्दा दुष्प्रयुक्तास्त्वसाधवः ॥ १०३॥
पाणिनीयश्च सिद्धान्तः सर्वत्र सार्वकालिकः ।
शब्देऽर्थे च सम्बन्धे तयोः निर्धारणे तथा ॥ १०४॥

ध्वनयश्च ध्वनीनाञ्च नियमाः सुपरीक्षिताः ।
पाणिनीये निरूप्यन्ते विश्ववाचां नियामकाः ॥ १०५ ॥
पाणिनीयाश्च आचार्याः लोकेक्षणपरायणाः ।
दृष्टाश्च ध्वनिसिद्धान्ताः वाक्संयन्त्रानुसारतः ॥ १०६ ॥
मूलाश्च ध्वनयो दृष्टा सर्वत्र विश्ववाक्षु च ।
नवागता गताः केचिद् देशकालानुसारतः ॥ १०७ ॥
एक एव ध्वनिः क्वापि कदाचित् कीदृशो मतः ।
दृष्टः स एव अन्यादृग् लोके वक्तृत्वभेदतः ॥ १०८ ॥
ध्वनेः शब्दस्य वै नित्यम् आस्यप्रयत्नदृष्टितः ।
शिष्टैर्वाग्योगविद्भिर्हि नियतोच्चारणं मतम् ॥ १०९ ॥
न तथोच्चारितो लोके वक्तुः दौर्बल्यकारणात् ।
तदा तन्मन्यन्ते शिष्टैरशिष्टोच्चारितं हि तत् ॥ ११० ॥
वैकल्यात्तत्र वै वक्तुः नियतोच्चारणे रते ।
विकृतश्च ध्वनिः शब्दः अन्यथा समपद्यत ॥ १११ ॥
मूलभाषा सुसम्बद्धा भाषा शिष्टा निरुच्यते ।
मूलया च असम्बद्धा नैव शिष्टा तथोच्यते ॥ ११२ ॥
मूलतो विकृता दूरं ततो दूरतरा तथा ।
दूरतमाऽपि वै दृष्टा भाषा लोके निरीक्षणात् ॥ ११३ ॥
विकृता आदिभाषेत्थं विकृतौ ध्वनिशब्दयोः ।
तत्समः तद्भवः शब्दः तत्सजातीय आगतः ॥ ११४ ॥
मूलवाग् वैदिकी भाषा सहजा संस्कृता मता ।
ततो वै विकृता भाषाः प्राकृता विविधा तथा ॥ ११५ ॥
हिमाद्रि परितो व्याप्ता मूलवाक् सहजा तथा ।
कदाचिच्च पुरा लोके ततो विश्वे च प्रासरत् ॥ ११६ ॥
प्राचि प्रतीचि चोदीचि अवाचि चैव विश्वतः ।
मूला च वैदिकी भाषा सहजा संस्कृता तथा ॥ ११७ ॥
समाना विश्वभाषाणां मूला भाषा विकल्पिता ।
तस्मात् तासु च सादृश्यं दृष्टं शिष्टैः निरन्तरम् ॥ ११८ ॥
पाणिनीयेन तन्त्रेण एतच्छक्यमजायत ।
तुलनात्मकपद्धत्या विश्वभाषासु शोधनात् ॥ ११९ ॥
ध्वनेः शब्दस्य ह्यर्थस्य सम्बन्धस्यापि सर्वथा ।
ऐतिह्यं शक्यतेऽन्वेष्टुं पाणिनीयेन मूलतः ॥ १२० ॥

भारतीयैश्च पाश्चात्त्यैः भाषावैज्ञानिकैः ध्रुवम् ।
भाषातत्त्वावबोधाय पाणिनीयं समादृतम् ॥ १२१ ॥

प्रमाणभूत आचार्यः पाणिनिः शब्दतत्त्ववित् ।
वरिष्ठोऽयं गरिष्ठश्च ज्ञातेषु शब्दशास्त्रिषु ॥ १२२ ॥
वैदिकस्य समस्तस्य नूनं लौकिकस्य च ।
वाङ्मयस्य च लोकेऽस्मिन् पाणिनिः परिरक्षकः ॥ १२३ ॥

संस्कृता जीविता लोके साम्प्रतं यदि दृश्यते ।
श्रेयश्च पाणिनेस्तत्र नाऽत्र सन्देहसम्भवः ॥ १२४ ॥
मानवप्रतिभासारः पाणिनीयागमालयः ।
शास्त्रसन्दोहहैयङ्गवीनं हि कथ्यते बुधैः ॥ १२५ ॥

बद्धे शब्दार्थसम्बन्धसिद्धान्ते पाणिनीयके ।
ग्रन्थेऽस्मिन् पाणिनीया वै प्रवृत्तिरुपवर्णिता ॥ १२६ ॥
शब्दोऽर्थश्चैव सम्बन्धो बद्धः पाणिनिसम्मतः ।
शब्देऽर्थे चैव सम्बन्धे ग्रन्थः काण्डत्रये मुदा ॥ १२७ ॥

संविभक्तानि काण्डानि समुद्देशेषु विंशतौ ।
शास्त्रैतिह्यांशसारोऽपि पूर्वं प्रस्तावनान्वितः ॥ १२८ ॥
परिशिष्टैर्विशिष्टैश्च अनेकैर्वै विभूषितः ।
शास्त्रिणा नरदेवेन पाणिनीयात्मना मुदा ॥ १२९ ॥

अथ शब्दार्थसम्बन्धसिद्धान्तं पाणिनीयकम् ।
ग्रथमानेन विज्ञानां प्रीतये महता मुदा ॥ १३० ॥
सार्वकालिकमाख्यातं संस्कृतं सार्वदेशिकम् ।
प्रतिपादयता नित्यं वदता च मुहुर्मुहुः ॥ १३१ ॥
सरस्वती - प्रसूतेन पञ्चानन्दतनूभुवा ।
पाणिनीयात्मना लोके संस्कृतवाग्घितार्थिना ॥ १३२ ॥

संस्कृतगौरवोन्मग्नः पाणिनीयप्रसिद्धये ।
सम्पादकश्च पत्रस्य संस्कृतमासिकस्य च ॥ १३३ ॥
शास्त्री च नरदेवोऽसौ प्रवर्तते दिवानिशम् ।
पत्रञ्च मासिकं तत् स्यान्नः संस्कृतप्रचारकम् ॥ १३४ ॥

विश्वविद्यालये ख्याते शिमलास्थे हिमाचले ।
साम्प्रतं सेवमानोऽसौ प्राचार्यः शब्दशास्त्रकः ॥ १३५ ॥
संस्कृतसेवको नित्यं विदुषाञ्च वशंवदः ।
पाणिनीयार्थसर्वस्वः सर्वदा श्रुतिसम्बलः ॥ १३६ ॥

# सङ्क्षिप्तसङ्केतविवर्णना

| | | |
|---|---|---|
| १. अ० | = | अध्याय: |
| २. अष्टा० | = | अष्टाध्यायी |
| ३. अष्टा० महाभा० | = | अष्टाध्यायीमहाभाष्यम् |
| ४. अम० को० | = | अमरकोश: |
| ५. अष्टा० ग० पा० | = | अष्टाध्यायीगणपाठः |
| ६. अप० प्रक० | = | अपवादप्रकरणम् |
| ७. अग्निस्वा०भा० | = | अग्निस्वामिभाष्यम् |
| ८. अथर्ववे० सं० | = | अथर्ववेदसंहिता |
| ९. अनं० भा० | = | अनन्तदेवभाष्यम् |
| १०. आ० नि० | = | आकाशनिरूपणम् |
| ११. आ० नि० | = | आकाङ्क्षानिरूपणम् |
| १२. आपि० शि० सू० | = | आपिशलिशिक्षासूत्रम् |
| १३. अभिज्ञा० शाकु० | = | अभिज्ञानशाकुन्तलम् |
| १४. उत्तरराम० | = | उत्तररामचरितम् |
| १५. उमासं० | = | उमा-संहिता |
| १६. उणादिसू० | = | उणादिसूत्रम् |
| १७. उणा० व्या० | = | उणादिसूत्रव्याख्या |
| १८. उद्द्यो० | = | उद्द्योत: |
| १९. उ० भा० | = | उव्वटभाष्यम् |
| २०. ऋक्प्राति० | = | ऋक्प्रातिशाख्यम् |
| २१. ऋज्व० | = | ऋज्वर्थाऽभिधानम् |
| २२. ऋक्सं० | = | ऋक्संहिता |
| २३. ऋग्वे० सं० | = | ऋग्वेदसंहिता |
| २४. ऋक्० व्या० | = | ऋक्तन्त्रव्याकरणम् |
| २५. ऐत० आ० | = | ऐतरेयारण्यकम् |
| २६. ऐत० उ० | = | ऐतरेयोपनिषत् |
| २७. ऐत० ब्रा० | = | ऐतरेयब्राह्मणम् |
| २८. का० वा० | = | कात्यायनवार्तिकम् |

| | | |
|---|---|---|
| २९. कां० | = | काण्डम् |
| ३०. कौ० ब्रा० | = | कौषीतकीब्राह्मणम् |
| ३१. कात्या० श्रौ० सू० | = | कात्यायनश्रौतसूत्रम् |
| ३२. का० वृ० | = | काशिकावृत्तिः |
| ३३. कौ० शा० | = | कौटिल्यार्थशास्त्रम् |
| ३४. कारकच० | = | कारकचक्रम् |
| ३५. खं० खा० | = | खण्डनखाद्यम् |
| ३६. ग० पा० | = | गणपाठः |
| ३७. गोपथ ब्रा० | = | गोपथब्राह्मणम् |
| ३८. चरकसं० | = | चरकसंहिता |
| ३९. छान्दो०उ० / छा० उ० | = | छान्दोग्योपनिषत् |
| ४०. तत्पु० स० | = | तत्पुरुषसमासः |
| ४१. तत्त्वसं० | = | तत्त्वसङ्ग्रहः |
| ४२. तत्त्वमुक्ता० | = | तत्त्वमुक्तावली |
| ४३. तत्त्वा० सू० | = | तत्त्वार्थसूत्रम् |
| ४४. तत्त्वा० श्लो०वा० | = | तत्त्वार्थश्लोकवार्तिकम् |
| ४५. तत्त्वा०सू० वृ० | = | तत्त्वार्थसूत्रवृत्तिः |
| ४६. त्रिकां० शे० | = | त्रिकाण्डशेषः |
| ४७. तैत्ति० प्रा० | = | तैत्तिरीयप्रातिशाख्यम् |
| ४८. तैत्ति० आ० | = | तैत्तिरीयारण्यकम् |
| ४९. तैत्ति० उ० | = | तैत्तिरीयोपनिषत् |
| ५०. तैत्ति० सं० | = | तैत्तिरीयसंहिता |
| ५१. द्र० | = | द्रष्टव्यम् |
| ५२. दुर्गा० | = | दुर्गाचार्यः |
| ५३. दयानन्दभा० | = | दयानन्दभाष्यम् |
| ५४. दशपा० वृ० | = | दशपाद्युणादिवृत्तिः |
| ५५. ना० व० | = | नाट्यवर्गः |
| ५६. नि०सा० | = | नियमसारः |
| ५७. नि०सा०गा० | = | नियमसारगाथा |
| ५८. निघं० | = | निघण्टुः |
| ५९. निघं० नि० | = | निघण्टुनिर्वचनम् |
| ६०. निरु० | = | निरुक्तम् |

| | | |
|---|---|---|
| ६१. निरु०वृ० | = | निरुक्तवृत्तिः |
| ६२. न्या०द० | = | न्यायदर्शनम् |
| ६३. न्या०सि०मुक्ता० | = | न्यायसिद्धान्तमुक्तावली |
| ६४. न्या०मं० | = | न्यायमञ्जरी |
| ६५. न्या० | = | न्यासः |
| ६६. प्र०कौ० | = | प्रक्रियाकौमुदी |
| ६७. प्रौ० मनो० | = | प्रौढमनोरमा |
| ६८. परि० | = | परिभाषा |
| ६९. परि० | = | परिशिष्टम् |
| ७०. परिभा०वृ० | = | परिभाषावृत्तिः |
| ७१. परि०शे० | = | परिभाषेन्दुशेखरः |
| ७२. पा०धा०पा० | = | पाणिनीयधातुपाठः |
| ७३. प्रपञ्चसा० | = | प्रपञ्चसारः |
| ७४. प्र०समु० | = | प्रथमसमुल्लासः |
| ७५. पैप्प०शा० | = | पैप्पलादशाखा |
| ७६. प्रसादटी० \| प्र०टी० \| | = | प्रसादटीका |
| ७७. पृ० | = | पृष्ठम्, पृष्ठाङ्काः |
| ७८. प्रत्य०खं० | = | प्रत्यक्षखण्डम् |
| ७९. पाठा० | = | पाठान्तरः |
| ८०. प्र० | = | प्रदीपः |
| ८१. पा०शि० | = | पाणिनीयशिक्षा |
| ८२. पा०शि०सू० | = | पाणिनीयशिक्षासूत्रम् |
| ८३. पञ्चा०का०सं० | = | पञ्चास्तिकायसंग्रहः |
| ८४. प्रत्यभि० हृ० | = | प्रत्यभिज्ञाहृदयम् |
| ८५. पस्पशा० \| पस्प० \| | = | पस्पशाह्निकम् |
| ८६. प०मं० \| पदम० \| | = | पदमञ्जरी |
| ८७. प्रत्यक्षखं० | = | प्रत्यक्षखण्डम् |
| ८८. प्रत्या०सू० | = | प्रत्याहारसूत्रम् |
| ८९. पुण्य० | = | पुण्यराजः |
| ९०. बृह०उ० | = | बृहदारण्यकोपनिषत् |

| | | |
|---|---|---|
| ९१. ब्रह्म० वि०उ० | = | ब्रह्मविन्दूपनिषत् |
| ९२. ब्रह्मव० | = | ब्रह्मवर्गः |
| ९३. बहु०स० | = | बहुव्रीहिसमासः |
| ९४. बालमनो० | = | बालमनोरमा |
| ९५. बृहच्छ०शे० | = | बृहच्छब्देन्दुशेखरः |
| ९६. भाषावृ० वि० | = | भाषावृत्त्यर्थविवृत्तिः |
| ९७. भाषावृ० | = | भाषावृत्तिः |
| ९८. भा०प्र० | = | भावप्रदीपः |
| ९९. भाट्टदी० | = | भाट्टदीपिका |
| १००. भाषापरि० | = | भाषापरिच्छेदः |
| १०१. महाभा० | = | महाभाष्यम् |
| १०२. महाभा०टी० | = | महाभाष्यटीका |
| १०३ महाभा० \| महाभार० \| | = | महाभारतम् |
| १०४. मीमां० द० | = | मीमांसादर्शनम् |
| १०५. मीमां० श्लो०वा० | = | मीमांसाश्लोकवार्त्तिकम् |
| १०६. मनुस्मृ० | = | मनुस्मृतिः |
| १०७. यजुःसं० | = | यजुःसंहिता |
| १०८, यजुर्वे०संहिता | = | यजुर्वेदसंहिता |
| १०९. योग्यतानि० | = | योग्यतानिरूपणम् |
| ११०. यो०द० | = | योगदर्शनम् |
| १११. याज्ञ०शि०सू० | = | याज्ञवल्क्य-शिक्षासूत्रम् |
| ११२. य०वे० | = | यजुर्वेदः |
| ११३. र०प्र० | = | रत्नप्रभा |
| ११४. व० | = | वर्गः |
| ११५. वा० | = | वार्त्तिकम् |
| ११६. वाज०प्रा० | = | वाजसनेयिप्रातिशाख्यम् |
| ११७. वै०द० | = | वैशेषिकदर्शनम् |
| ११८. व्या०भा० | = | व्यासभाष्यम् |
| ११९. वा०प० | = | वाक्यपदीयम् |
| १२०. वे०द० | = | वेदान्तदर्शनम |
| १२१. वै०सि०कौ० | = | वैयाकरणसिद्धान्तकौमुदी |
| १२२. वै०सि०ल०मं० \| वै०सि०ल०मञ्जू० \| | = | वैयाकरणसिद्धान्तलघुमञ्जूषा |

| | | |
|---|---|---|
| १२३. वेदां० सा० | = | वेदान्तसारः |
| १२४. वा०भा० | = | वात्स्यायनभाष्यम् |
| १२५. वात्स्या०भा० | | ,, |
| १२६. ला०श्रौ०सू० | = | लाट्यायनश्रौतसूत्रम् |
| १२७. ले० | = | लेखकः |
| १२८. स्फोटवा० | = | स्फोटवादः |
| १२९. सार०व्या० | = | सारस्वतव्याकरणम् |
| १३०, सत्या०प्र० | = | सत्यार्थप्रकाशः |
| १३१. सिद्धां०शि० | = | सिद्धान्तशिरोमणिः |
| १३२. सां० द० | = | सांख्यदर्शनम् |
| १३३. सा० द० | = | साहित्यदर्पणः |
| १३४. सायणभा० | = | सायणभाष्यम् |
| १३५. स्फो० चं० | = | स्फोटचन्द्रिका |
| १३६. शक्तिनि० | = | शक्तिनिरूपणम् |
| १३७. शिवपु० | = | शिवपुराणम् |
| १३८. श्लो०वा० | = | श्लोकवार्तिकम् |
| १३९. शिशुपा० व० | = | शिशुपालवधः |
| १४०. श्लो० | = | श्लोकः |
| १४१. शक्त्या०नि० | = | शक्त्याश्रयनिरूपणम् |
| १४२. श्वेता०उ० | = | श्वेताश्वतरोपनिषत् |
| १४३. शत०ब्रा० | = | शतपथब्राह्मणम् |
| १४४. शि०दृ० | = | शिवदृष्टिः |
| १४५. श०श०प्रका० | = | शब्दशक्तिप्रकाशिका |
| १४६. शा०भा० | = | शाबरभाष्यम् |
| १४७. शां०भा० | = | शाङ्करभाष्यम् |
| १४८. शा० प० | = | शान्तिपर्व |
| १४९. श०कौ० | = | शब्दकौस्तुभः |
| १५०. हेला० | = | हेलाराजः |

# विषयानुक्रमणिका

---

ग्रन्थः शब्दार्थसम्बन्धसिद्धान्तः पाणिनीयकः ।
विषयानुक्रमैः पुष्टः परिशिष्टैश्च राजते ।।

# अथ पाणिनीयशब्दार्थसम्बन्धसिद्धान्तः

—स्वं रूपं शब्दस्याऽशब्दसञ्ज्ञा । अष्टा० १।१।६८

—येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति, स शब्दः । अष्टा० महाभा०, पस्पशा०

—अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।। वा०प० १।१ ।

**वर्णितविषयाः**

१—शब्दस्वरूपम् ।

२—शब्दोत्पत्तिप्रक्रिया ।

३—स्फोटः ।

४—शब्दब्रह्म ।

५—अनुशासनीयः शब्दः ।

६—साध्वसाधुशब्दविमर्शः ।

७—सञ्ज्ञाकरणम् ।

८—शब्दानां नित्यत्वम् ।

९—शब्दो गुणो वा द्रव्यं वा ।

अथ शब्दार्थसम्बन्धसिद्धान्ते पाणिनीयके ।
समुद्देशेषु चैतेषु शब्दकाण्डं समोहितम् ।।

आत्मा बुद्धया समेत्यार्थान् मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।।




विभजन् स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः ।
प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते ।।

तस्य प्राणे च या शक्तिः या च बुद्धौ व्यवस्थिता ।
विवर्तमाना स्थानेषु सैषा भेदं प्रपद्यते ।।

# अथ पाणिनीयशब्दार्थसम्बन्धसिद्धान्तः

## शब्दकाण्डे प्रथमः समुद्देशः

### अथ शब्दस्वरूपम्

अनुभूतेरभिव्यक्तेश्च प्राणिषु स्वाभाविकी प्रवृत्तिः सन्तिष्ठते। चाक्षुषै रासनैः त्वाचैः घ्राणैश्च साधनैः प्रतिपत्तारोऽनुभूतिमधिगच्छन्ति। तत्र सर्वत्र च अनुभूतिग्राहकेण साधनेन सह वक्तुः श्रोतुश्च मानसं साहाय्यमपेक्ष्यते। अर्थतत्त्वमनुभूय प्राणिनः तदभिव्यक्तये नानाविधं प्रयतमाना दृश्यन्ते। सर्वेष्वपि अभिव्यक्तिप्रकारेषु चाक्षुषः त्वाचः शाब्दश्च प्रकारोऽभिप्रायाभिव्यक्तौ श्रेयानिति वक्तुं शक्यते। अभिनयादिस्थले अक्षिनिकोचैः पाणिविहारैरन्यैश्च इङ्गितादिभिरभिनेतारः स्वाभिप्रायं प्रकटयन्ति। मूकाः प्राणिनश्चापि चेष्टितेनैव साधनेन नैजमाशयं प्रकाशयन्ति। परमेभिः साधनैः न तावद् विशदम् अभिप्रायोऽभिव्यज्यते, यावच्छाब्दैः साधनैः कृत्स्नोऽभिप्रायो विशदम् उपस्थाप्यते।

शाब्दं साधनमिदं प्रयोक्तारो लोकात् समधिगच्छन्ति। भाषा हि खलु सामाजिकी सम्पदुच्यते। यः शाब्दः सङ्केतः समाजे यत्रार्थे विनिश्चीयते, तेन शाब्देन सङ्केतेन स एवार्थोऽभिधीयते। अतो लोकव्यवहारादेव प्रयोक्ता शब्दप्रयोगे समर्थो भवति। ध्वनिसमुदायं हि प्रायः शब्दपदेन व्यवहरन्ति लौकिकाः। शब्दशास्त्रिभिरपि ध्वन्यात्मकः शब्दोऽनुमोदितः। प्रवक्तुः प्रतिपत्तुश्च परस्परं व्यवहारसम्पादनार्थं शब्दाः प्रयुज्यन्ते। प्रयोक्ता स्वकीयाम् अन्तःस्थां भावनां प्रकटयितुं शब्दभावनां कुरुते। सा शब्दभावना एव प्रवीतपदार्थकेन ध्वन्यात्मकेन शब्दरूपेण प्रवर्तते लोके। शब्दानां ध्वन्यात्मकं रूपं व्यावहारिकस्वरूपं भवति। पाणिनिना[1] शब्दशास्त्रीयप्रक्रियां सम्पादयितुं ध्वन्यात्मकं व्यावहारिकमेव शब्दस्वरूपं समाश्रितम्। पाणिनिरन्यदपि एकं शब्दस्वरूपं निर्दिदेश यदस्ति शब्दानां तात्त्विकं शब्दस्वरूपम्। तात्त्विकमे-

---

१. स्वं रूपं शब्दस्याशब्दसञ्ज्ञा। (अष्टा०, १।१।६८)

तच्छब्दस्वरूपं भाषावैज्ञानिकमपि वक्तुं शक्यते। पतञ्जलि[1]रर्थपदेन तच्छब्द-स्वरूपं व्याचष्ट, यच्छब्दभावनारूपेण वक्तरि पूर्वत एव सन्तिष्ठते। अग्रे भाषातात्त्विकमिदं शब्दस्वरूपमेवाऽस्माभिः स्फोटपदेन व्यवहरिष्यते। यः ध्वनिसमुदायः कञ्चनाऽर्थप्रत्ययं जनयितुं समर्थः स एव शब्दपदव्यवहार्यो भवति। अर्थप्रत्ययाऽनुत्पादकः केवलं श्रोतृगृहीतो ध्वनिः शब्दशास्त्रे शब्दपदाऽनर्हो भवति।

उपर्यस्माभिः द्विविधं नाम शब्दस्वरूपं निर्दिष्टम्—

१. व्यावहारिकं शब्दस्वरूपम्।
२. भाषातात्त्विकं भाषावैज्ञानिकं वा शब्दस्वरूपम्।

कस्मैचनाऽपि शब्दशास्त्रिणे उभयविधमपि शब्दस्वरूपमभिमतं भवति। शब्दपूर्णतायै उभयमपि भवति आवश्यकम्। पाणिनीयतन्त्रे शब्दस्य स्वरूप-द्वयमपि अभिमतं साकल्येन व्याख्यातञ्च। शब्दतत्त्वदृष्ट्या उभयमप्यत्र विविच्यते।

**१. व्यावहारिकं शब्दस्वरूपम्—**

समेऽपि लौकिकाः व्यवहाराः व्यावहारिकेणैव शब्दस्वरूपेण सम्पाद्यन्ते। 'शा-शपिभ्यां ददनाविति[2]' सूत्रेण उणादिकारो व्यवहारसाधनं हि शब्दं स्वीकुरुते। शब्दपदव्युत्पत्त्या एतदनुमीयते यत् प्रारम्भिकी शब्दप्रवृत्तिः नाम-करणात्मिका सम्बभूव। उणादिं व्याचक्षाणः दशपाद्युणादिवृत्तिकारः आह्वान-करणं शब्दं व्याचष्ट।[3] एवञ्च शपन्ति, व्यपदिशन्ति आह्वयन्ति वाऽनेन वाग्व्यापारेण स खलु शब्द उच्यते। स्वामी दयानन्दोऽपि स्वकीयोणादिव्याख्यायां तथाभूतमेव शब्दं व्याचकार[4]। शब्दस्येयं व्युत्पत्तिः परिभाषा वा शब्दस्य व्यावहारिकस्वरूपदृष्ट्या एव क्रियते। व्यवहारे प्रायः शब्दस्य आन्तरिकं तात्त्विकं स्वरूपं नाऽनुभूयते। पतञ्जलिनाऽपि चर्चितोऽयं लोकप्रतीति-जनकः व्यावहारिकः शब्दो ध्वनिसमुदायरूपः[5]। लोके ध्वनिं कुर्वन् बालक उच्यते 'शब्दकारी खल्वयं माणवक' इति। ध्वनिमभिप्रेत्य चोच्यते— 'शब्दं कुरु, शब्दं मा कार्षीरिति'। अतः शब्दपदेन लोके प्रतीतपदार्थको ध्वनिविशेषः

१. अस्त्यन्यत् स्वं शब्दस्येति। किं पुनस्तत्? अर्थः। अष्टा० १।१।६८। महाभा०
२. उणादि सू०, ४।९४।
३. शपन्ति तेनेति शब्दः।...संस्कृता वाक्। करणमिति। (दशपा० वृ० ६।४८)
४. शप्यते आहूयतेऽनेन स शब्दो नादः। (उणा० व्या०, ४।९७)
५. अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते—तस्माद् ध्वनिः शब्दः। अष्टा० महाभा०, पस्पशा०।

शब्दः स्यातः । तेषां शब्दानामनेन पाणिनीयेन तन्त्रेण अनुशासनं क्रियते इति पतञ्जलेः तत्रत्योऽभिप्रायः। अत्रेदं न विस्मर्तव्यं यन्नादे ध्वनिसमुदाये वा शब्दत्वव्यपदेशः शब्दभावनात्मके स्फोटरूपेऽन्तःशब्दे, बाह्ये च ध्वन्यात्मके शब्दे अभेदबुद्ध्या एव क्रियते । भाषातत्त्वदृष्ट्या प्रतीत्यजनकस्य ध्वनिसमुदायस्याऽपि शब्दत्वेनाऽनभिप्रेतत्वात् । प्रयोगदृष्ट्या हि शब्दानां व्यावहारिकं स्वरूपं समाश्रीयते । शब्दस्य स्वरूपग्राहकः प्रयोग एव भवति । लौकिकप्रयोगं विना शब्दस्य रूपनिर्ग्रहो न भवति कथञ्चिदपीति पतञ्जलिना व्याख्यातम्[1] ।

आचार्य उपवर्षः शब्दस्येदं व्यावहारिकं स्वरूपमेवाऽभिप्रेत्य ध्वनीनां शब्दत्वं स्वीचकार । मीमांसासूत्रं व्याचक्षाणः शबरस्वामी उपवर्षमतमन्ववदत्[2] । तद्रीत्या गौरित्यत्र गकारौकारविसर्जनीयरूपध्वनिसङ्घात एवाऽस्ति शब्दः । बादरायणसूत्रं भाषमाणः आचार्यः शङ्करोऽपि[3] इदमेव मतममुपवर्षस्य अभिमतमित्यवोचत । भगवत उपवर्षस्येदं निरुक्तं मतं वस्तुतः शब्दानां प्रायोगिकरूपमात्रं संलक्ष्यैव विद्यते । यदि ततः प्राक् स्फोटात्मकः आन्तरः शब्दो न भवेत्तदा नियताऽर्थे नियतस्य ध्वन्यात्मकस्य शब्दस्योच्चारणमपि न सम्भवेत् । एतच्च सद्य एवाग्रेऽस्माभिः सम्यङ् निरूपयिष्यते ।

लोके शब्दव्यवहाराय कण्ठताल्वाद्यभिघातेन प्रयुक्तो ध्वनिः शब्दभावनान्तरमेव प्रतिपत्तुः शाब्दप्रत्ययं जनयति । शब्दं परिभाषमाणः पतञ्जलिः शब्दे तथ्यत्रयमित्थं निर्दिदेश[4]—

क–श्रोत्रोपलब्धिः,

ख–बुद्धिनिर्ग्राह्यः,

ग–प्रयोगेणाऽभिज्वलितश्चेति । शब्दशाकल्यार्थम् एतत् त्रयमपि भवति आवश्यकम् । व्यावहारिकशब्दस्वरूपस्य इमे एवाऽऽधाराः ।

**क. श्रोत्रोपलब्धिः**—

श्रवणेन्द्रियेण भवति शब्दस्योपलब्धिः । श्रोत्रमात्रविषयत्वाच्छब्दस्य,

---

१. रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकप्रयोगम् ।
(अष्टा०, १।१।२२ तथा ६।४।१६ महाभा०)

२. अथ गौरित्यत्र कः शब्दः ? गकारौकारविसर्जनीया इति भगवानुपवर्षः ।
(मी०द०, १।१।५, शा०भा०)

३. वर्णा एव तु शब्दा इति भगवानुपवर्षः । (वे०द०, १।३।२८, शां०भा०)

४. श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः ।
(अष्टा०, प्रत्या०, सू० १, महाभा०, २ आ०)

श्रोत्रमन्तरा शब्दस्योपलब्धिरसम्भविनी । शब्दस्य व्यावहारिकस्वरूपावगतये श्रोत्रेण शब्दप्रत्यक्षमावश्यकं भवति । कर्णशष्कुलीवर्ति आकाशमुच्यते श्रोत्रम् ।

शब्दस्य आश्रयश्च भवत्याकाशम्[१] । गौतमः[२] कणादश्च[३] आकाशगुणत्वं शब्दस्य व्याचष्ट । इन्द्रियाणां विषयः अर्थपदेनाऽप्यभिधीयते । अतएव श्रोत्रस्यार्थः शब्द इत्यपि कैश्चिद्[४] व्याख्यातः ।

**ख. बुद्धिनिर्ग्राह्यः—**

कण्ठताल्वाद्यभिघातेन ध्वनयः क्रमशः उत्पद्यन्ते । उच्चारिताश्च पुनः क्रमशो ध्वस्ता भवन्ति । एवञ्च एकत्र एकदा च ध्वनिसमुदाय उपलब्धुं न शक्यते । उच्चरितप्रध्वंसिशीलैः पूर्वपूर्वध्वनिभिः बुद्धौ तच्छब्दसंस्कारः संस्थाप्यते । स क्रमप्राप्तः बौद्धः शब्दसंस्कार एव अन्त्येन ध्वनिना अभिव्यक्तो भवति । इत्थं हि अन्त्यवर्णश्रवणानन्तरं बुद्ध्या व्यावहारिकं शब्दस्वरूपं सुविज्ञातं भवति । इदमेव तथ्यं कैयटः[५] अन्त्यबुद्धिनिर्ग्राह्यपदेन प्रत्यपादयत् । ध्वन्यात्मके नादे शब्दसंस्कारो वक्तृभावनाऽनुसारेण पूर्वत एव सन्तिष्ठते । प्रतिपत्तुः शब्दग्रहणे शाब्दबोधे च एष शब्दसंस्कारो भवति आवश्यकः[६] ।

**ग. प्रयोगेणाभिज्वलितः—**

शब्दस्य श्रोत्रोपलब्धित्वं बुद्धिनिर्ग्राह्यता वा प्रयोगं विना न सम्भवति कथञ्चित् । प्रयोगपदमत्र ध्वन्यर्थकम्[७] । ध्वनिरेव भवति शब्दस्य व्यावहारिकत्वप्रयोजकम् । यथाऽस्माभिः प्राक् प्रतिपादितम्, ध्वनिसमुदाय एव प्रतिपत्तुः शाब्दं प्रत्ययं जनयति । शब्दस्य प्रायोगिकं रूपं भवति ध्वनिः । पतञ्जलिः स्फोटलक्षणस्य शब्दस्य ध्वनिं गुणं समाचष्ट[८] । कस्यचनापि वस्तुतत्त्वस्योपकारको ग्राहको वा तद्गतो गुण एव भवति । ध्वनिना प्रकाशित

---

१ ···आकाशदेशः शब्दः । (अष्टा०, प्रत्या० सू०१, महाभा०)

२. गन्धरस-रूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः । (न्या०द०, १ १।१४)

३. परिशेषाल्लिङ्गमाकाशस्य । (वै०द०, २।१।२७)

४. श्रोत्रग्रहणे योऽर्थः स शब्दः । (वै०द०, २।२।२१)

५. पूर्वपूर्वध्वन्युत्पादिताऽभिव्यक्तिजनितसंस्कारपरम्पराप्राप्तपरिपाकान्त्यबुद्धिनिर्ग्राह्य इत्यर्थः । (अष्टा०, प्रत्या० सू० १ महाभा०, प्र०)

६. नादैराहितबीजायामन्त्येन ध्वनिना सह, आवृत्तिपरिपाकायां बुद्धौ शब्दोऽवधार्यते । (वा० प०, १।८४)

७. प्रयुज्यते इति प्रयोगो ध्वनिः, तेनाऽभिव्यक्तः (अष्टा० प्रत्या० सू० १ महाभा० प्र०)

८. एवं तर्हि स्फोटः शब्दः, ध्वनिः शब्दगुणः । (अष्टा० १।१।७०, महाभा०)

एव शब्दः व्यक्तरूपग्रहणाऽनुगुणैरुपायभूतैरनुपाख्येयैः प्रत्ययैः स्वरूपं ग्राहयतीति भर्तृहरिः प्रत्यपादयत्[1]। अलब्धक्रमया वाचा प्रतिपत्ता कञ्चनाऽप्यर्थं नाऽधिगच्छति[2]। एवञ्च 'अ इ उ ण्[3]' इति सूत्रभाष्ये पतञ्जलेः निरुक्तमिदं शब्दस्वरूपं सिद्धान्तभूतमिति निर्धारणीयम्—

"श्रोत्रोपलब्धिः बुद्धिनिर्ग्राह्यः प्रयोगेणाऽभिज्वलित आकाशदेशः शब्दः।" इति।

अथ शब्दानुशासनमिति ब्रुवाणस्य पतञ्जलेः शब्दपदेन नादाख्यो व्यावहारिकः शब्द एवाऽभिप्रेतः। शब्दशास्त्रीयप्रक्रियायां तस्यैवोपयोगसम्भवात्। ह्रस्व-दीर्घ-प्लुतोदात्तानुदात्त-स्वरितानुनासिक-निरनुनासिक-द्रुत-मध्यम-विलम्बित-गुण-वृद्ध्यादिव्याकरणकार्याणि तत्रैव ध्वन्यात्मके शब्दे सम्भवन्ति। स्फोटे तु निरुक्तकार्याणि कथञ्चिदपि न सम्भवन्ति। प्राकृतवैकृतनादयोः कालभेद एव स्फोटलक्षणे अन्तःशब्दे आरोप्यते[4]। वस्तुतः अक्रमो भवति शब्दः, क्रमजन्मा च भवति नादः। नादस्य क्रमजन्मत्वादेव शब्दः क्रमवान् भेदवान् वा दृश्यते[5]। उभयोः तात्त्विको भेदोऽस्माभिः पश्चाद् विचारयिष्यते। एतत्तु सुस्पष्टमवधेयं यदेतच्छब्दस्वरूपे भेदपरिकल्पनं विचारसौकर्यार्थं प्रयोगदृष्ट्या चैवाऽश्रितम्। सर्वात्मना अभिधायकस्तु शब्द एक एव। अर्थाविबोधने उभयस्यैव शक्तत्वात्। ध्वनिरहितस्य केवलस्य स्फोटस्य शब्दत्वव्यपदेशः केवलमौपचारिकः, शब्दानामर्थबोधनैकमात्रफलकत्वेन सुगमतया कात्स्न्र्येन तत्र तदभावात्। अविचारिते अव्यक्तवर्णके रभसोच्चारिते केवले ध्वनौ शब्दत्वव्यपदेशोऽपि एतादृश एव। तेनाऽपि अर्थाविबोधनाऽभावात्। क्वचिदेतादृशेन शब्देन कस्यचिद् गृहीतशक्तिकस्य शाब्दबोधे सम्भवत्यपि तत्राऽनुशासनीयशब्दत्वं नास्ति। स्फोटस्य ध्वनेश्च पार्थक्येन ग्रहणं न सम्भवति। स्फोटरूपाऽभिन्नो ध्वनिः श्रोतृभिः गृह्यते[6]।

---

१. प्रत्ययैरनुपाख्येयैः ग्रहणाऽनुगुणैस्तथा।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते॥ (वा०प० १।८३)

२. एवं ह्याह—ज्ञेयेन न विना ज्ञानं व्यवहारेऽवतिष्ठते।
नालब्धक्रमया वाचा कश्चिदर्थोऽभिधीयते॥ (स्वोपज्ञे उद्धृतः। वा० प० १।८६)

३. अष्टा० प्रत्या० सू० १।

४. स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु।
प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते॥ (वा०प० १।७६)

५. नादस्य क्रमजन्मत्वान्नाऽपूर्वो न परश्च सः।
अक्रमः क्रमरूपेण भेदवानिव जायते॥ (वा०प०, १।४८)

६. स्फोटरूपाऽविभागेन ध्वनेः ग्रहणमिष्यते। (वा०प० १।८१)

श्रोत्रमन्तरा शब्दस्योपलब्धिरसम्भविनी । शब्दस्य व्यावहारिकस्वरूपावगतये श्रोत्रेण शब्दप्रत्यक्षमावश्यकं भवति । कर्णशष्कुलीवर्ति आकाशमुच्यते श्रोत्रम् ।

शब्दस्य आश्रयश्च भवत्याकाशम्[1] । गौतमः[2] कणादश्च[3] आकाशगुणत्वं शब्दस्य व्याचष्ट । इन्द्रियाणां विषयः अर्थपदेनाऽप्यभिधीयते । अतएव श्रोत्रस्यार्थः शब्द इत्यपि कैश्चिद्[4] व्याख्यातः ।

## ख. बुद्धिनिर्ग्राह्यः—

कण्ठताल्वाद्यभिघातेन ध्वनयः क्रमशः उत्पद्यन्ते । उच्चारिताश्च पुनः क्रमशो ध्वस्ता भवन्ति । एवञ्च एकत्र एकदा च ध्वनिसमुदाय उपलब्धुं न शक्यते । उच्चरितप्रध्वंसिशीलैः पूर्वपूर्वध्वनिभिः बुद्धौ तच्छब्दसंस्कारः संस्थाप्यते । स क्रमप्राप्तः बौद्धः शब्दसंस्कार एव अन्त्येन ध्वनिना अभिव्यक्तो भवति । इत्थं हि अन्त्यवर्णश्रवणानन्तरं बुद्ध्या व्यावहारिकं शब्दस्वरूपं सुविज्ञातं भवति । इदमेव तथ्यं कैयटः[5] अन्त्यबुद्धिनिर्ग्राह्यपदेन प्रत्यपादयत् । ध्वन्यात्मके नादे शब्दसंस्कारो वक्तृभावनाऽनुसारेण पूर्वत एव सन्तिष्ठते । प्रतिपत्तुः शब्दग्रहणे शाब्दबोधे च एष शब्दसंस्कारो भवति आवश्यकः[6] ।

## ग. प्रयोगेणाभिज्वलितः—

शब्दस्य श्रोत्रोपलब्धित्वं बुद्धिनिर्ग्राह्यता वा प्रयोगं विना न सम्भवति कथञ्चित् । प्रयोगपदमत्र ध्वन्यर्थकम्[7] । ध्वनिरेव भवति शब्दस्य व्यावहारिकत्वप्रयोजकम् । यथाऽस्माभिः प्राक् प्रतिपादितम्, ध्वनिसमुदाय एव प्रतिपत्तुः शाब्दं प्रत्ययं जनयति । शब्दस्य प्रायोगिकं रूपं भवति ध्वनिः । पतञ्जलिः स्फोटलक्षणस्य शब्दस्य ध्वनिं गुणं समाचष्ट[8] । कस्यचनापि वस्तुतत्त्वस्योपकारको ग्राहको वा तद्गतो गुण एव भवति । ध्वनिना प्रकाशित

---

१ …आकाशदेशः शब्दः । (अष्टा०, प्रत्या० सू०१, महाभा०)

२. गन्धरस-रूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः । (न्या०द०, १ १।१४)

३. परिशेषाल्लिङ्गमाकाशस्य । (वै०द०, २।१।२७)

४. श्रोत्रग्रहणे योऽर्थः स शब्दः । (वै०द०, २।२।२१)

५. पूर्वपूर्वध्वन्युत्पादिताऽभिव्यक्तिजनितसंस्कारपरम्पराप्राप्तपरिपाकान्त्यबुद्धिनिर्ग्राह्य इत्यर्थः । (अष्टा०, प्रत्या० सू० १ महाभा०, प्र०)

६. नादैराहितबीजायामन्त्येन ध्वनिना सह, आवृत्तिपरिपाकायां बुद्धौ शब्दोऽवधार्यते । (वा० प०, १।८४)

७. प्रयुज्यते इति प्रयोगो ध्वनिः, तेनाऽभिव्यक्तः (अष्टा० प्रत्या० सू० १ महाभा० प्र०)

८. एवं तर्हि स्फोटः शब्दः, ध्वनिः शब्दगुणः । (अष्टा० १।१।७०, महाभा०)

एव शब्दः व्यक्तरूपग्रहणाऽनुगुणैरुपायभूतैरनुपाख्येयैःप्रत्ययैः स्वरूपं ग्राहयतीति भर्तृहरिः प्रत्यपादयत्[1]। अलब्धक्रमया वाचा प्रतिपत्ता कञ्चनाऽप्यर्थं नाऽधिगच्छति[2]। एवञ्च 'अ इ उ ण्[3]' इति सूत्रभाष्ये पतञ्जलेः निरुक्तमिदं शब्दस्वरूपं सिद्धान्तभूतमिति निर्धारणीयम्—

"श्रोत्रोपलब्धिः बुद्धिनिर्ग्राह्यः प्रयोगेणाऽभिज्वलित आकाशदेशः शब्दः।" इति।

अथ शब्दानुशासनमिति ब्रुवाणस्य पतञ्जलेः शब्दपदेन नादाख्यो व्यावहारिकः शब्द एवाऽभिप्रेतः। शब्दशास्त्रीयप्रक्रियायां तस्यैवोपयोगसम्भवात्। ह्रस्व-दीर्घ-प्लुतोदात्तानुदात्त-स्वरितानुनासिक-निरनुनासिक-द्रुत-मध्यम-विलम्बित-गुण-वृद्ध्यादिव्याकरणकार्याणि तत्रैव ध्वन्यात्मके शब्दे सम्भवन्ति। स्फोटे तु निरुक्तकार्याणि कथञ्चिदपि न सम्भवन्ति। प्राकृतवैकृतनादयोः कालभेद एव स्फोटलक्षणे अन्तःशब्दे आरोप्यते[4]। वस्तुतः अक्रमो भवति शब्दः, क्रमजन्मा च भवति नादः। नादस्य क्रमजन्मत्वादेव शब्दः क्रमवान् भेदवान् वा दृश्यते[5]। उभयोः तात्त्विको भेदोऽस्माभिः पश्चाद् विचारयिष्यते। एतत्तु सुस्पष्टमवधेयं यदेतच्छब्दस्वरूपे भेदपरिकल्पनं विचारसौकर्यार्थं प्रयोगदृष्ट्या चैवाऽश्रितम्। सर्वात्मना अभिधायकस्तु शब्द एक एव। अर्थावबोधने उभयस्यैव शक्तत्वात्। ध्वनिरहितस्य केवलस्य स्फोटस्य शब्दत्वव्यपदेशः केवलमौपचारिकः, शब्दानामर्थबोधनैकमात्रफलकत्वेन सुगमतया कात्स्न्र्येन तत्र तदभावात्। अविचारिते अव्यक्तवर्णके रभसोच्चारिते केवले ध्वनौ शब्दत्वव्यपदेशोऽपि एतादृश एव। तेनाऽपि अर्थावबोधनाऽभावात्। क्वचिदेतादृशेन शब्देन कस्यचिद् गृहीतशक्तिकस्य शाब्दबोधे सम्भवत्यपि तत्राऽनुशासनीयशब्दत्वं नास्ति। स्फोटस्य ध्वनेश्च पार्थक्येन ग्रहणं न सम्भवति। स्फोटरूपाऽभिन्नो ध्वनिः श्रोतृभिः गृह्यते[6]।

---

१. प्रत्ययैरनुपाख्येयैः ग्रहणाऽनुगुणैस्तथा।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते॥ (वा०प० १।८३)

२. एवं ह्याह—ज्ञेयेन न विना ज्ञानं व्यवहारेऽवतिष्ठते।
नालब्धक्रमया वाचा कश्चिदर्थोऽभिधीयते॥ (स्वोपज्ञे उद्धृतः। वा० प० १।८६)

३. अष्टा० प्रत्या० सू० १।

४. स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु।
प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते॥ (वा०प० १।७६)

५. नादस्य क्रमजन्मत्वान्नाऽपूर्वो न परश्च सः।
अक्रमः क्रमरूपेण भेदवानिव जायते॥ (वा०प०, १।४८)

६. स्फोटरूपाऽविभागेन ध्वनेः ग्रहणमिष्यते। (वा०प० १।८१)

## २. भाषातात्त्विकं शब्दस्वरूपम्—

स्फोटध्वन्योरभेदबुद्धया ध्वनिसमुदाये शब्दत्वं व्यपदिश्यत इति प्राक् चर्चितमस्माभिः प्रतीतपदार्थके ध्वनौ शब्दत्वं स्वीकुर्वाणस्य पतञ्जलेरपि अयमेवाऽऽशयः। पतञ्जलेः अभिप्रायं स्पष्टयन् नागेशः[1] तत् प्रायोगिकं शब्दस्वरूपं व्याचष्ट। व्यवहारे पदार्थावगतये लोकाः तत् स्वीकुर्वते। वस्तुतः शब्दाऽभिव्यक्तेः साधनमस्ति ध्वनिः। वक्तुः पूर्वनिश्चितं शब्दसंस्कारं प्रकटयति ध्वनिसङ्घातः। ध्वन्यतिरिक्तमेकम् अन्यत् तात्त्विकं शब्दस्वरूपमस्ति। पाणिनीये तन्त्रे मौलिकरूपेण एतदुपवर्णितम्। सम्प्रत्ययनिमित्तकः ध्वनिसमुदायः भवति वैज्ञानिकः शब्दः। येनोच्चारितेन शब्देन प्रतिपत्तुरर्थप्रतिपत्तिर्भवति स एव शब्दः। गौरिति शब्दे गकारौकाराभ्यामन्योऽस्ति कश्चिच्छब्दस्य प्रयोजकः। अथ गौरित्यत्र शब्दमनुसन्दधानस्य पतञ्जलेरयमेवाऽभिप्रायः। "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः[2]।" इति पतञ्जलेरुक्तं शब्दलक्षणं शब्दस्य स्फोटात्मकमान्तरिकं स्वरूपं सङ्केतयति।

**पाणिनिपतञ्जली—**

पाणिनीये सम्प्रदाये स्वयं तत्रभवान् पाणिनिराचार्य एव सर्वप्रथमं स्वकीयं मौलिकं मतमुपन्यस्तवान्। शब्दानुशासनप्रयोजनकेऽस्मिन् पाणिनीये शब्दशास्त्रे शास्त्रीयसंज्ञां विहाय शब्दस्य स्वरूपं गृह्यते इति पाणिनिना निर्दिष्टम्[3]। अग्नेर्ढगि[4]त्यादिविधिस्थलेषु अग्नीतिशब्दस्वरूपस्य तत्पर्यायाणां च ग्रहणे सम्प्राप्ते पाणिनिरयमाचार्यो नियमयति—'अग्नीति' आनुपूर्वीकस्य शब्दस्वरूपस्यैवाऽत्र ग्रहणमुचितम्, नान्यस्येति। पाणिनिमते शब्दस्य स्वत्वद्वयमस्ति। १. रूपम्, २. अर्थश्च। क्वचिदेकस्य प्राधान्यम् अपरस्य च गौणत्वम्। लोके व्यवहारसम्पादनाय अर्थकृतं प्राधान्यमाश्रीयते[5]। शब्दशास्त्रे तु प्रक्रियानिर्वाहार्थं निर्देशस्थले शब्दगतस्य रूपस्यैव प्राधान्यं भवति, अर्थस्तु तत्र गुणभूतः। 'अदर्शनं लोपः[6]' इत्यत्र अदर्शनशब्दस्वरूपस्य तत्पर्यायाणाञ्च योऽर्थो लोके

---

१. लोके व्यवहर्तृषु पदार्थबोधकत्वेन प्रसिद्धः श्रोत्रेन्द्रियग्राह्यत्वाद् वर्णरूप ध्वनिसमूह एव शब्द इत्यर्थः। (अष्टा० महाभा०, पस्पशा०, प्र०, उद्द्यो०)

२. अष्टा० महाभा०, पस्पशा०।

३. स्वं रूपं शब्दस्याशब्दसंज्ञा। (अष्टा०, १।१।६८)

४. अष्टा० ४।२।३३।

५. लोकेऽर्थरूपता शब्दः प्रतिपन्नः प्रवर्तते।
शास्त्रे तूभयरूपत्वं प्रविभक्तं विवक्षया॥ (वा०प० २।१३३)

६. अष्टा०, १।१।६०।

प्रसिद्धः अदर्शनशब्देन स एवाऽर्थोऽभिप्रेतः । ढगादिस्थले अग्निशब्दातिरिक्तस्य शब्दस्य व्यावृत्त्यर्थं पाणिनिना स्वीकृत एष नियमः । 'स्वं रूपं शब्दस्याऽशब्द-संज्ञेति[1]' सूत्रं भाषमाणः पतञ्जलिः शब्दगतं स्वत्वद्वयमेतत् स्वीकुरुते—

'अस्त्यन्यद् रूपात् स्वं शब्दस्येति ।
किं पुनस्तत् ? अर्थः[2] ।'

ढगादिस्थलेषु शब्दादर्थस्य व्यावर्तनाय पाणिनिना सूत्रे रूपपदं गृहीतम् । अत्र सूत्रे पाणिनिना अभिप्रेतः शब्दगतोऽर्थ एवाऽस्ति शब्दस्य वैज्ञानिकं स्व-रूपं स्फोटात्मकम् । रूपपदेन च ध्वन्यात्मकं व्यावहारिकं प्रायोगिकं वा शब्द-स्वरूपमभिप्रेतम् । रूपपदेनाऽत्र व्यक्तिविशेषोच्चरितः ध्वनिविशेष एव नाऽ-भिप्रेतः, अपि तु रूपशब्देन ह्यत्र शास्त्रे शुकसारिका-पुरुषादिभिरुदीरितासु विभिन्नासु तत्तच्छब्दव्यक्तिषु समवेतमग्निशब्दत्वादिकं सामान्यं गृह्यते । पाणिनिना अग्नेर्ढगित्यादिषु या अग्निशब्दरूपा व्यक्तिरुच्चारिता, तस्याः सर्वोच्चारणेषु अनुगता अग्निसामान्यरूपा आकृतिः भवति वाच्या । सामान्य-स्य कार्ययोगश्च व्यक्तिद्वारको भवतीति-रीत्या व्यवहारः सम्पद्यते । यदि चाऽत्र सामान्यं विहाय व्यक्तिरेव गृह्येत तदा व्यक्तिनामानन्त्यात् सर्वेषा-मग्न्यादिशब्दानाम् अनुशासनकार्ये योगासम्भवः स्यात् । यथाऽनुकरणशब्दाः अर्थं जहति, ध्वन्यात्मकं स्वरूपञ्चादधते तथाऽत्राऽपि शास्त्रे शब्दरूपं भवति असाधारणम् । अर्थस्तु साधारण एव, शब्दान्तरैरपि तस्यार्थस्य प्रत्यायमान-त्वात् ।

मात्राकलापो नामाऽस्ति शब्दः । स एव च शब्दस्य रूपम् । एवञ्चाऽत्र स्वरूपसूत्रे अर्थवतः शब्दस्य एकदेशः रूपवानेव शब्दः अभ्युपगम्यते । अग्नि-सामान्ये अग्निविशेषे च स्वरूपे शक्तिमतः अग्निशब्दस्य एकदेशः रूपमात्रमिह शब्दस्वरूपपदेन विवक्षितमिति भावः । "अर्थवदधातुरप्रत्ययः प्रातिपदिकमि"-त्यत्र[3] तु अर्थवदेव शब्दस्वरूपं गृह्यते । तत्र शब्दानां लोके प्रयोगार्हत्वस्य सम्पाद्यमानत्वात् । शब्दानाम् अर्थवच्छब्दस्वरूपस्य बोधनार्थं सम्बन्धग्रहोऽपे-क्ष्यते, अनिर्ज्ञातसम्बन्धेन शब्देन अर्थज्ञानाऽसम्भवात् । शब्दस्य रूपप्रतीतौ तु श्रोत्रेण ध्वनेः सन्निकर्षोऽपेक्ष्यते । शब्दस्य रूपद्वयं यदस्माभिः प्रतिपादितं तच्छब्दस्वरूपग्राहकेण "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां

१. अष्टा०, १।१।६८ ।
२. अष्टा०, १।१।६८, महाभा० ।
३. अष्टा०, १।२।४५ ।

सम्प्रत्ययो भवति स शब्दः[1]।" इति पतञ्जलिवाक्येन सुस्पष्टं समर्थ्यते। येनोच्चारितेनेति कथनेन मात्राकलापरूपा शब्दस्याकृतिः विवक्षिता। सम्प्रत्ययो भवतीति वाक्यांशेन स्फोटात्मकोऽर्थो विवक्षितः। शब्दार्थयोर्नित्यसम्बन्धात् पार्थक्येन एतज्ज्ञातुं सुकरं न भवति। शब्दाऽनुशासनार्थकेनाऽनेन व्याकरणेन वाचमवच्छेद्य एतज्ज्ञातुं[2] सुकरं भवति।

**भर्तृहरिः—**

ख्यातनामा भाषाशास्त्री भर्तृहरिः शब्दस्य स्वरूपद्वयमेतत् सुस्पष्टमुपावर्णयत्। ध्वन्यात्मकस्य शब्दस्योच्चारणात् प्राक् प्रवक्तुः मनसि विवक्षारूपा शब्दभावना अनिवार्या भवति। शब्दभावनां विना प्राणवायोरूर्ध्वसमीरणं कण्ठताल्वाद्यभिघातश्च न सम्भवति कथञ्चित्। शब्दभावना एव वक्तारं नियते व्यक्तेऽर्थाभिधायके च शब्दे प्रयोजयति[3]। एतयोः परस्परमभेदोपचारात् साङ्कर्यं जायते। एनयोः पार्थक्येन ज्ञानं शास्त्रविदामपि श्रमसाध्यं भवति। यथा घटमहं जानामीति प्रतिपत्तौ कम्बुग्रीवादिमदर्थबोधः ज्ञानस्वरूपञ्च साङ्कर्येण सन्तिष्ठते तथा श्रुते शब्देऽपि शब्दभावनारूपोऽर्थः शब्दरूपञ्च[4] सन्तिष्ठते। 'ज्ञातो मया घटः' इति बोधे एतत् सुस्पष्टं प्रतीयते। भर्तृहरिः शब्दभावनात्मकमिमं शब्दं ध्वनिरूपस्य शब्दस्य निमित्तं व्याचष्ट। ध्वनिरूपश्च शब्दः श्रोतृभिः वाचकत्वेन गृह्यते।

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः।
एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते[5]॥

आन्तरोऽयं जातो व्यक्तो वागात्मा एव स्वस्य रूपस्याऽभिव्यक्तये करणादिसंयोगाल्लोके प्रसिद्धरूपेण शब्दत्वेन परिवर्तते[6]। वक्त्रा वक्ष्यमाणशब्दस्य स्वरूपाऽवधारणम् अर्थसन्निवेशश्च उच्चारणात् प्रागेव भवति। ध्वनिः केव-

१. अष्टा०, महाभा० पस्पशा०।
२. तत्त्वाऽवबोधः शब्दानां नास्ति व्याकरणादृते। (वा०प० १।१३)
३. आद्यः करणविन्यासः प्राणस्योर्ध्वंसमीकरणम्।
स्थानानामभिघातश्च न विना शब्दभावनाम्॥ (वा०प० १।१२२)
४. आत्मरूपं यथा ज्ञाने ज्ञेयरूपञ्च गृह्यते।
अर्थरूपं तथा शब्दे स्वरूपञ्च प्रकाशते॥ (वा०प०, १।५०)
५. वा०प०, १।४४।
६. अथाऽयमान्तरो जातः सूक्ष्मो वागात्मनि स्थितः।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते॥ (वा० प० १।११२).

लम् अनुग्राहयति पूर्ववितर्कितम्[1]। शब्दोपकारकत्वादेव ध्वनेः, पतञ्जलिराचार्यः ध्वनिं शब्दगुणं व्याचष्ट[2]।

**शब्दस्य स्थितित्रयम्—**

शब्दप्रादुर्भावे बुद्धेः, मनसः, प्राणस्य आस्यावयवानाञ्च योगः अनिवार्यो भवति। बुद्धियोगाद् मनोयोगाच्च वागर्थवती भवति। प्राणयोगात् करणयोगाच्च वाग् ध्वनिरूपा व्यक्ता भवति। एवञ्च शब्दस्वरूपे एषोऽस्ति निष्कर्षः। देशभेदात् त्रिविधं नाम विद्यते शब्दस्वरूपम्। एतत् स्थितित्रयं शब्दस्येत्यपि वक्तुं शक्यते। तत्र १. बुद्धिस्थम्, २. प्राणस्थम्, ३. करणस्थञ्चेति। पश्यन्ती विद्यते बुद्धिस्था, मध्यमा च प्राणस्था, वैखरी भवति करणस्था। पश्यन्त्यां ज्ञानमात्रस्यैवाऽनुगमात् तस्याः बुद्धिस्थत्वं स्वीक्रियते। यथा अरणिस्थं तेजो भवति प्रकाशान्तरहेतुः तथा बुद्धिस्थः शब्दः वैखरीवाचो निमित्तं[3] भवति। मध्यमायां बुद्ध्या साकं प्राणवायुरपि गतिमायाति। अतः मध्यमा प्राणस्थेत्युच्यते। वैखर्यां प्राणवायुः तत्तत्करणेषु आहतः ध्वनिः भूत्वा श्रावणः सञ्जायते। अस्माद् वैखरी करणस्थेत्यभिधीयते। एतत्समुदितस्यैव शब्दत्वम् अभिप्रेत्य पतञ्जलिराचार्यः अथ शब्दानुशासनमित्यत्र[4] शब्दपदं प्रयुङ्क्ते।

**शब्दप्रयोजनम्—**

शब्दस्वरूपमवधारयता एतदपि विचिन्त्यं यच्छब्दस्य प्रयोजनद्वयं भवति, १. ज्ञानम्, २. प्रयोगश्च। ज्ञानमस्ति स्फोटरूपम्। प्रयोगश्च ध्वन्यात्मकः। एकः पूर्वपरयोरिति[5] सूत्रं भाषमाणः पतञ्जलिः शब्दज्ञानं शब्दप्रयोगञ्च अभीप्सितफलप्रदं व्याचष्ट[6]। शब्दस्वरूपप्रसङ्गादत्र एतदप्यवधेयम्। प्रयोगेणाभिज्वलितः श्रावणः शब्दः अनुशासनदृष्ट्या द्विविधः—१. व्युत्पन्नः, २. अव्युत्पन्नश्च। तत्र व्युत्पन्नः शब्द एकेषामाचार्याणां मते स्वीक्रियते। अव्युत्पन्नश्चाऽपरेषाम्। व्याडिना उभयपक्षेऽपि अर्थस्य वाचकः शब्दो व्या-

---

१. वितर्कितः पुरा बुद्ध्या क्वचिदर्थे निवेशितः।
करणेभ्यो विवर्त्तेन ध्वनिना सोऽनुगृह्यते॥ (वा०प० १।४७)

२. एवं तर्हि स्फोटः शब्दः, ध्वनिः शब्दगुणः। (अष्टा० १।१।७०, महाभा०)

३ अरणिस्थं यथा ज्योतिः प्रकाशान्तरकारणम्।
तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक्॥ (वा०प० १।४७)

४. अष्टा०, महाभा० पस्पशा०।

५. अष्टा०, ६।१।८४।

६. शब्दस्याऽपि ज्ञाने प्रयोगे च प्रयोजनमुक्तम्। किम् ? एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति। (अष्टा०, ६।१।८४ महाभा०)

ख्यातः[1]। तत्र शब्दानां नियतं व्युत्पत्तिनिमित्तं भवति। तदेव च शब्दानां प्रवृत्तिनिमित्तं बोधयति। व्युत्पत्तिपक्षे गवादिरूपार्थे यद् गमनादिक्रियारूपं निमित्तं स्थितम्, तदेव गवादिशब्दस्य व्युत्पत्तिकर्मणि प्रयोजनकम्। गोशब्दस्य व्युत्पत्तेः मूलकारणं गमनरूपा क्रिया एव। गच्छतीति गौरिति[2] व्युत्पादनात्। शब्दव्युत्पत्तिः प्रयोक्तृसामर्थ्यमाश्रयति। प्रयोक्तृभिः अर्थस्य योऽवस्थाविशेषो दृष्टः, स एव तद्वाचकस्य शब्दस्य भवति व्युत्पत्तिनिमित्तम्[3]। यथा वृक्ष-वल्मीकादिभिः पथोऽन्वाख्यानं लोके क्रियते तथा शब्दव्युत्पत्तावपि अर्थसहचारिभिरनेकैः निमित्तैः शब्दो[4] व्युत्पाद्यते। येन प्रयोक्त्रा प्रयोक्तृसमुदायेन वा यन्निमित्तं दृष्टम्, तदेव भवति तच्छब्दस्य व्युत्पत्तिनिमित्तम्[5]। अतएव शब्द-व्युत्पत्तौ दृश्यते वैमत्यम्। कैश्चिद् गच्छतेर्गौरुच्यते अपरैः गर्जतेः, परैः गिरतेः अन्यैः[6]गर्दतेरित्यादि। अव्युत्पत्तिपक्षे व्युत्पत्तिनिमित्तस्य प्रकृतिप्रत्ययार्थरूप-कल्पनस्य शब्देऽभावाच् छब्दः स्वरूपमेव स्वव्युत्पत्तिनिमित्तम् आदत्ते। स्व-रूपादेव गोशब्दः गवार्थे प्रयुज्यते, न तु कस्माच्चिद् निमित्तात्[7]।

अर्थाऽभिधानाऽर्थे शब्दस्योभयविधमपि स्वरूपम् आवश्यकं भवति। अन्तः-शब्दो बौद्धो भवति। वाह्यश्च शब्दो ध्वन्यात्मकः। बौद्धस्य शब्दस्य ध्वनि-रस्ति वाहनभूतः। ध्वनिना श्रोता अन्तः शब्दं गृह्णाति। यथा सद्य उत्पन्ने असञ्जातकाकाऽभिव्यञ्जकावयवसंस्थानवति काकशिशौ तदभिव्यञ्जकावयव-संस्थाने सञ्जाते काकत्वं सुग्रहं भवति। तथैवाऽत्रापि उत्पन्ने ध्वनौ अन्तः-शब्दः श्रोत्रेण ग्राह्यो भवति। यथा वा प्रकाशः जन्मानन्तरमेव घटादेः प्रका-शको भवति तथा शब्दोऽपि अभिव्यक्तेः अनन्तरमेव अर्थप्रत्यायको जायते।

वितर्कितः पुरा बुद्ध्या क्वचिदर्थे निवेशितः।
करणेभ्यो विवृत्तेन ध्वनिना सोऽनुगृह्यते॥ (वा०प०, १।४७)

---

१. वाचकः उपादानः स्वरूपवानव्युत्पत्तिपक्षे। व्युत्पत्तिपक्षे तु अर्थाऽवहितं समाश्रितं निमित्तं शब्दव्युत्पत्तिकर्मणि प्रयोजकम्।
(स्वोपज्ञे संग्रहनाम्ने धृतोऽयं गद्यांशः। वा०प० १।४४, स्वोप०)

२. गमेर्डोः। (उणा० २।६३)।

३. अन्यथा च समाख्यानमवस्थाभेददर्शिभिः।
क्रियते किंशुकादिनामेकदेशेऽवधारणात्॥ (वा०प० २।१७३)

४. यथा पथः समाख्यानं वृक्षवल्मीकिपर्वतैः।
अविरुद्धं गवादीनां भिन्नैश्च सहचारिभिः॥ (वा०प० १।१७२)

५. अन्वाख्यानानि भिद्यन्ते शब्दव्युत्पत्तिकर्मसु।
बहूनां सम्भवेऽर्थानां निमित्तं किञ्चिदुच्यते॥ (वा०प०, २।१७०)

६. कैश्चिन्निर्वचनं भिन्नं गिरतेर्गर्जतेर्गमेः।
गुवतेर्गर्दतेर्वापि गौरित्यत्राऽनुदर्शितम्॥ (वा०प०, २।१७४)

७. गौरित्येव स्वरूपाद्वा गोशब्दो गोषु वर्तते।
व्युत्पाद्यते न वा सर्वः कैश्चिच्चोभयमथेष्यते॥ (वा०प० २।१७५)

# शब्दकाण्डे द्वितीयः समुद्देशः

## अथ शब्दोत्पत्तिप्रक्रिया

श्रूयमाणशब्दविषये वैयाकरणनिकाये मतद्वयं दृश्यते। तत्र १. शब्दोत्पत्तिपक्षवादिनां मतम्, २. शब्दाऽभिव्यक्तिपक्षवादिनाञ्च मतम्। ध्वन्यात्मकशब्दातिरिक्तस्य स्फोटरूपस्याऽन्तः शब्दस्य वाचकत्वनिरूपणाप्रसङ्गे कैयटः[1] मतद्वयमिदं निर्दिदेश। उत्पत्तिपक्षे सर्वध्वनीनां यौगपद्येनोत्पत्त्यभावाद् वाचकत्वं शब्दानां न सम्भवति। अभिव्यक्तिपक्षेऽपि क्रमणैव ध्वनीनामभिव्यक्तिः सम्भवति इति समुदायाभावाच्छब्दो वाचको न भवति। एकस्मृत्युपारूढानां यदि वाचकत्वं स्वीक्रियेत तदाऽपि 'सरो रसः' इत्यादौ विलोम-प्रतिलोमक्रमेण अर्थप्रतीतौ अविशेषः स्यादतः ध्वनिव्यतिरिक्तः स्फोट एव अर्थाभिधायको भवतीति कैयटस्याभिप्रायः। तत्रोत्पत्तिपक्षे अभिव्यक्तिपक्षे चेति उभयत्राऽपि मते ध्वनीनामुच्चारणमावश्यकं भवति, नादाऽभिव्यङ्ग्यस्यैव स्फोटस्य वाचकत्वस्वीकारात्। यथास्माभिः प्राक् शब्दस्वरूपविमर्शप्रसङ्गे प्रतिपादितम्, तद्रीत्या प्रायोगिकरूपं विना शब्दः पूर्णो न भवति। कृत्स्नशब्दस्वरूपस्य ग्राहकः प्रयोग एव भवतीति पतञ्जलिरपि[2] व्याचष्ट। अतः श्रोतुः अर्थप्रत्ययजनकस्य शब्दस्य अवाप्त्यर्थं शब्दोच्चारणमावश्यकम्। "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः"[3] इति शब्दं परिभाषमाणः पतञ्जलिः तथ्यमिदं पुष्णाति। शब्दोत्पत्तिनिरूपणाप्रसङ्गे शब्दोत्पत्तिपदेनास्माकम् एतदेव अभिप्रेतम्। तदत्र निरुक्तस्वरूपद्वयात्मकस्य शब्दस्योत्पत्तिप्रक्रिया निरूप्यते।

देशभेदात् त्रिविधं नाम शब्दस्वरूपमिति प्रागवोचाम। तत्स्वरूपत्रयम्

---

१. वैयाकरणा वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वमिच्छन्ति। वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गात्। आनर्थक्ये तु प्रत्येकमुत्पत्तिपक्षे यौगपद्येनोत्पत्त्यभावाद्, अभिव्यक्तिपक्षे तु क्रमेणैवाऽभिव्यक्त्या समुदायाभावाद्, एकस्मृत्युपारूढानां वाचकत्वे 'सरो रसः' इत्यादौ अर्थप्रतीत्यविशेषप्रसङ्गात् तद्व्यतिरिक्तः स्फोटः (अष्टा० महाभा०, पस्पशा०, प्र०)
नादाऽभिव्यङ्ग्यो वाचकः। (अष्टा०, ६।४।१६, महाभा०)।

२. रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकप्रयोगम्।



३. अष्टा०, महाभा०, पस्पशा०।

अनुशासनीयशब्दस्वरूपान्तर्गतं शब्दस्वरूपं विद्यते। साधुत्वज्ञानविषयं[1] हीदं पाणिनीयं व्याकरणम्। अर्थवतः साधुशब्दस्य अनेनाऽनुशासनं क्रियते। अनुशासनीये शब्देऽर्थवत्त्वं स्फोटरूपाऽन्तःशब्दबलादायाति। मध्यमापश्यन्त्योः समुदितं रूपं भवति स्फोटस्वरूपम्। अनुशासनकाले ध्वन्यात्मके शब्दे एतयोः सन्नियोगः अत्यावश्यको भवति। अन्यथा अर्थवत्त्वाऽभावाद् व्याकरणाऽविषयत्वं स्याच्छब्दस्य। अस्मादेव भर्तृहरिराचार्यः पश्यन्ती-मध्यमा-वैखर्यात्मिकाया अनेकतीर्थभेदायाः त्रय्या वाचः व्याकरणमिदं परमं पदं समाचष्ट[2]। अनुशासनीयस्य तस्य स्वरूपत्रयात्मकस्य शब्दस्य मूलमेका स्पन्दहीना वाक् सन्तिष्ठते। शब्दतत्त्वविद्भिः सा परापदेनोच्यते। शब्दोत्पत्तौ उपादानम् अस्ति परावाक्तत्त्वमिदम्। इदमेव वाक्तत्वं शब्दब्रह्मेति व्याचक्षते वैयाकरणाः तद्धि उत्पादविनाशरहितं पूर्वापरीभावशून्यञ्चेति व्याकरणदर्शनस्य लब्धप्रतिष्ठः प्रवक्ता भर्तृहरिः स्वीकुरुते[3]। तद् वाक्तत्त्वचतुष्टयमत्र निरूप्यते।

**परा :**

शब्दस्योपादानं परावाक्तत्त्वं नैकदेशस्थमपितु सर्वत्रैव सन्तिष्ठते। अस्मादेव ख्यातनामाभाषाशास्त्री यास्काचार्यः व्यापकं शब्दतत्त्वं समाचष्ट[4]। परा वाक् सर्वथैव शब्दार्थसंस्कारशून्या निःस्पन्दा च भवति। सुवर्णेन यथा कुण्डलादयो निर्मीयन्ते, कुण्डलाद्याकृतेरुपमर्दनेन चान्ते सुवर्णमात्रमवशिष्यते तथाऽत्र शाब्दव्यवहारेऽपि परावाक्तत्त्वादेव सर्वे ध्वन्यात्मकाः वाग्विकाराः जायन्ते। अन्ते च पुनः परावाक्तत्त्वम् एवाऽवशिष्यते। कश्चनाऽपि ध्वन्यात्मकः शब्दः ततः पृथङ् नास्ति। तदेव वाचकं वाच्यञ्च शब्दतत्त्वविद्भिः स्वीकृतम्। अजस्रवृत्तिः सूक्ष्मा च खलु परा वाक्। यथा व्यजनाऽभिघाताद् घनीभूतो वायुरनुभूयते, तथा प्राणवायुना करणाऽभिघाताच्छब्दोऽपि श्रूयते श्रोत्रेण[5]। प्राप्तरूपविभागायाः त्रय्याः वाचः पुण्यतमं ज्योतिरिदं परावाक्तत्त्वमिति भर्तृहरिराचार्यो मनुते[6]।

---

१. साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः। (वा०प०, १।१।१४१)

२. वैखर्याः मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्॥ (वा०प०, १।१४२)

३. अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ (वा०प०, १।१)

४. व्याप्तिमत्वात्तु शब्दस्य......' (निरु० १।१।२)।

५. अजस्रवृत्तिर्यः शब्दः सूक्ष्मत्वात्नोपलभ्यते।
व्यजनाद् वायुरिव स स्वनिमित्तात् प्रतीयते॥ वा०प० १।११६।

६. प्राप्तरूपविभागाया: यो वाचः परमो रसः।
यत्तत् पुण्यतमं ज्योतिः तस्य मार्गोऽयमाञ्जसः॥ वा०प० १।१२।

**पश्यन्ती :**

ज्ञातमनुभूतं वाऽर्थं विवक्षोः प्रवक्तुरिच्छया जातेन प्रयत्नेन मनसि सूक्ष्मः स्पन्दो जायते । अत्र शब्दतत्त्वेन सह ज्ञातस्य अर्थस्यापि योगो भवति । वाचः स्थितिरियं 'पश्यन्ती' इति कथ्यते । वाचोऽस्यां स्थितौ अर्थतत्त्वस्य दर्शनादेव वागियं पश्यन्तीति संज्ञां लभते । बुद्धिमात्रसमधिगम्यादियं पश्यन्ती वाग् बुद्धिस्था मनोविषया चोच्यते । मनोभावमापद्यैव वाग् नियतेऽर्थे नियतेन ध्वन्यात्मकेन शब्देन करणाऽभिघातादिभिः समुदीर्यते[1] । या च वाग् मनोविषया सती नोदीर्यते, सा कस्मिंश्चिन्नियतेऽर्थे नोपयुज्यते, सा अव्यक्तस्वरूपा भवति आहोस्विदनर्थिका । पाणिनीयशिक्षाकारो वागभिव्यक्त्यर्थं मनोयोगम् आवश्यकं स्वीचकार[2] अर्थवच्छब्दस्वरूपस्य प्रयोजिकेयं पश्यन्ती । उच्चारणात् प्राग् बुद्धया वितर्कितः शब्दो यस्मिन्नर्थे विविश्यते, करणाऽभिघातादुच्चारितेन ध्वनिना स एवाऽर्थो बुध्यते[3] । एतदेव कार्यं पश्यन्ती वाक् करोति ।

**मध्यमा :**

प्राप्तार्थसंस्कारा नाभिदेशस्था पश्यन्ती प्राणवायुना व्याहता हृदयदेशमागता मध्यमा कथ्यते । अत्र प्राणवायोः प्रबलः प्रभावो भवति । तस्मादियं प्राणस्थेति वक्तुं शक्यते । मध्यमायां प्राणवायुना सह प्रयोक्तुः मनोवेगोऽपि प्रबलो भवति । अत एव प्रवक्तुः मनोभावाऽनुसारेण मुखविकृत्यादयश्चेष्टा विलोक्यन्ते । वक्तुः शब्दोच्चारणात् प्रागेव मध्यमाबलाद् मैत्री-द्वेष-सुख-दुःखादिप्रवृत्तयः अनुमातुं योग्या भवन्ति । वागिन्द्रियशून्याः शब्दसम्पत्तिरहिता वक्तुमक्षमा वा जनाः मनोभावापन्नमध्यमानुसारेणैव इङ्गितादिभिरभिप्रेतम् अर्थं प्रकाशयन्ति । एतदभिनवं विलक्षणं वा नास्ति किञ्चिद्, अपि तु स्वाभाविकमेव । पाणिनीयतन्त्रस्य प्रामाणिको व्याख्याता पतञ्जलिः शब्दप्रयोगातिरिक्तैरन्यैरपि साधनैरर्थप्रत्ययं व्याचक्षाणः तथ्यमिदं स्पष्टयामास[4] । यद्यपि मध्यमायां वागवस्थायां वर्णा व्यक्ता नैव सम्भवन्ति कथञ्चन तत्र वर्णाभि-

---

१. स मनोभावमापद्य तेजसा पाकमागतः ।
वायुमाविशति प्राणमथासौ समुदीर्यते ॥ (वा०प०, १।११३)

२. आत्मा बुद्धया समेत्यार्थान् मनो युङ्क्ते विवक्षया । ………(पा०शि०, ६)

३. वितर्कितः पुरा बुद्धया क्वचिदर्थे निवेशितः ।
करणेभ्यो विवृत्तेन ध्वनिना सोऽनुगृह्यते ॥ (वा०प० १,४७)

४. अन्तरेण खल्वपि शब्दप्रयोगं बहवोऽर्था गम्यन्ते ।
अक्षिनिकोचैः पाणिविहारैश्च । अष्टा०, २।१।३४, महाभा० ।

व्यक्तिप्रयाससंस्कारो भवत्येव। अत एव तत्तत्स्थानानि प्राणवायुः अभिहन्ति। प्राकृतध्वनिसन्निकटवर्तित्वाद् मध्यमा वाक् प्राकृतध्वनिव्यङ्ग्या भवति। शरीरान्तःस्थितेन तेजसा प्राप्तातिशयविशेषः अन्तःकरणतत्त्वस्य आश्रयीभूतश्च वायुः शब्दरूपमाधत्ते[1]। यथा इन्धनरूपमाश्रितं तेजः साधनसमावेशाद् इन्धनस्वरूपं विहाय तेजोमात्रं लक्ष्यते, तथा प्राणवायुरपि स्वस्वरूपतिरोधानेन शब्दरूपेण भासते वैखर्याम्[2]।

**वैखरी :**

ध्वन्यात्मकं रूपं शब्दस्य प्रायोगिकं स्वरूपं भवतीति प्रागचर्चयम्। तदेवाऽस्ति नादात्मिका वैखरी वाक्। वैखरीवाचामाधारः पश्यन्ती-मध्यमात्मक आन्तरः स्फोटो विद्यते। यथा पाणिनीयतन्त्रम् आत्मा बुद्ध्या अभिधेयार्थान् समेत्य विवक्षया मनो युङ्क्ते। ततः मनसाऽभिहतं शरीरान्तःस्थितं तेजः प्राणवायुम् उदीरयति। स च प्राणवायुः नाभेरुद्यन् तत्तत्करणेषु अभिहतः, पुनरुद्यता तेनाऽभिहन्यमानः ध्वनिः सञ्जायते[3]। कण्ठताल्वादिकरणेषु अभिहत्य विभज्य चात्मानमनेकैः श्रुतिरूपैः वर्णानभिव्यज्य प्राणवायुः वर्णेष्वेव संलीनो[4] जायते। श्रोताऽनेनैव वैखरीरूपेण ध्वन्यात्मकेन शब्देन शब्दाऽर्थाऽवबोधं कुरुते। नादैरेव प्रतिपत्तृबुद्धौ वाचकः शब्दो निश्चीयते[5]। श्रवणग्राह्या स्फोटाऽभिव्यञ्जिकेयं वैखरी वाक् करणस्था इत्यस्माभिः निरूप्यते।

शास्त्रीयदृष्ट्या वैखरी वागियं द्विधा विद्यते। १. श्लिष्टा, २. विश्लिष्टा च। तत्र श्लिष्टा अव्यक्तवर्णसमुच्चारणा भवति। आलापादौ मनुष्येतररुतेषु चैषोपलभ्यते। व्यक्तवर्णसमुच्चारणा वैखरी वाग् विश्लिष्टा भवति। इयमेव वागनुशिष्यते व्याकरणेन। विश्लिष्टाया वाचोऽपि प्रकारद्वयी भवति—

१. प्राप्तसाधुभावा,

२. भ्रष्टसंस्कारा च। प्राप्तसाधुभाव-भ्रष्टसंस्कारयोः वाचोः प्रविवेकः

---

१. ………मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्। (पाणि० शि०, ६)
२. अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः।
तद्धर्मेण समाविष्टस्तेजसैव विवर्तते॥ (वा०प०, १।११४)
३. मारुतस्तूरसि चरन् मन्द्रं जनयते स्वरम्। (पाणि० शि०, ७)
४. विभजन् स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः।
प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते॥ वा०प०, १।११५)
५. नादैराहितबीजायामन्त्येन ध्वनिना सह।
आवृत्तिपरिपाकायां बुद्धौ शब्दोऽवधार्यते॥ (वा०प० १।८४)

समयसापेक्षो विद्यते। एकस्य कृते या वाक् प्राप्तसाधुभावा, सापरस्य कृते भ्रष्टसंस्कारा जायते। एकस्य च भ्रष्टसंस्कारा वागपरस्य प्राप्तसाधुभावा[1] भवति। वैखरी वाग् ध्वन्यात्मिका भवति। शब्दग्रहणदृष्टया शब्दाऽवस्थिति-दृष्ट्या च ध्वनिरपि द्विधो भवति—१. प्राकृतध्वनिः, २. वैकृतध्वनिः च। ध्वनिरेव नादपदेनोच्यते।

**नादभेदौ प्राकृतवैकृतौ—**

शब्दस्य ग्राहको नादाऽपरपर्यायो ध्वनिः भवतीति सम्यक् प्रतिपादितं प्राक्। स्फोटलक्षणे बौद्धे शब्दे कश्चित् कालभेदो न भवति, तथापि स्फोट-नादयोरभेदोपचाराद् ध्वनिकालाऽनुपाती भवति स्फोटः। अभेदोपचारादेव च तत्र वृत्त्यादिभेदोऽपि व्यपदिश्यते[2]। शब्दस्य स्वरूपग्राहको भवति प्राकृतो ध्वनिः। ह्रस्वदीर्घप्लुतादिभेदैः वर्णस्वरूपं ग्राहयति प्राकृतो ध्वनिः[3]। मध्य-माख्यं स्फोटमयमेव अभिव्यनक्ति। शब्दस्य स्थितिजनको भवति वैकृतो ध्वनिः, द्रुतमध्यमविलम्बितवृत्तिभिः वैकृतः ध्वनिः प्राकृतध्वनिनोपलब्धं शब्दस्वरूपं चिराऽचिरकालं यावद् उपलम्भयति[4]। व्याडिनाऽपि आचार्येण शब्दस्वरूप-ग्राहकः प्राकृतो ध्वनिः व्याख्यातः, स्थितिजनकश्च शब्दस्य वैकृतो ध्वनिः[5]।

'तपरस्तत्कालस्ये[6]'ति पाणिनीयं सूत्रं भाषमाणः पतञ्जलिरपि अभिन्न-कालं स्फोटं व्याचष्ट। भेर्याघातादिषु उच्चावच्चादिप्रतीतिस्तु ध्वनिकृता भवति। तदित्थं पतञ्जलिवचः—

"स्फोटस्तावानेव, ध्वनिकृता वृद्धिः[7]"।

---

१. दैवी वाग् व्यवकीर्णेयमशक्तैरभिधातृभिः।
अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्ययः॥ (वा०प० १।१५४)

२. स्फोटस्याऽभिन्नकालस्य ध्वनिकालाऽनुपातिनः।
ग्रहणोपाधिभेदेन वृत्तिभेदं प्रचक्षते॥ (वा०प०, १।७५)

३. स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु।
प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते॥ (वा०प०, १।७६)

४. शब्दस्योर्ध्वमभिव्यक्तेः वृत्तिभेदं तु वैकृताः।
ध्वनयः समुपोहन्ते स्फोटात्मा तेन भिद्यते॥ (वा०प०, १।७७)

५. शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।
स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते॥
संग्रहकारनाम्नोद्धृतः। (वा०प०, १।७६, स्वोप०)

६. अष्टा०, १।१।७०।



७. अष्टा०, १।१।७०, महाभा०।

'ध्वनिकृता वृद्धिरि'त्यस्य वैकृतध्वनिकृता उपलब्धिकालवृद्धिरित्यर्थो बोद्धव्यः। यथा उद्यन्नेव प्रकाशः पटादिव्यतिरिक्तं घटं प्रकाशयति, प्रकाशितश्च घटः पुनः पुनः दृश्यमानोऽपि न प्रकाशितात् स्वस्माद् घटाद् भेदमवलम्बते, तथा प्राकृतध्वनिरपि स्फोटमभिव्यनक्ति। वैकृतध्वनिश्च अभिव्यक्तं तमेव स्फोटात्मकं शब्दं चिराऽचिरं यावदुपलम्भयति, न तु स्फोटात् कञ्चनाऽन्यम्। श्रूयमाणशब्दे ध्वनिस्फोटयोः सत्तां स्वीकुर्वाणः पतञ्जलि[1]रल्पत्वमहत्त्वादिप्रयोजकं ध्वनिं स्वीचकार। व्यक्ते स्पष्टे च शब्दे ध्वनिरपि लक्ष्यते स्फोटश्चाऽपि अवबुध्यते। अव्यक्ते अस्पष्टे तु शब्दे ध्वनिमात्रं लक्ष्यते। एतदेव तथ्यं कात्यायनः वर्णकालभूयस्त्वपदेन समाचष्ट[2]। ह्रस्वदीर्घादिषु स्फोटस्य समानत्वेऽपि वर्णकालभेदादुपलब्धौ भूयस्त्वम् अल्पत्वञ्चोपलभ्यते, यथा हस्तिनोः मशकयोश्च तुल्येऽपि सन्निकर्षे प्राणिभूयस्त्वं[3] भवति। प्राकृतध्वनिनोपलब्धं शब्दस्वरूपं वैकृतध्वनिः तच्छब्दविषयां बुद्धिधारामुपसंहरति स्थापयति वेति भावः।

इयं वाक्सन्ततिरस्माभिरित्थमपि परिचेतुं शक्यते नाम। वैखरी भवति स्थूला वाक्। मध्यमा नाम सूक्ष्मा, पश्यन्ती सूक्ष्मतरा, परा च नाम परमसूक्ष्मतमा वाक्छक्तिः। अभिधेयार्थदृष्ट्या परा वाक् शब्दसन्ततये भवति गर्भाशय इव। अत्र परावाचि अभिधेयार्थबोधनेच्छया आत्मना बुद्ध्या समेत्यार्थान् अर्थसंस्कार आधीयते। अभिधेयार्थसंस्कृता पश्यन्ती वाक् नादात्मिकाया वाचो गर्भकालः सञ्जायते। अत्र पश्यन्तीवाचि अभिधेयार्थगर्भः शब्दः पुष्टिमायाति मुखे ध्वनिरूपेण प्रसवार्थम्। अत्रात्मसम्बद्धया बुद्ध्या साकं मनोयोगोऽपि जायते। मध्यमा वाग् भवति नादात्मिकाया वाचः प्रसवकालः। यतोऽत्र एव मुखे स्थानकरणाद्यभिघातेन वर्णान् प्रसोतुं सङ्कल्प्यन्ते। अत्र कायाग्निना तेजसा परिपक्वः प्राणवायुः वर्णान् जनयितुं प्रस्तुतो भवति। वाचां प्रसूतावस्था च नादात्मिका वैखरी वाग् भवति। अत्रावयवशः शब्दो मुखाद् बहिर्निर्गच्छति। प्राकृतनादात्मिका वैखरी वाक् शब्दस्वरूपोपलब्धिजनिका जायते। वैकृतनादात्मिका वैखरी वाक् च उच्चारितस्य शब्दस्य चिराचिरकालमुपस्थापिका भवति। वैखरीवाचः प्राकृतो नादः वाचां क्रीडनकालः, वैकृतो नादश्च

---

१. ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते।
अल्पो महांश्च केषाञ्चिदुभयं तत्स्वभावतः॥ अष्टा०, १।१।७०, महाभा०।

२. वर्णकालभूयस्त्वं तु। (अष्टा०, १।४।१०९, वा० ३)

३. वर्णानान्तु कालभूयस्त्वम्। तद्यथा—हस्तिमशकयोः तुल्यः सन्निकर्षः, प्राणिभूयस्त्वं तु।
अष्टा०, १।४।१०९, महाभा०।

कार्यकाल इत्यपि वक्तुं शक्यते सुगमतया । प्रस्तुतेन चित्रेणैतत् सुस्पष्टमवगन्तुं पार्यते —






मध्यमा
(प्रसवकालः)
|
पश्यन्ती
(गर्भकालः)
|
परा
(गर्भाशयः)

**शब्दोत्पत्तिविषये विभिन्नानि मतानि—**

वागुत्पत्तिविषयिका गवेषणाप्रवृत्तिः नार्वाचीना विद्यते भारतीयानाम् । वैदिकवाङ्मयादारभ्य शिक्षाग्रन्थं यावद् ध्वनितत्त्वं सम्यक् समुपबृंहितमवलोक्यते । वागुत्पत्तेः सर्वप्रथमं मौलिकी विवेचना ऋग्वेदे[1] उपलभ्यते । पाणिनीयक्रमे वागुत्पत्तिविषयस्य प्रथमः प्रस्तोता पाणिनिराचार्यो विद्यते । ततः पतञ्जलिः विवृणोति विषयमिमम् । भाषाशास्त्रस्य मौलिको गवेषको भर्तृहरिः वैज्ञानिकपद्धतया विषयस्यैतस्य सम्यग् विवेचनां प्रास्तावीत् । भारतीयक्रमे अयं वागुत्पत्तिविषयः प्रकारद्वयेन विविच्यते—

१—वाचामभिव्यक्तिः । २—वाचामुच्चारणं ग्रहणञ्च ।

एतत्स्वरूपद्वयं प्रागस्माभिः सम्यक् प्रतिपादितम् । अत्र वागुत्पत्तिविषयकाः केचन भाषावैज्ञानिकाः पक्षा उपस्थाप्यन्ते ।

---



१. ऋक् सं०, १०।७१।१-४ ।

**ऋग्वेदे वागभिव्यक्तिप्रकारः—**

वागुत्पत्तिविषयिका विवेचना ऋग्वेदे दशममण्डलान्तर्गते एकसप्ततितमे सूक्ते (मं० १०। सू० ७१) दृश्यते। ऋक्संहितायां वाचां चत्वारि चरणानि कल्प्यन्ते। अस्य सूक्तस्य 'ज्ञानम्' इति देवता भवति। यस्याम् ऋचि यं विषयमधिकृत्य ऋषिः प्रार्थयते वर्णयति वा स विषयः तस्या ऋचो देवतेति यास्कः समाचष्ट[1]। एवञ्च वाचो ज्ञानस्य च परस्परं कश्चित् सम्बन्धो विद्यते इति ऋग्वर्णनेन ज्ञायते। शब्दो वस्तुतो मूलतो ज्ञानात्मक इच्छात्मको वा भवति। वक्तुरिच्छा भवति शब्दभावना। विवक्षारूपा शब्दभावना एव शब्दरूपेण ध्वन्यात्मकेन प्रजायते। श्रोतृभिः श्रवणेन्द्रियेण यः शब्दो गृह्यते स प्रवक्तुरात्मनो ज्ञानविषयो भवति। वागात्मनि स्थितमान्तरं ज्ञानं स्वरूपाभिव्यक्तये शब्दरूपेण व्यक्तं भवतीति भर्तृहरिराचार्यो व्याचष्ट[2]।

**प्रथमं चरणम्—**

'प्रेणा तदेषां निहितं गुहाविः[3]। ऋङ्मते वागभिव्यक्तेः मूलस्रोतः 'गुहा' विद्यते। अत्र जना आत्माऽभिव्यक्तेरिच्छया वक्तुं प्रेरिता भवन्ति। गुहानिहितेयं वाङ् नेङ्गयति कदाचित्। अस्य वाक्तत्त्वस्य नामनिर्देशोऽत्र ऋचि यद्यपि नास्ति, तथापि पराया वाचो यादृशः परिचय उपलभ्यते, तदनुसारेणेयं वाचः परास्थितिरिति वक्तुं शक्यते। पराया वाचो विस्तृतः परिचयः प्रागस्माभिः प्रदत्तः। सर्वेषां वाग्विकाराणाम् उपादानमियं वाग् विद्यते। अत्र वाचि वक्तुमनसाम् अव्यक्तेच्छा प्रजायते आधीयते वा। मनोव्यापारेण अस्यां वाचि जातस्य परिमन्थनस्य परिणामः शब्दो भवति।

**द्वितीयं चरणम्—**

'..... यत्र धीराः मनसा वाचमक्रत[4].........।' विवक्षातो वाग्विषयको मानसो व्यापारो भवति प्रवक्तरि। अर्थाभिव्यञ्जकशब्दानुसारेण वाक्स्वरूपनिर्धारणा अस्मिन् द्वितीये चरणे एव जायते। इच्छा ज्ञानं वाऽस्ति आत्मविषयः। चिन्तनं मननं मनोविषयो विद्यते। एतत् कार्यं द्वितीयचरणे एव

---

१. यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति।
(निरु०, द०का० १)

२. अथेदमान्तरं ज्ञानं सूक्ष्मे वागात्मनि स्थितम्।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते॥ (वा०प०, १।११२)

३. ऋक् सं०, १०।७१।१।

४. ऋक् सं० १०।७१।२।

जायते विवक्षा:। इयं द्वितीयचरणस्था वागपि अव्यक्तैव भवति, परमत्र शब्दार्थयो: पार्थक्यं ज्ञानगम्यं भवति। इयमस्ति वाचां पश्यन्तीस्थिति:।

**तृतीयं चरणम्—**

यज्ञेन वाच: पदवीयमायन् तामन्वविन्दन् ऋषिषु प्रविष्टाम्[1]।' इत्यस्याम् ऋचि ऋषिपदम् इन्द्रियाणामर्थे[2] प्रयुक्तम्। अन्यत्राऽपि यजु:संहितादौ[3] इन्द्रियार्थे ऋषिपदं प्रयुक्तं दृश्यते। प्रागस्माभि: गर्भप्रक्रियया सह वागुत्पत्तेरपि औपमिक: प्रयोग: कृत:। तद्रीत्या मध्यमा वाग् वागुत्पत्ते: प्रसवकाल:। अस्यां स्थितौ अर्थसंस्कृता वाङ् मुखे प्रसवार्थं प्रस्तुता भवति। मध्यमा वागेव वागिन्द्रियस्य कण्ठताल्वादिषु परिपक्वप्राणवायुसहकारेण अभिव्यज्यते। सुनिश्चिताया वाचो निश्चितेषु करणेषु व्यवस्था मध्यमात: एव भवति। वाचकशब्दगतध्वनीनामुच्चारणार्थं यानि यानि स्थानानि प्राणवायोरभिप्रेतानि भवन्ति, तत्र तत्राऽभिघातार्थमत्र निश्चयो भवति। यस्याश्च वाच उच्चारणस्थाननिश्चयोऽत्र न भवति सा अव्यक्तरवादिरूपेण स्खलिता जायते।

**चतुर्थं चरणम्—**

वाचां चतुर्थं चरणं तद् भवति यद् वक्तृमुखेन उच्चार्यते श्रोतृभिश्च श्रूयते व्यावहारिकशब्दस्वरूपनिरूपणाप्रसङ्गे इयमेव वागस्माभि: प्रतिपादिता। ऋक्संहितायां चैतदेवं निर्दिष्टम्—

'तामाभृत्या व्यदधु: पुरत्रा तां सप्तरेभा अभिसंनवन्ते[4]।' वागियं ह्रस्वादिरूपेण प्राकृतध्वनिना, चिराऽचिररूपेण च वैकृतध्वनिना ज्ञायते। पूर्वचरणत्रये उक्तस्य स्वरूपत्रयात्मकस्य शब्दस्य परिणामोऽयं चतुर्थचरणस्थ: शब्द:। बौद्धरूपस्य स्फोटात्मकस्य शब्दस्य ध्वन्यात्मक: शब्द: परिणाम इति भर्तृहरिणाऽपि चर्चितम्[5]। ऋचि वर्णितेयं वाग् वैखरीति व्यपदेष्टुं शक्यते।

---

१. ऋक् सं० १०।७१।३।

२. क—ऋषयो द्रष्टार:। (निघं०, १।५।१३, निघं०, नि०)
ख—सप्त ऋषय:……षडिन्द्रियाणि वा मन: षष्ठानि विद्या सप्तमानि।
(निघं० ५।६।२५, निघं०नि०)

३. सप्त ऋषय: प्रतिहिता: शरीरे सप्त रक्षन्ति सदमप्रमादम्।
सप्ताप: स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजो सत्रसदौ च देवौ॥ (यजु: सं०, ३४।५५).

४. ऋक् सं० १०।७१।३।

५. शब्दस्य परिणामो यमित्याम्नायविदो विदु:।
छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत॥ (वा०प०, १।१२०)

उपरि वर्णितस्य वाक्तत्त्वस्य साङ्केतिकं मौलिकञ्च स्वरूपं छान्दोग्योपनिषदि अपि उपलभ्यते। स्वपुत्राय श्वेतकेतवे आरुणिराचार्यो वाचो मूलं परा¹तत्त्वमुपदिदेश। परावाक्तत्त्वं तेजसा, प्राणेन मनसा च सम्प्रयुक्तं सम्प्रत्ययनिमित्ता वाग् भवति। श्रोतरि हीयं श्रुता वाक् क्रमशः मनसि, प्राणे, तेजसि परातत्त्वे च संलीयते। आरुणेरुद्दालकस्य वचो विचार्य एतत् स्पष्टं विज्ञायते यत् परा हि तेजसा प्राणेन मनसा च सम्प्रयुक्ता पश्यन्तीवाग् भवति। सा च ईषद् व्यक्ता मध्यमा वाग् जायते। व्यक्ता सती च सम्प्रत्ययजनिका वैखरी वाक् सम्पद्यते। वाग्वृत्तेरस्याः प्रभवभूमिः मनोवृत्तिरिति बादरायणोऽपि² व्याचष्ट। वर्णितानां चतुर्णां चरणानां नामकरणं तु परवर्तिग्रन्थाऽनुसारेणास्माभिरेव कृतम्। सम्भवतः तदानीं तेषां नाम ख्यातं नासीत्। परादीनां सुव्यक्तं शब्दशास्त्रीयं वर्णनं तु सर्वप्रथमं भर्तृहरेराचार्यस्य वाक्यपदीये एवोपलभ्यते।

**पाणिनिमते वागभिव्यक्तिः—**

पाणिनीयक्रमे वागुत्पत्तिविषये सर्वप्रथमं पाणिनेः सिद्धान्तः समुपलभ्यते। यद्यपि पाणिनीयशिक्षाकारः पाणिनीयशिक्षायां वागुत्पत्तिविषयकं पाणिनिसम्मतं मतं सूत्ररूपेणैव प्रास्तावीत् तथापि तेन तदानीन्तन्याः रूढभूतायाः धारणायाः सम्यक् परिचयो जायते। पाणिनीयशिक्षायां वागुत्पत्तिक्रम इत्थं वर्णितः—

'आत्मा बुद्धया समेत्यार्थान् मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।
मारुतस्तूरसि चरन् मन्द्रं जनयते स्वरम्³।'

उद्धृतकारिकाऽनुसारेण आत्म-बुद्धि-मनः कायाग्नीनां प्रक्रियानिर्वाह आवश्यको विद्यते। ऋक्सम्मतवागभिव्यक्तिनिरूपणाप्रसङ्गे 'गुहापदेन' यदभिप्रेतं तदेवाऽत्र पाणिनीयक्रमे आत्मपदेन अभिमतम्। अत्र शब्दोत्पत्तौ चतुर्णां चरणानां परिकल्पनं परिलक्ष्यते—

१–आत्मा बुद्धया समेत्यार्थान् मनो युङ्क्ते विवक्षया।

---

१. ......वस्य सोम्य ! पुरुषस्य प्रयतो वाङ् मनसि सम्पद्यते। मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायाम्। (छां० उ०, ६।८।६)
२. वाङ्मनसि दर्शनाच्छब्दाच्च। (वे०द०, ४।२।१)
३. पाणि० शि०, ६-७।

२–मनः कायाग्निमाहन्ति ।
३–स प्रेरयति मारुतम् ।
४–मारुतस्तूरसि चरन् मन्द्रं जनयते स्वरम् ।

वक्तुरिच्छया वागात्मनि कश्चिदतिशयो जायते। तस्यैव परिणामो व्यक्ता वाग् भवति। सर्वव्यवहारसम्पादनार्थं सकलज्ञानाऽधिगमार्थञ्चास्य वागात्मनः स्थितिरनिवार्या भवति। बधिरस्यापि मूकस्याऽपि च जनस्य वागात्माऽयं सुरक्षितो भवति। अन्यथा तस्य कस्यचिदपि व्यवहारस्य बोधस्य वा सम्पादनाऽक्षमत्वं स्यात्।

सूत्रात्मकपाणिनीयशिक्षायां शब्दोत्पत्तिप्रक्रिया पर्याप्ता व्यवस्थिता चोपलभ्यते। तत्र आपिशलेराचार्यस्याऽपि महान् प्रभावः स्पष्टं परिलक्ष्यते। अङ्गुलिपरिगणनपरिमितानि कतिपयान्येव वैमत्यस्थलानि विद्यन्ते आपिशलि-पाणिन्योराचार्ययोः। सम्भवत आपिशलीयायाः शिक्षाप्रक्रियायाः पाणिनेरभिमतत्वात् सा पाणिनीये शब्दशास्त्रेऽपि स्वीकृता। सूत्रात्मिकायां पाणिनीयशिक्षायां शब्दः आकाशवायुप्रभवः स्वीकृतः। आकाशवायुप्रसूतोऽसौ नादः शरीरस्यानेकेषु तीर्थेषु समुच्चरन् वक्त्रमागच्छति। तत्र विभिन्नेषु वक्त्रस्थानेषु आहतः सन् प्रविभज्यमानो नादः वर्णात्मको जायते। स एव च शब्दत्वेनाऽभिप्रेतः[1]। तदेव शब्दस्वरूपं पाणिनीयेनाऽनेन शब्दशास्त्रेण अनुशिष्यते। इह पाणिनीये तन्त्रे यत्र वर्णा उपलभ्यन्ते तत्स्थानम्[2] उच्यते, येन च वर्णानां निष्पत्तिर्भवति तत्करणं[3] कथ्यते। प्राणवायुर्यदा लौहपिण्डवत् स्थानमभिहन्ति तदा स्पर्शवर्णाः[4] यमाश्च[5] जायन्ते[6]। प्राणवायुना दारुपिण्डवदाहते स्थाने अन्तःस्था[7] वर्णा जायन्ते[8]। ऊर्णापिण्डवत् पीडिते च स्थाने प्राणवायुना उष्माणः[9] स्वराश्च[10] उत्पद्यन्ते[11]। एतद्विवेचनया शब्दस्य ध्वनिरूपप्रयोजको

---

१. आकाशवायुप्रभवः शरीरात् समुच्चरन् वक्त्रमुपैति नादः।
स्थानान्तरेषु प्रविभज्यमानो वर्णत्वमागच्छति यः स शब्दः॥ (पा०शि०सू०, १)
२. इह यत्र स्थाने वर्णा उपलभ्यन्ते तत्स्थानम्। (पा०शि०, सू० ७।३)
३. येन निर्वृत्यन्ते तत् करणम्। (पा०शि०, सू० ७।४)
४. कादयो मावसानाः स्पर्शाः। (पा०शि०, सू० ४।८)
५. विंशतिसंख्याका वर्गयमाः पाणिनीये ख्याताः। (ले०)
६. तत्र स्पर्शयमवर्णकरो वायुरयःपिण्डवत् स्थानमभिपीडयति। (पा०शि०सू०, ५।१)
७. यादयोऽन्तःस्थाः। (पा०शि० सू०, ४।९)
८. अन्तःस्थवर्णकरो वायुर्दारुपिण्डवत्। (पा०शि०सू०, ५।२)
९. शादय उष्माणः। (पा०शि०सू०, ४।१०)
१०. विवृतकरणाः स्वराः। (पा०शि०सू०, ३।७, अचः स्वरा इति ख्यातम्। (ले०)
११. उष्मस्वरवर्णकरो वायुरूर्णापिण्डवत्। (पा०शि०सू०, ५।२),

वायुः भवतीति प्राप्तम् । वायोः त्रिधा प्रवृत्तिः स्थानाऽभिघाते जायते । तदाधृत्यैव उपरि वर्णनिष्पत्तिः व्याख्याता । अग्रे वायुवादिमतनिरूपणे आपिशलिमतेनैतदस्माभिः विस्तृतं विचारयिष्यते ।

**वागुत्पत्तौ पतञ्जलिमतम्—**

'आख्यातोपयोगे'[१] इति पाणिनीयसूत्रस्थम् अथवा ज्योतिर्वज्ज्ञानानि भवन्ति[२] ।' इति भाष्यं टीकमानः कैयटो वागुत्पत्तिविषयकं पतञ्जलेराचार्यस्य मतं निर्दिदेश । तद्रीत्या[३] वक्तुः ज्ञानं शब्दरूपमापद्यते इति पतञ्जलिः स्वीकुरुते । वृक्षादपक्रान्तं फलं पुनर्वृक्षे न भवति । शब्दस्तु वक्तृज्ञानादुत्पन्नोऽपि, उच्चरितोऽपि, स्फोटरूपेण वक्तरि सन्तिष्ठत एव । यथा ज्वालारूपं ज्योतिरविच्छेदेनोत्पद्यमानं प्रतिक्षणं विनश्यदपि सादृश्याज् ज्वालारूपेण सततं प्रतीयमानं दृश्यते, तथैव वक्तृज्ञानान्यपि विभिन्नशब्दरूपतामापद्यमानानि[४] भवन्तीति पतञ्जलेराशयः । भर्तृहरिः शब्दोत्पत्तिविषयकमतपरिगणनाप्रसङ्गे ज्ञानवादिनामपि मतं[५] पर्यगणयत् । शब्दोच्चारणार्थं शब्दभावनाऽनिवार्या[६] भवतीति भर्तृहरिणा प्रतिपादितम् । सा शब्दभावना वक्तुः ज्ञानाश्रिता एव सम्भवति । पतञ्जलिमतमेव ज्ञानपदेन भर्तृहरेरभिप्रायः प्रतीयते । वक्तृज्ञानाश्रिता शब्दभावना एव व्यक्ताया वाचो निमित्तं भवति । वक्तृबुद्धेः श्रोतृबुद्धेश्च ऐक्यमापादनं शब्दव्यापारस्य भवति प्रयोजनम् । वक्तृबुद्धिरेव च शब्दरूपेणाऽभिव्यज्यते । प्रयोक्ता यदर्थाभिव्यक्तये यच्छब्दमुच्चारयति, गृहीतशक्तिकः श्रोता तेन शब्देन तमर्थमधिगच्छति । ज्ञानस्य शब्दरूपापत्तेरयमेवाऽभिप्रायः ।

**वागुत्पत्तौ भर्तृहरेर्विवेचना—**

भाषाविज्ञानदृष्ट्या वागभिव्यक्तिविषयकाणां मतानां प्रामाणिको मौलिकश्चान्वेषकः आचार्यो भर्तृहरिः विद्यते । तदानीन्तनानां विदुषां वागुत्पत्तिविषयकं विवादं भर्तृहरिरित्थं पर्यचाययत्—

---

१. अष्टा० । १।४।२९ ।

२. अष्टा० । १।४।२९, महाभा० ।

३. ज्ञानस्य शब्दरूपापत्तिरिति दर्शनमत्र भाष्यकारस्य । (अष्टा० १।४।२९, महाभा०, प्र०)

४. अरणिस्थं यथा ज्योतिः प्रकाशान्तरकारणम् ।
तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक् ॥ वा०प० ।

५. वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।
कैश्चिद्दर्शनभेदो ऽत्र प्रवादेष्वनवस्थितः ॥ (वा०प०, १।१०७)

६. वायुः करणविन्यासः प्राणस्योर्ध्वंसमीरणम् ।
स्थानानामभिघातश्च न विना शब्दभावनाम् ॥ (वा०प०, १।१२२)

'वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।
कैश्चिद्दर्शनभेदोऽत्र प्रवादेष्वनवस्थितः'[1] ॥

अत्र कारिकायां भर्तृहरिणा शब्दोत्पत्तिविषयकं मतत्रयं निर्दिष्टम्—

१. वायुवादि, २. अणुवादि, ३. ज्ञानवादि च मतम् । भगवान् भर्तृहरिः प्रथमोऽसौ आचार्यो यो शब्दोत्पत्तिविषये वायुवादिनाम्, अणुवादिनाम्, ज्ञानवादिनाञ्च मतं पर्यालोच्य तेषां समन्वितं तत्स्वरूपं समुपास्थापयद् यद्द्यापि-यान्त्रिकयुगे स्वकीयं महत्त्वमाधत्ते । भर्तृहरेः मतस्य पर्यालोचनातः प्राग् उक्तस्य मतत्रयस्य सामान्यः परिचयोऽपेक्षितोऽस्ति । अत्र तेषां कश्चित् परिचयः समुपस्थाप्यते ।

**वायुवादिनः—**

शुक्लयजुःप्रातिशाख्ये[2] वायोः शब्दोत्पत्तिः वर्णिता । तद्रीत्या वायुः शब्दस्य कारणमस्ति । आकाशाद् वायुरुत्पद्यते[3] । स चाऽऽकाशादुत्पन्नो वायुः शब्दो भवति[4] । अर्थाच्छब्दो वाय्वात्मको भवति । यदि शब्दो वाय्वात्मको वर्तते तदा वायोः सर्वगतत्वाच्छब्दस्याऽपि (ध्वन्यात्मकस्य) सर्वगतत्वापत्तिः भवति । एवञ्च कथन्न सर्वत्र भवति शब्दोपलब्धिरित्याशङ्कां समाधातुं प्रातिशाख्ये सूत्रान्तरमुक्तम्—'सङ्करोपहितः'[5]इति समीचीनाः कराः सङ्कराः कथ्यन्ते । करपदेनाऽत्र आस्याङ्गानि वेणुशङ्खादीनि च करणानि विवक्षितानि । एवञ्च सम्यक् करणैरुपहित एव वायुः, शब्दीभवति । शब्दोपलम्भकैः करणैरुपहितत्वाऽभावे च वायुः न शब्दीभवति । अतो वायोः सर्वगत्वेऽपि न शब्दस्य सर्वत्र उपलब्धिप्रसङ्गः । ततः शब्दीभूतस्य वायोः वर्णभावापत्तिं प्रदर्शयितुम् अन्यत् सूत्रमभिहितं तत्र—'स सङ्घातादीन् वागिति[6]' सूत्रेऽस्मिन् सङ्घातपदेन बाह्याभ्यन्तरलक्षणः पुरुषप्रयत्नोऽभिप्रेतः । स सङ्घातः=बाह्याभ्यन्तरप्रयत्नः, आदिः येषां कण्ठताल्वादिस्थानादीनां ते सङ्घातादयः, तान् सङ्घातादीन् । अयमभिप्रायः सूत्रस्य—यो वायुः आस्यावयववेणुशङ्खादिकरणैरुपहितः सन् शब्दीभूतः

१. वा०प० १।१०७ ।
२. शु०य०प्रा० प्रथमाध्याये । (प्रातिशाख्यमिदं वाजसनेयिप्रातिशाख्यनाम्नाऽपि ख्यातम् । —लेखकः)
३. वायुः खात् । (शु०य०प्रा०, १।६)
४. शब्दस्तत् । (शु०य०प्रा०, १।७)
५. शु०य०प्रा०, १।८ ।
६. शु०य०प्रा०, १।९ ।

स निरुक्तसङ्घातादीन् प्राप्य वाग् भवति, वर्णो जायते इत्यर्थः। तैत्तिरीय-प्रातिशाख्यकारः सर्ववर्णानां प्रकृतिं शब्दं[१] व्याचष्ट। शब्दोत्पत्तौ च वायोः करणत्वं स्वीचकार[२]। वाचो वृत्तिं व्याचक्षाण[३] ऋक्तन्त्रव्याकरणकारोऽपि शब्दस्य प्रकृतिं वायुं[४] प्रत्यपादयत्। वक्तुरिच्छानुवर्ती प्रयत्नेन लब्धक्रियो वायुः कण्ठताल्वादिस्थानेषु प्रतिहतः शब्दो भवतीति वायुवादिनां मतं विवृण्वन् भर्तृहरिरवोचत्[५]। मनस आश्रयतां प्राप्तः प्राणवायुः कायाग्निना परिपक्वः स्थानेषु चाऽभिहतः वर्णरूपेण ध्वन्यात्मकेन शब्द उच्चार्यते श्रूयते च[६]।

**आपिशलिः—**

पाणिन्यभिमतशब्दोत्पत्तिनिरूपणाप्रसङ्गे आपिशलेः नाम निरदिशं प्राक्। आपिशलिना वायुतः शब्दोत्पत्तिः सुस्पष्टं प्रतिपादिता। नादस्य सर्वविधानामपि भेदानां प्रयोजकः वायुः भवतीति आपिशलशिक्षायां प्रतिपादितम्[७]। महता वायुना महाप्राणा वर्णा[८] जायन्ते। अल्पेन च वायुना अल्पप्राणा वर्णा[९] प्रजायन्ते। वायोराघातभेदादेवाऽभ्यन्तरो बाह्यश्च प्रयत्नः सञ्जायते।

पूर्वं विवक्षारूपा शब्दभावना भवति। वक्तुरिच्छया शरीरे वायुः प्रयत्न-प्रेरितो भवति। नाभिप्रदेशादुत्थितः समानो नाम वायुः हृदयस्थाने पुञ्जीभूतो जायते। हृदयस्थोऽयं पुञ्जीभूतो वायुरेव प्राणवायुः कथ्यते। तस्माच्च प्राणवायुना कण्ठताल्वादिस्थानानामभिघातो भवति। ततो ध्वनिरुत्पद्यते। अयमेवाऽस्ति वर्णस्य आत्मलाभः[१०]। स्थानाऽभिघातकाले प्राणवायोः सञ्चारे

१. शब्दः प्रकृतिः सर्ववर्णानाम्। (तै०प्रा०, १।२२।१)

२. अथ शब्दोत्पत्तिः। (तै०प्रा० २।१)
वायुः शरीरसमीरणात् कण्ठोरसोः सन्धाने। (तै०प्रा०, २।२)

३. अथ वाचो वृत्तिं व्याख्यास्यामः। (ऋक् व्या०, १।१)

४. वायु-प्रकृतिमाचार्याः। (ऋक्० व्या०, १।२)

५. लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना।
स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते॥ (वा०प०, १।१०८)

६. अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः।
तद्धर्मेण समाविष्टस्तेजसैव विवर्तते॥ (वा०प०, १।११५)

७. द्र०—आपिशलशिक्षासूत्रे नाभितलप्रकरणम्।

८. महति वायौ महाप्राणः। आपि०शि०सू० ८।१६)

९. अल्पे वायावल्पप्राणः। (आपि०शि०सू०, ८।१७)

१०. तत्र नाभिप्रदेशात् प्रयत्नप्रेरितः प्राणो नाम वायुरूर्ध्वम् आक्रामन्नुरःप्रभृतीनां स्थानानामन्यतमस्मिन् स्थाने प्रयत्नेन विधार्यते। स विधार्यमाणो वायुः स्थानमभिहन्ति। तस्मात् स्थानाऽभिघाताद् ध्वनिरुत्पद्यते आकाशे, सा वर्णश्रुतिः। स वर्णस्यात्मलाभः।
(आपि०शि०सू०, ८।१).

स्वरतन्त्रीरूपस्य गलबिलस्य यादृशी स्थितिः भवति तादृशो वर्णः प्रजायते । विवृते विवारो जायते, संवृते च संवारः[1] ।

कात्यायन आचार्यः आकाशप्रभवं वायुं स्वीकृत्य वाय्वात्मकं शब्दं व्याचष्टेति प्रागवोचाम । आपिशलिरपि आकाशवायुप्रभवं नादं व्याख्याय विभिन्नस्थानेषु प्रविभक्तं नादं वर्णं स्वीचकार[2] । उभावपि आचार्यौ समानम् एव तथ्यजातं कथनशैलीभेदमाश्रित्य व्याचक्षाते ।

शब्दशास्त्रस्य प्रमाणभूतः आचार्यः पाणिनिरापिशलेराचार्यस्य शब्दोत्पत्तिविषयमिमं सिद्धान्तम् अन्वमन्यत । पाणिनीयशिक्षासूत्रनाम्ना प्रचलिते ग्रन्थे कण्ठतोऽपि आपिशलेराचार्यस्य पञ्चदशभेदाख्या वर्णधर्माः स्वीकृता दृश्यन्ते । शब्दस्य ध्वन्यात्मकरूपसम्पादने वायुः प्रयोजको भवतीति विषये प्रायः समे आचार्याः समानमतस्था दृश्यन्ते । आचार्यश्चान्द्रगोभी स्थानकरणप्रयत्नेभ्यो वर्णनिष्पत्तिं व्याचष्ट[3] । तत्रापि वायुं विना प्रयत्नाख्यः स्थानाऽभिघातो न सम्भवति । शब्दोत्पत्तिविषये यावन्ति मतानि दृश्यन्ते, तत्र सर्वैरेव शब्दोच्चारणे वायोः यथाकथञ्चिदुपयोगः स्वीक्रियत एव ।

**२. अणुवादिनः—**

आचार्यभर्तृहरिः शब्दोत्पत्तिविषयकमणुवादिमतमित्थं प्रास्तावीत्—

अणवः सर्वशक्तित्वाद् भेदसंसर्गवृत्तयः ।
छायातपतमः शब्दभावेन परिणामिनः[4] ॥
स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः ।
अभ्राणीव प्रचीयन्ते शब्दाख्या परमाणवः[5] ॥

यथा प्रावृषि नभसि वर्षणात् प्राङ् मेघाः सङ्घातायन्ते तथैव अभिव्यक्तेः प्राक्

---

१. स इदानीं प्राणो नाम वायुरूर्ध्वमाक्रामन् मूर्ध्नि प्रतिहतो निवृत्तो यदा कोष्ठमभिहन्ति तदा कोष्ठेऽभिहन्यमाने गलबिलस्य विवृतत्वाद् विवारः, संवृतत्वात् संवारो जायते ।
(आपि० शि०सू०, ८।७)

२. आकाशवायुप्रभवः शरीरात् समुच्चरन् वक्त्रमुपैति नादः ।
स्थानान्तरेषु प्रविभज्यमानो वर्णत्वमागच्छति यः स शब्दः ॥
(आपि० शि०सू०, श्लो० १)

३. स्थानकरणप्रयत्नेभ्यो वर्णा जायन्ते । (वा० शि० सू० १)

४. वा०प०, १।११० ।

५. वा०प०, १।१११ ।

शब्दपरमाणवोऽपि। वक्ता यदा वक्तुमिच्छति तदा अनेके शब्दाणुसङ्घाताः सङ्घटन्ते। तेषु अङ्गुलिपरिगणनपरिमिता एव केचन शब्दा अभिव्यक्ता भवन्ति। अभ्रवत्संहतानां वाचां पश्यन्त्यामवच्छेदनं जायते। तेन अभिमताया एव वाचोऽभिव्यक्तिः भवति। या च वाक् पश्यन्त्यामवच्छिन्ना न जायते, सा व्यक्तं नाऽभिव्यज्यते। सा तु अव्यक्तस्वरूपेण स्खलिता सञ्जायते।

'अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः[1]।' इति भर्तृहरेः भाषावैज्ञानिक औपमिकः प्रयोगोऽत्र प्रसङ्गे विशेषतोऽवधेयो विद्यते। इह हि नभस्तले परमाणुकल्पाः ध्वनिभागाः सन्तिष्ठन्ते, तैः समस्तमिदं नभस्तलमभिव्याप्तम्। परमाणुरूपैः सूक्ष्मैस्तैः ध्वनिभागैः करणव्यापारेण प्रचीयमानैः श्रवणेन्द्रियग्राह्यः स्थूलो ध्वनिः जन्यते। यथा हि गगने सूक्ष्मैः परमाणुकल्पैरभ्रैरुपचीयमानः स्थूलोऽभ्रसङ्घात उपजायते तथा शब्दाणुभिरपि स्थूलो ध्वन्यात्मकः शब्दः प्रजायते। 'वितर्कितः पुरा बुद्ध्या क्वचिदर्थे निवेशितः[2]।' इति कारिकां व्याचक्षाणः स्वोपज्ञकारः शब्दविषयकं तथ्यमिदं समुदघाटयत्। तद्रीत्या शब्दतत्त्वमविक्रियाधर्मकमस्ति। ध्वनिश्चास्ति विक्रियाधर्मा। अविक्रियाधर्मा च आन्तरः शब्दो विक्रियाधर्मकस्य ध्वनेः प्रतिपादको भवति। करणव्यापारेण प्रचीयमाने ध्वनौ अभ्रसङ्घातवदुपलभ्येन स्थूलेन नादात्मना शब्दः उच्चार्यते श्रूयते च[3]।

वाजसनेयिप्रातिशाख्ये[4] कात्यायनो मुनिः वर्णमात्रायां परमाणूनामणूनाञ्च सत्तां स्वीचकार। कात्यायनमते अणुचतुष्टयेन मात्रिको वर्णो जायते। कात्यायनेन अर्द्धमात्रिको वर्णः परमाणुः व्याख्यातः[5]। व्यञ्जनस्य हि भवति अर्द्धमात्रा[6]। परमाणुद्वयेन मात्रिको भवति वर्णः। ह्रस्वस्य वर्णस्य एकमात्रा[7] भवति, दीर्घस्य मात्राद्वयम्[8], प्लुतस्य च मात्रात्रयम्[9]। उक्तसंदर्भेण परमाणु-

---

१. वा०प०, १।११।

२. वा०प०, १।४७।

३. अविक्रियाधर्मकं हि शब्दतत्त्वं ध्वनिं विक्रियाधर्माणमनुविक्रियते। तच्च सूक्ष्मे व्यापिनि ध्वनौ करणव्यापारेण प्रचीयमाने स्थूलेनाभ्रसङ्घातवदुपलभ्येन नादात्मना प्राप्तविवर्तेन तद्विवर्तानुकारेणात्यन्तमविवर्तमानेन विवर्तमानमिव गृह्यते। (वा०प०, १।४७, स्वोप०)

४. प्रातिशाख्यमिदं शुक्लयजुःप्रातिशाख्यनाम्नाऽपि ख्यातम्। (लेखकः)

५. परमाणुः अर्द्धमात्रा। (वा०प्रा०, १।६१)

६. व्यञ्जनमर्द्धमात्रा। (वा०प्रा०, १।५९)

७. अमात्रस्वरो ह्रस्वः। (वा०प्रा०, १।५५) मात्रा च। (वा०प्रा०, १।५६)

८. द्विस्तावान् दीर्घः। (वा०प्रा०, १।५७)

९. प्लुतस्त्रिः (वा०प्रा० १।५८)

सङ्घातोऽणुसङ्घातो वा ध्वनिः प्रतीयते कात्यायनमते। कात्यायनः शब्दं वाय्वात्मकमपि व्याचष्ट[1]। अनेन कात्यायनस्य वदतो व्याघातो नाशङ्क्यः। वायुना शब्दो ध्वन्यात्मको भवति। परमाणुपुञ्जश्च ध्वन्यात्मकस्य तस्य शब्दस्योपलब्धिजनकः स्थितिजनकश्च भवति। प्राकृतो ध्वनिः शब्दस्योपलम्भकः, वैकृतध्वनिश्च स्थितिजनक इति प्रागुपन्यस्तमस्माभिः। याज्ञवल्क्यशिक्षायामपि अणुचतुष्टयस्य[2] एका मात्रा प्रतिपादिता। मात्राकलापश्च शब्दः प्रतिपाद्यते। याज्ञवल्क्यशिक्षाऽनुसारेण गवाक्षच्छिद्रसम्प्राप्तसूर्यरश्मिषु या कणिका विलोक्यते, तस्या अणु मात्रा भवति। मानसः शब्दोऽणुमात्रिको भवति, कण्ठे अणुद्वयी मात्रा शब्दस्य जायते, जिह्वाग्रे त्र्याणवः शब्दः, उच्चरितश्च मात्रिकश्चतुराणवो वा (ह्रस्वः)[3] भवति। अत्राऽपि शब्दस्य स्वरूपोपलम्भकः स्थितिजनकश्चैव अणुसङ्घातोऽभिप्रेतः। उच्चारणात् प्रागपि शब्दात्मा वक्तरि सन्तिष्ठत एव। विवक्षिते वक्तरि वागात्मा वायुना ध्वन्यात्मको जायते। उच्चारणे च यावान् परमाणुपुञ्जः समाश्रीयते शब्दस्य तावती उपलब्धिः स्थितिश्च जायते। शब्दोत्पत्तौ अणुवादविवेचनाप्रसङ्गे एतद्रहस्यमवश्यमवधेयम्।

## जैनदर्शने शब्दोत्पत्तिविषयकोऽणुवादः

जैनदर्शनग्रन्थेषु परमाणुभिः शब्दोत्पत्तिविषयको विचारः सम्यगुपलभ्यते। प्रसङ्गादुपयोगित्वाच्च संक्षेपतोऽत्र तद्विषये किञ्चिन्निर्दिश्यते। दिगम्बरजैनाऽऽचार्येण तत्रभवता कुन्दकुन्देन स्कन्धप्रभवः शब्दो व्याख्यातः[4]। कुन्दकुन्दाचार्यविरचितं पञ्चास्तिकायसङ्ग्रहाऽभिधेयं ग्रन्थं व्याचक्षाणोऽमृतचन्द्राचार्यः पुद्गलस्कन्धाऽपरपर्यायं शब्दं व्याचष्ट[5]। स्कन्धश्च परमाणुसङ्घातरूपो भवति। अत्र जैनदर्शने पुद्गलानां भेदद्वयं ख्यातम्, १. परमाणुः, २. स्कन्ध-

---

१. शब्दस्तत्। (वा०प्रा०, १।७) वायुः खात्। (वा०प्रा०, १।६)

२. ......मात्रा तु चतुराणवी। (याज्ञ० शि०, ९)

३. सूर्यरश्मिप्रतीकाशा कणिका यत्र दृश्यते।
आणवस्य तु सा मात्रा, मात्रा तु चतुराणवी॥
मानसे चाणवं विद्यात् कण्ठे विद्याद् द्विराणवम्।
त्रिराणवं जिह्वाग्रे निःसृतं मात्रिकं विदुः॥ (याज्ञ० शि०, ९-१०)

४. सद्दो खंधप्पभवो खंधो परमाणुसंगसङ्घादो।
पुट्ठेसु तेसु जायदि सद्दो उप्पादिगो नियदो॥ (पञ्चा०का०सं० ७९)
संस्कृतच्छाया :—शब्दः स्कन्धप्रभवः, स्कन्धः परमाणुसङ्गसङ्घातः।
स्पृष्टेषु तेषु जायते शब्दः उत्पादितो नियतः॥

५. शब्दस्य पुद्गलपर्यायत्वख्यापनमेतत्। (पञ्चा०का०सं०, ७९ टी०)

श्च[१]। भगवदुमास्वामी पुद्गलान् स्पर्शरसगन्धवर्णवतो व्याचष्ट[२]। पुद्गलानां दशसंख्याका विकारा भवन्ति। तेषु शब्दः एकतमो विकारः[३]। तैः दशभिः विकारैः सहिताः पुद्गला भवन्ति[४]। सर्वविधकार्यविधायी स्कन्धो भवति। स्कन्धस्याऽर्द्धभागः स्कन्धदेशः कथ्यते, तस्याप्यर्द्धभागः स्कन्धप्रदेश उच्यते। यस्य च विभागो न सम्भवति, स परमाणुरुच्यते[५]। परमाणूनां स्व एवादिः, स्व एव मध्यः, स्व एवान्तश्च भवति[६]। एषामेव परमाणूनां सङ्घातः स्कन्धो भवति[७]। अस्मादेव च शब्दो जायते। पुद्गलस्य विकारः शब्दो भवति। पुद्गलश्च परमाणूनां सङ्घातो विद्यते। अत एवोच्यते परमाणुभ्यः शब्दोत्पत्तिरिति।

### जैनदर्शने शब्दग्रहणम्—

अत्रेदमवधेयम्—जैनदर्शने इन्द्रियाणां द्वैविध्यमुपवर्ण्यते[८], १-द्रव्येन्द्रियम्, २-भावेन्द्रियञ्च। व्यवहारोपकरणं द्रव्येन्द्रियमुच्यते[९]। येन च आत्मनोऽर्थोपलब्धिरुपयोगश्च भवति तत्करणं भावेन्द्रियं[१०] भवति। तत्र शब्दस्य स्वरूपग्रहणे द्विविधमपि श्रवणेन्द्रियमुपयोगि भवति। बाह्यश्रवणेन्द्रियाऽवलम्बितो भावेन्द्रियगृहीतः शब्दः प्रतिपत्त्रा अवगम्यते। धर्मद्रव्यवशाच्छब्दो वक्तृमुखादुच्चरितः श्रोतुः श्रवणेन्द्रियपर्यन्तं गच्छति। अधर्मवशाच्च भावेन्द्रियेण शब्द उपलभ्यते उपयुज्यते च। तडागादिषु मत्स्यादीनां जलजन्तूनां गमनाऽगमने यथा जलं निमित्तं भवति तथा धर्मास्तिकायोऽपि नाम द्रव्यं स्वाभाविकगतियुतानां जीवानां पुद्गलानाञ्च गतौ निमित्तं भवति। किन्तु धर्मद्रव्यं किञ्चिदपि

---

१. अणुखंधविपप्पयेण दु योग्गलदव्वं हवेइ दुवियप्पं।
खंधा दु छप्पयारा परमाणु चेव दुविप्पो॥ (नि०सा०, २०)

२. स्पर्शरसगन्धवर्णवन्तः पुद्गलाः। (तत्त्वा०सू०, ५।२३)

३. शब्द-बन्ध-सौक्ष्म्य-स्थौल्यसंस्थानभेदतमश्छायातपो द्योतवन्तः। (तत्त्वा०सू०, ५।२४)

४. एतैः दशभिः पुद्गलविकारैः सहिताः पुद्गला भवन्ति। (तत्त्वा०सू०वृ०, ५।२४)

५. खंधं सयलसमत्थं तस्सद्ु भणंति देसो त्ति।
अद्धद्धं च पदेसो परमाणु चेव अविभागी॥ (पञ्चा०का०सं०, ७५)

६. अत्तादि अत्तमज्झं अत्तंत्तंणेव इंदिए गेज्झं।
अविभागी ज दव्वं परमाणु तं वि आणाहि॥ (निय० सा०गा०, २६)

७. अणवः स्कन्धाश्च। (तत्त्वा०सू०, ५।२५)

८. पञ्चेन्द्रियाणि। (तत्त्वा०सू०, २।१५)
द्विविधानि। (तत्त्वा०सू०, २।१६)

९. निर्वृत्त्युपकरणे द्रव्येन्द्रियम्। (तत्त्वा०सू०, १।१७)

१०. लब्ध्युपयोगौ भावेन्द्रियम्। तत्त्वा०सू०, १।१८)

द्रव्यं गतौ कदाचिदपि न प्रयोजयति[1]। अधर्मद्रव्यञ्च द्रव्याणां स्थितौ निमित्तं भवति। परन्तु अधर्म-द्रव्यं स्वतः कस्यचनाऽपि द्रव्यस्य स्थितिं न प्रयोजयति। यथा पृथिवी स्वतः स्थितानां वस्तूनां स्थितौ निमित्तमात्रं भवति तथा धर्म-द्रव्यमपि स्वतः स्थितिशीलस्य द्रव्यस्य स्थितौ निमित्तमात्रं[2] जायते। शब्दस्योच्चारणग्रहणस्थित्यादिज्ञानार्थम् अत्र धर्माऽधर्मयोः स्वरूपं किञ्चित् प्रतिपादितम्। धर्माऽधर्मद्रव्यवशादेव पुदगलाः शब्दभावेन विक्रियन्ते। पुदगलपदं व्युत्पाद्यमानः श्रुतसागरसूरिराचार्यो विपरिणमशीलान् पुद्गलान् व्याचष्ट। सूरिणाऽऽचार्येण पुद्गलपदम् इत्थं व्युत्पादितम्—

'पूर्वं पूर्यन्ते पश्चाद् गलन्ति ये, ते पुद्गलाः[3]।'

उमास्वामी च पुद्गलानामुपकारभूतां वाचं व्याचष्ट[4]। भर्तृहरिणाऽऽचार्येण वागुत्पत्तौ यादृशोऽणुवादः प्रतिपादितः, तेन एतस्य शब्दविषयकस्य जैनसिद्धान्तस्य सामञ्जस्यं स्पष्टं दृश्यते। यथा सूक्ष्माणि अभ्राणि प्रचीयमानानि सङ्घातानि सन्ति भूमौ वर्षन्ति तथा शब्दपरमाणवोऽपि, व्यजनाद् वायुरिव, विवक्षया प्रचीयमानाः सङ्घाताः सन्तो वक्तृमुखादुच्चरिताः श्रोतृभिः गृह्यन्ते[5]। भाषाशास्त्रिणा भर्तृहरिणा शब्दाऽणुवादनिरूपणाप्रसङ्गे छायातपतमः शब्दात्मना परिणामिनः अपि परमाणवो व्याख्याताः। तथ्यमिदं हि दार्शनिकसिद्धान्तरूपेण जैनग्रन्थेष्वेवोपलभ्यते। जैनदर्शनस्य ख्यातनामा आचार्य उमास्वामी पुद्गलानां दशविकारान् पर्यगणयत्। तेषु भर्तृहरिपरिगणिताः–शब्दः, तमः, छाया आतपश्चेत्येतेऽपि परिगण्यन्ते। तच्चेदमित्थं सूत्रं तत्त्वार्थसूत्रनाम्नि ग्रन्थे—

"शब्दबन्धसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपो द्योतवन्तश्च[6]।

अत्र मते शब्द आकाशगुणो न स्मर्यते, नाऽपि स्फोटात्मा एव शब्दः[7]। अपि

---

१. उदयं जह मच्छाणं गमणाणु ग्गहयरं हवदि लोए।
तह जीव पोग्गलाणं धम्मं दव्वं वियाणाहि ॥ (पञ्चा०का०सं० ८५)

२. जह हवदि धम्मदव्व तह तं जाणेह दव्वमधम्मखं।
डिदिकिरियाजुत्ताणं कारणभूदं तु पुढवीव ॥ (पञ्चा०का०सं०, ८६)

३. तत्त्वा०सू०वृ० ५।२९।

४. शरीरवाङ्मनः प्राणापानाः पुद्गलानाम्। (तत्त्वा०सू०, ५।२९)

५. स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः।
अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः ॥ (वा०प०, १।१११)

६. तत्त्वा०सू०, ५।२४।

७. न शब्दः खगुणो बाह्यकरणज्ञानगोचरः।
सिद्धो गन्धादिवन्नैव सो मूर्तमप्यतः ॥
न स्फोटात्मापि तस्यैव स्वभावस्याप्रतीतितः।
शब्दात्मानस्सदा नानास्वभावस्यावभासनात् ॥ (तत्त्वा०श्लो०वा० ५।२४, ... ०श्लो०वा० २-३)

त्वत्र पुद्गलविकार एव शब्दः ।

**जैनदर्शने शब्दभेदः —**

जैनदर्शने कृतः शब्दविभागोऽपि भाषातत्त्वदृष्ट्योपयोगी विद्यते । जैनदर्शने द्विधा शब्दः स्वीकृतः—१-भाषात्मकः, २-अभाषात्मकश्च । भाषात्मकश्चाऽपि द्विप्रकारः, १-साक्षरः, २-अनक्षरश्च । तत्र अक्षरात्मकः शब्दः संस्कृताऽसंस्कृतोभयसामान्यः शास्त्रव्यवहारहेतुः व्यक्तवागात्मको वक्तृव्यवहारप्रत्ययः स्वीक्रियते । अनक्षरात्मकश्च शब्दः अव्यक्तवाचां प्राणिनां स्वाऽभिप्रायमभिव्यङ्क्तुं कृतो नादः । अभाषात्मकोऽपि शब्दो द्विप्रकारः, १-प्रायोगिकः, २-वैश्रसिकश्च । दुन्दुभिपटहादीनां शब्दः प्रायोगिको भवति । प्रायोगिकः शब्दश्चतुष्प्रकारो भवति, तत-वितत-घन-सुषिरभेदात् । पुष्करपटहादिध्वनिः ततशब्दो भवति । तन्त्रीविहितवीणाद्युद्भवो विततशब्दः स्वीक्रियते । घनशब्दः कांस्यतालादिध्वनिः भवति । सुषिरश्च शब्दो वंशादिनिमित्तो ध्वनिरुच्यते । वैश्रसिको नाम स्वाभाविको[1] ध्वनिः जायते । अयत्नजो नादो वैश्रसिको वक्तुं शक्यते । मेघादिप्रभवः शब्दो वैश्रसिक एव[2] ।

**शब्दोत्पत्तौ ज्ञानवादिमतम् —**

भर्तृहरिणा परिगणितेषु शब्दोत्पत्तिविषयकमतेषु अन्तिमं मतं ज्ञानवादिनां विद्यते । शब्दोत्पत्तौ ज्ञानवादिमतं पतञ्जलेराचार्यस्याऽभिमतमिति प्रागवोचाम 'आख्यातोपयोगे'[3] इति पाणिनीयं सूत्रं भाषमाणेन पतञ्जलिना ध्वनितमेतदिति चर्चितप्रायम् । भर्तृहरिणा ज्ञानवादिनां मतं व्यवस्थितरूपेण व्याख्यातम् । उच्चारणात् प्राक् शब्दभावना वक्तरि अनिवार्या भवतीति भर्तृहरिः सुस्पष्टं व्याचष्ट । तन्मते शब्दभावनां विना प्राणवायोरूर्ध्वंसमीरणं करणव्यापारः, स्थानाऽभिघातश्च न सम्भवति[4] । शब्दभावना च इच्छारूपा ज्ञानरूपा वा भवति । आन्तरमिदं ज्ञानं सूक्ष्मेन पराख्येन वागात्मना सह सन्तिष्ठते । तदेव च प्राणवाय्वादिना प्राप्तसहायः शब्दरूपेणाऽभिव्यज्यते[5] ।

---

१. विश्रसा, इत्ययं शब्द आकारान्तोऽव्ययं स्वभावार्थवाची ।
(तत्त्वा०सू०वृ०, ५।२४)

२. द्र०—तत्त्वार्थसूत्रवृत्तिः । ५।२४ । तथा तत्त्वार्थश्लोकवार्तिकम् । ५।२४ ।

३. अष्टा०, १।४।२९ ।

४. आद्यः करणविन्यासः प्राणस्योर्ध्वंसमीरणम् ।
स्थानानामभिघातश्च न विना शब्दभावनाम् ॥ (वा०प०, १।१२२)

५. अथेदमान्तरं ज्ञानं सूक्ष्मवागात्मना स्थितम् ।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ॥ (वा०प० १।११२)

आन्तर एव ज्ञाता संकल्पात्मकं मन आश्रित्य पाकेनाऽवस्थाविशेषमवाप्तः प्राणवायुनो[1]दीर्यते। प्राणवायुः वर्णानभिव्यज्य स्वयं वर्णरूपः सञ्जायते। ज्ञानमेव आत्मनो ग्रन्थीन् विभज्य पृथग्विधैः श्रुतिरूपैः ध्वनिभिः प्रतीयते[2]।

**भर्तृहरेः मौलिकी दृष्टिः—**

शब्दोत्पत्तिविषयकाणि प्रायः सर्वाण्येव महत्त्वपूर्णानि मतान्युपर्यस्माभिः विवेचितानि। तद्विलोकनेन तानि पृथक् पृथङ् मतानि प्रतीयन्ते। परं वस्तुतो वायोरणूनां ज्ञानस्य वा शब्दत्वापत्तौ नास्ति परस्परं कश्चिद् विरोधः। न ह्येकेन केनचित् तत्त्वेन शब्द उत्पादयितुं शक्यते, शब्दोत्पत्तौ सर्वस्यापि तत्त्वसङ्घातस्य आवश्यकत्वात्। शब्दतत्त्वगवेषको भर्तृहरिराचार्यः शब्दोत्पत्ति-विषये समन्वितं सर्वग्राहकं सर्वोपयोगिनञ्च सिद्धान्तं समाश्रयत्। भर्तृहरिणा उद्धृतया कारिकया स्वसिद्धान्तः समुपस्थापितः।

तस्य प्राणे च या शक्तिः या च बुद्धौ व्यवस्थिता।
विवर्तमाना स्थानेषु सैषा भेदं प्रपद्यते[3]॥

भर्तृहरेरयमत्रत्योऽभिप्रायः। शब्दो द्विप्रकारः, १-बुद्ध्यधिष्ठानः, २-प्राणाधि-ष्ठानश्च। प्राणपदमत्र वाय्वर्थे प्रयुज्यते[4]। वायोरवस्थाविशेषः प्राणो भवति, यो हृदयस्थः स्वीकृतः[5]। शौनकीयमृक्प्रातिशाख्यं भाषमाण उव्वटाचार्य एकेषा-माचार्याणां मते प्राणवायोः वाचो निष्पादकत्वं व्याचष्ट। अपरे आचार्या उदानवायुमपि वर्णनिष्पादकं स्वीकुर्वत इत्युव्वटः समाचष्ट[6]।

प्राणबुद्धिभ्यां प्रतिलब्धाऽभिव्यक्तिः शब्दः अर्थं बोधयति। प्राणमात्रेण प्रतिलब्धाऽभिव्यक्ती रवः अर्थाऽभिधायको न भवति, तस्य ज्ञानपरिणामाऽ-

---

१. स मनोभावमापद्य तेजसा पाकमागतः।
वायुमाविशति प्राणमथाऽसौ समुदीर्यते॥ (वा०प० १।११३)

२. विभज्य स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः।
प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते॥ (वा०प० १।११५)

३. वा०प० १।११७।

४. प्राणो वायुः। (ऋक्प्राति० १३।१)

५. हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः।
उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः॥ (अमरकोष, १।१।६३)

६. ......प्राणो हि नाभेरुपरिष्टाद् व्याप्याऽस्ये व्याचरति।......एवं वाचि वर्तमानं प्राणमेके आचार्या मन्यन्ते। अपर उदानं मन्यन्ते। ऋक्प्राति० १३।१, उ०भा०।

भावात् । वाद्यादीनां ध्वनिभिः शाब्दबोधस्थलेऽपि प्रयोक्तुः ज्ञानम् उपयोगि भवति । तत्र प्राणो बुद्धितत्त्वेन (ज्ञानेन) सह समाविष्ट ऊर्ध्वमभिप्रवृत्तः कण्ठ-ताल्वादिस्थानेषु आध्नानोऽकारादिरूपेण विभिन्नतया प्रतीयमानोऽक्रमेऽपि शब्दात्मनि वर्णभेदानुरागमात्रं जनयति ।

अत्रेदमवधेयम् —शब्दोत्पत्तौ प्राणवायोः सत्ताऽनिवार्या, प्राणवायुं विना शब्दोत्पत्तेरसम्भवात् । यत्र प्राणवायुः न सम्भवति तत्र मनोऽपि न सन्तिष्ठते, यथा मृतशरीरे । तत्र मृतशरीरादौ परात्मकस्य वागात्मनः सत्त्वेऽपि मानस-व्यापाराऽभावेन पश्यन्त्यसत्त्वात्तत्र मध्यमावैखर्योः प्रादुर्भावो न भवति । कायाग्निः तेज आश्रयतां प्रतिपन्नः तत्समावेशादग्निरूपतां विहाय तेजोमात्र-मवशिष्यते । तथा च वायुरपि स्वरूपहानेन प्राणमात्रं सन्तिष्ठते । बुद्धिश्च ज्ञानतत्त्वमात्रं जायते । शब्दोत्पत्तौ एतेषाम् 'तेजसः' प्राणस्य ज्ञानस्य चेति' तत्त्वत्रयाणामुपयोगः प्रातिशाख्येषु शिक्षाग्रन्थेषु च ख्यातः । एवञ्चैतत् त्रयात्म-केन तत्त्वेन शब्दो जन्यते । भर्तृहरिरेतदित्थमवर्णयत् —

स मनोभावमापद्य तेजसा पाकमागतः ।
वायुमाविशति प्राणमथाऽसौ समुदीर्यते[1] ॥

शब्दस्य ज्ञानात्मकत्वेऽपि प्राणसाहाय्यं विना ऊर्ध्वप्रवृत्तिः न भवति । ऊर्ध्व-प्रवृत्त्यर्थश्च तेजसः संश्रय आवश्यकः स्वीक्रियते । ज्ञानात्मक एव शब्दः शब्द-परमाणुः कथ्यते । अयञ्च वक्तरि विद्यमानो ज्ञानात्मकः शब्दो वृषभेणालङ्-क्रियते मनीषिभिः[2] । यथा वृषभो वत्सार्थं गवि गर्भं वपति, तथाऽयं वक्तरि विद्यमानः शब्दः श्रोतरि अर्थबोधनार्थं शब्दसंस्काररूपं गर्भं वपति । उच्चार-णाद्धि शब्दानाम्, वक्तृबुद्धिस्थेन शब्देन सह श्रोतृबुद्धिस्थस्य शब्दस्य सायुज्यं जायते । शाब्दिकजगति च अयमेवाऽस्ति परमः पुरुषार्थः[3] ।

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते[4] ॥

---

१. वा० प० १।११३ ।

२. चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आ विवेश ॥
(ऋ०सं, ४।५८।३)

३. तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।
तस्य प्रवृत्तितत्त्वज्ञः तद् ब्रह्माऽमृतमश्नुते ॥ (वा०प० १।१३२)

४. वा०प०, १।१३१ ।

तेजसः प्रकाशकत्वं नाम स्वरूपं भवति, आत्मनश्च चैतन्यं नाम जायते स्वरूपम् । अवबोधरूपस्य ज्ञानस्य तु वाग्रूपता एव स्वरूपं भवति । वाग्रूपताऽ एव ज्ञानस्य प्रकाशिका भवति । वाग्रूपतायामसत्यां ज्ञानं सदपि न प्रकाशेत[1] । यद्यपि अक्षिनिकोचपाणिविहारादिभिरपि ज्ञानं प्रकाश्यमानं दृश्यते, तथाऽपि वाग्रूपतया यथा कृत्स्नं ज्ञानं प्रकाशितं दृश्यते, न तथा अन्यैः सङ्केतादिभिः । शब्दो हि ज्ञानस्याऽन्तरङ्गशक्तिर्भवति, अन्यः सङ्केतादिश्च बहिरङ्गशक्तिः । सर्वविद्यानां विद्यादीनां कलानाञ्च उपनिबन्धनीयं ज्ञानस्य वाग्रूपता एव । लौकिकानां व्यवहाराणां नियामको भेदकश्च शब्दव्यापार एव[2] । वाणी सर्वस्याऽपि लोकव्यवहारस्य साधनमस्ति, आन्तरिकस्य च संवेदनस्य आधारः । सर्वेष्वपि प्राणिषु शब्दशक्त्यनुविद्धमेव चैतन्यं दृश्यते । प्राणिषु चैतन्यरूपायाः सञ्ज्ञायाः प्रयोजिका वाग्रूपता एव भवति[3] । वाग्रूपतायां विद्यमानायां सर्वास्वर्थक्रियासु प्राणिनां सफलाः प्रवृत्तयो दृश्यन्ते । तदुत्क्रान्तौ च प्राणिषु काष्ठकुड्यवत् प्रवृत्तिशून्यता जायते[4] । मूकेष्वपि प्राणिषु सङ्केतादिप्रयोजिका वाक्छक्तिरेव भवति । तत्रोच्चारणाऽवयवानां वैकल्याद् वैखर्या वाचोऽभावेऽपि मध्यमापर्यन्ताया वाचो विद्यमानत्वात् । मुखविकृतेः, पाणिविहारस्य, अक्षिनिकोचादेश्च सङ्केतस्य प्रयोजिका मध्यमा वागेव भवति । मध्यमावशादेव एते व्यापारा जायन्ते ।

### शब्दस्य ग्रहणम्

वागुच्चारणनिरूपणा-प्रसङ्गे वाचः स्थितिचतुष्टयं भवतीति प्रागवोचाम । तत्र १-इच्छा, २-मनोभावः, ३-प्रयत्नम् (यान्त्रिकप्रक्रिया), ४-ध्वनिश्चेति सार्थकस्य शब्दस्योच्चारणे चतस्रः स्थितयः कल्प्यन्ते । अस्यैव विलोमकं प्रक्रियाचतुष्टयं श्रोतुः शब्दग्रहणेऽपि भवति । सर्वप्रथमं श्रोता स्वकीये कर्णकुहरे वक्तृमुखाद् उच्चरितां व्यक्तां वाचं प्राप्नोति । तया च श्रोतुः कर्णपटहेन सह आघातरूपः सङ्घर्षो जायते । स्थितिरियं श्रुतिसंवेदना भवति ।

---

१. वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥ (वा०प०, १।१२४)

२. सा सर्वविद्याशिल्पानां कलानाञ्चोपबन्धनी ।
तद्वशादभिनिष्पन्नं सर्वं वस्तु विभज्यते ॥ (वा०प० १।१२५)

३. सैषा संसारिणां सञ्ज्ञा बहिरन्तश्च वर्तते ।
तन्मात्रामनतिक्रान्तं चैतन्यं सर्वजन्तुषु ॥ (वा०प०, १।१२६)

४. अर्थक्रियासु वाक् सर्वान् समीरयति देहिनः ।
तदुत्क्रान्तौ विसञ्ज्ञोऽयं दृश्यते काष्ठकुड्यवत् ॥ (वा०प०, १।१२७)

ततः शक्तिग्रहात्मको मनोव्यापारो भवति । शक्तिग्रहसमकालमेव प्रतिभारूपा स्फोटाऽभिव्यक्तिः जायते । अन्ते च वक्तृबुद्ध्या सायुज्यं समवाप्य श्रोतुरर्थाऽवधारणं सञ्जायते ।

आचार्यभर्तृहरिः स्फोटरूपाऽभिन्नस्यैव ध्वनेः ग्रहणं स्वीकुरुते[1] । वक्तुः श्रोतुश्च बुद्ध्योरेकस्मिन्नर्थे तादात्म्यसम्पादनं शब्दव्यापारस्य प्रयोजनं भवति । वक्ता यमर्थमभिव्यङ्क्तुमिच्छति, श्रोता यदि तमेवाऽर्थम् उच्चारितेन तेन शब्देनाऽवगच्छति तदा कृतकार्यो भवति शब्दव्यापारः । अस्मादेव भर्तृहरिः श्रोतुरर्थावधारणस्य कारणं शब्दं व्याचष्ट । वक्तुः बुद्धिविषयादर्थाच्छब्द उच्चार्यते[2] । उच्चारितेन च शब्देन स एवाऽर्थः श्रोतुः बुद्धिविषयो भवति । शब्दस्य बुद्धिविषयत्वं संलक्ष्य भर्तृहरिणा शब्दः अर्थश्च बौद्धो व्याख्यातः[3] ।

शब्दोत्पत्तौ पतञ्जलिमतनिरूपणाप्रसङ्गेऽस्माभिः वक्तृज्ञानस्य परिणामः शब्दो व्याख्यातः । शब्दस्य 'शब्दरूपम् अर्थश्चे'ति स्वरूपद्वयस्वीकारेऽयमेव हेतुः दृश्यते । श्रोतुः शब्दाऽधिगमकालेऽपि त्रयः प्रत्ययाः जायन्ते । श्रोता श्रुतेन शब्देन प्रयोक्तुः ज्ञानमवगच्छति, लौकिकं बाह्यं वा वस्तुमात्रमर्थमवगच्छति, शब्दस्वरूपञ्चाऽपि अधिगच्छति[4] । कदाचित् क्वचिच्छ्रोता बाह्यार्थाऽवगमे प्रयोक्तुर्ज्ञानाऽवगमे च सन्दिग्धोऽपि जायते । शब्दस्वरूपेऽवगते च स सन्देहो निवृत्तो जायते[5] ।

श्रोतुः शब्दस्वरूपाऽवगतये ध्वनेः भेदद्वयं स्वीकृतम्—१. प्राकृतः, २. वैकृतश्चेति । अनयोः स्वरूपमतः पूर्वं प्रतिपादितम् । शब्दस्य स्वरूपोपग्राहकः प्राकृतो ध्वनिः, स्थितिजनकश्च वैकृतो ध्वनिः भवति । यथा दूरात् प्रज्वलन् प्रदीपः प्रभामात्रं लक्ष्यते तथा शब्दोऽपि श्रुतो ध्वनिमात्रमेव संलक्ष्यते[6] । गृहीत-

---

१. स्फोटरूपाविभागेन ध्वनेर्ग्रहणमिष्यते । ······(वा०प०, १।८१)

२. शब्दः कारणमर्थस्य स हि तेनोपजायते ।
तथा च बुद्धिविषयादर्थाच्छब्दः प्रतीयते ॥ (वा०प०, ३।३।३२)

३. भोजनाद्यभिमन्यन्ते बुद्ध्यर्थे यदसम्भवि ।
बुद्ध्यर्थादेव बुद्ध्यर्थे जाते तदपि दृश्यते ॥ (वा०प० ३।३।३३)

४. ज्ञानं प्रयोक्तुर्बाह्योऽर्थः स्वरूपञ्च प्रतीयते ।
शब्दैरुच्चारितैस्तेषां सम्बन्धः समवस्थितः ॥ (वा०प०, ३।३।१)

५. प्रतिपत्तिर्भवत्यर्थे ज्ञाने वा संशयः क्वचित् ।
स्वरूपेषूपलब्धेषु व्यभिचारो न विद्यते ॥ (वा०प० ३।३।२)

६. दूरात् प्रभेव दीपस्य ध्वनिमात्रं तु लक्ष्यते ।
घण्टादीनाञ्च शब्देषु व्यक्तो भेदः स दृश्यते ॥ (वा०प०, १।१०४)

शक्तिकस्य प्राप्तशब्दसंस्कारस्य च श्रोतुः प्राकृतध्वनिसाहाय्येन शब्दस्वरूपोपलम्भो भवति। उपलब्धः स एव शब्दो द्रुतमध्यमविलम्बितरूपेण वैकृतध्वनिना चिराऽचिरकालं यावत् प्रतिपत्त्रा अनुभूयते[1]।

यो रवोऽस्माभिः श्रवणेन्द्रियेण गृह्यते, शब्दत्वेन च व्यपदिश्यते, वस्तुतो नाऽसौ शब्दः, अपि तु शब्दस्याऽवस्थानम्। शब्दस्याऽभिव्यञ्जको ध्वनिविशेषोऽयमस्ति। शब्दस्वरूपग्रहणेऽयं परमसहायको भवति। ध्वनिरेवाऽयं ह्रस्व-दीर्घप्लुतादिभेदभाग् भवति। ध्वनिकालेन शब्दकालो न भिद्यते[2]। अभिन्नकालोऽसौ शब्दः शब्दतत्त्वविद्भिः स्फोट इत्यभिधीयते। शब्दाऽपरपर्यायस्याऽस्य स्फोटस्य विस्तृतः परिचयोऽस्माभिः सद्य एवाऽग्रे प्रदास्यते।

### 'चत्वारि वाक्परिमिता पदानि' इत्यत्रैको विचारः

शब्दोत्पत्तिविचार-प्रसङ्गे वाचां चतुष्ट्वमस्माभिः प्रतिपादितम्। १-परा, २-पश्यन्ती, ३-मध्यमा, ४-वैखरी चेति वाक्चतुष्टयं स्वीक्रियते। एषां वाग्भेदानां स्वरूपमपि निरूपितम्। सर्वैरपि शब्दतत्त्वविद्भिः वाक्चतुष्ट्वमिदं चर्चितम्। ऋग्वेदे वाचां चत्वारि परिमितानि पदानि प्रतिपादितानि। तेषु अन्तिमं स्थूलं शब्दस्वरूपं शब्दतत्त्वाऽनभिज्ञा मनुष्या जानन्ति।

चत्वारि वाक् परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः।
त्रीणि गुहा निहिता नेङ्गयन्ति
तुरीयं वाचो मनुष्या वदन्ति[3]॥

वाक्तत्त्वस्य मननशीला जनाः श्रुते शब्दे वाचामुक्तं रूपचतुष्टयमपि जानन्ति। ये च सामान्याः, ते वैखरीरूपं स्थूलशब्दमात्रम् अवगच्छन्ति। तेषां कृते, 'परा-पश्यन्ती-मध्यमा' इति त्रीणि शब्दस्वरूपाणि तथैव जायन्ते, यथा गभीरायां अन्धकारावृतायां, गुहायां निहितानि रत्नजातानि। इमा मध्यमान्ता वाचोऽभ्यन्तरे विद्यमाना न कदाचिच्चेष्टन्ते श्रवणेन्द्रियग्राह्या न भवन्ति।

वाचां चतुष्ट्वविषये विदुषां वैमत्यं दृश्यते। वाचां चतुष्ट्वप्रतिपादनेऽ-

---

१. द्रव्याऽभिघातात् प्रचितो भिन्नो दीर्घप्लुतावपि।
कम्पे तूपरते जातो नादावृत्तेर्विशेषकाः॥ (वा०प०, १।१०५)

२. अल्पे महति वा शब्दे स्फोटकालो न भिद्यते।
परस्तु शब्दसन्तानः प्रचयाऽपचयात्मकः॥ (वा०प० १।१०३)

३. ऋक्० १।१६४।४५।

स्माभिः 'चत्वारि वाक् परिमिता पदानी'ति ऋगाश्रिता । तत्रापि चत्वारीति पदेन किं ग्राह्यमिति विषये ऐकमत्यं नास्ति । एतद्विषये विदुषां वैमत्यमत्र विचार्यते । व्याकरणाऽध्ययनस्याऽनुषङ्गिकं प्रयोजनं प्रदर्शयन् पतञ्जलिराचार्यो निर्दिष्टं मन्त्रमित्थं व्याचष्ट—

"चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च ।" ···गुहायां त्रीणि निहितानि नेङ्गयन्ति, न चेष्टन्ते, न निमिषन्तीत्यर्थः ।···तुरीयं ह वा एतद्वाचो यन् मनुष्येषु वर्तते, चतुर्थमित्यर्थः[1] । अत्र भाष्यकारश्चत्वारीति पदेन नामाख्यातोपसर्गनिपातान् सुस्पष्टं सङ्गृह्णाति । एवञ्चोक्तवाचां परादीनां सिद्धिन दृश्यते । परन्त्वत्रेदमवधेयम् मन्त्रोद्धरणेन भाष्यकृतां किमभिप्रेतम् ? वाचां कृत्स्नं स्वरूपं यथा सुविज्ञातं भवेदित्येव परमः पुरुषार्थो जनानाम् । स च व्याकरणाऽध्ययनं विना न सेत्स्यतीति वाचां स्वरूपाऽवधारणार्थमध्येयं व्याकरणमित्येव भाष्यकृदाशयः । यो हि भाषाशास्त्रतत्त्वज्ञः स तु जानात्येव सर्वं यत् कथमस्मन्मुखाद् उच्चार्यते शब्दः, किं वा तस्यादिकरणभूतं तत्त्वमिति । ये च भाषाविज्ञानाऽवबोधहीनाः, ते नाऽवगच्छन्ति तद्रहस्यम् । ते तु वैखरीरूपं स्थूलशब्दमात्रमवगच्छन्ति । अतो वैखरीमात्रावगन्तारो न भवेम इत्यध्येयं व्याकरणमिति सुस्पष्टोऽभिप्रायः ।

भाष्ये मन्त्रस्य व्याख्यातोऽर्थः पतञ्जलेः स्वकीय एवेति इदमित्थन्तया वक्तुं न शक्यते ततः प्राक्कालिकेन निरुक्तकृता यास्केन तन्मन्त्रस्य तथा व्याख्यातत्वेन तदर्थस्याऽनुवादत्वसम्भवात् । तन्मन्त्रं भाषमाणो यास्क इत्थं विलिलेख—

"नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः[2] ।"

प्रयोजनमात्रमवलोकमानेन, पतञ्जलिना एषोऽर्थोऽनुक्तः स्यादित्यपि सम्भवति । यास्केन ऋगियं प्रवह्लितेति व्याख्यातम्[3] । अनभिव्यक्तार्था वाग्, अभिमतार्थवाचिका वा वाणी प्रवह्लिता प्रहेलिका वोच्यते[4] । श्रोतुः यादृशोऽर्थोऽभिमतो भवति, स प्रवह्लिकातः तादृशमर्थं निश्चिनोति । एवञ्च परादिविषयको मन्त्रार्थः परम्पराविरुद्ध इति मत्वा न भेतव्यम् । परादिविषयक एव मन्त्रार्थः

१. अष्टा०, महाभा०, पस्पशा० ।
२. निरु०, १३।१।९ ।
३. अथैषा वाचः प्रवह्लिता इव । (निरु०, १३।१।४)
४. प्रवह्लितेति अनभिव्यक्तिविशिष्टो वाक्यार्थः । (निरु०, १३।१।९ दुर्गा०)

सङ्गतः प्रतीयत इति सद्य एवाग्रे प्रतिपादयिष्यते । नागेशः यास्ककृतेन मन्त्रार्थेन सह स्वकीयं वैमत्यं प्रादर्शयत् । तत्र मन्त्रार्थाऽसङ्गतिविषयको हेतुरेव प्रतीयते । नागेशेन चत्वारीति पदेन परापश्यन्तीमध्यमावैखर्योऽपि गृहीताः[1] । नागेशमते नामादीनां मध्ये एकैकं चतुष्पादमेव सामान्या मनुष्या अवगच्छन्ति ।

आचार्यः सायणः ऋक्संहितां भाषमाणो निर्दिष्टमन्त्रार्थविषये विभिन्नमतानि प्रदर्शयन् चत्वारीतिपदेन परा-पश्यन्ती-मध्यमा-वैखर्योऽप्यगृह्णात्[2] । सायणेन एषां स्वरूपनिर्वचनमपि कृतम् । मन्त्रार्थसङ्गतिदृष्ट्या परादिविषयको मन्त्रार्थो यथा समीचीनः प्रतिभाति, न तथा नामादिविषयकः । 'त्रीणि गुहा निहिता नेङ्गयन्ति, तुरीयं वाचो मनुष्या वदन्ति' इत्युत्तरार्द्धाया ऋचः परादिपक्षे एव सङ्गतिः जायते । ध्वन्यर्थसंस्कारशून्या परा, अर्थसङ्कल्पा पश्यन्ती, ध्वनिसङ्कल्पा मध्यमा च सर्वसाधारणानाम् अवैयाकरणानां कृते अज्ञानावृता एव जायन्ते । ते तु वाचां ध्वनिरूपं चतुर्थांशं वैखरीमात्रं स्वरूपं जानन्ति । वाचः कृत्स्नं स्वरूपं तु शब्दतत्त्वविद एव विदन्ति । यथा काचिद् धर्मगृहीता भार्या सुवासाः सती कामयमाना पतिमायाति तथैव वाणीयं मनोहारिणी भाषातत्त्वविदो निकषा सुव्यक्ता जायते[3] ।

नामादिविषयके मन्त्रार्थपक्षे उत्तरार्द्धमन्त्रार्थस्य सङ्गतिर्न जायते । 'नामाख्यातोपसर्गाः गुहायां वर्तमाना कदाचिन्न चेष्टन्ते, निपातमात्रञ्चैव मनुष्या वदन्ति ।' इत्येषोऽर्थो मन्त्रस्य बुद्धिपथं नायाति कथञ्चित् । एकैकस्य नामादिरूपस्य चतुर्थं भागं मनुष्या वदन्तीति यदि शब्दानां केशाकेशि विधीयेत तदाऽपि 'त्रीणि गुहा निहिता नेङ्गयन्ति' इत्यस्या ऋचः का गतिः ? किञ्च मन्त्रस्थं 'नेङ्गयन्ति' इति पदं व्याचक्षाणः पतञ्जलिः परादिपक्षदेशीयं पक्षं स्वीकुरुते एव । तदित्थं व्याचष्ट —

'नेङ्‍्यन्ति = न चेष्टन्ते, न निमिषन्ती[4]त्यर्थः ।' चेष्टनेनाऽत्र स्थानकरणाभिघातादिव्यापारोऽभिप्रेतोऽस्ति । स च व्यापारो वैखर्यमिव भवति न तु

---

१. "परा-पश्यन्ती-मध्यमा-वैखर्यः, नामादीनि च । नामादीनां मध्ये च एकैकं चतुष्पादम् ।" (अष्टा० महाभा०, पस्प०, प्र०, उद्यो०)

२. "...वाक्-वाचः कृत्स्नायाः पदानि चत्वारि, परिमिता=परिमितानि । लोके या वागस्ति सा चतुर्विधा विभक्तेत्यर्थः ।... ...कानि तानि चत्वारि" इत्यत्र बहवः स्वस्वमताऽनुरोधेन बहुधा वर्णयन्ति । ..अपरे मातृकाः (पाठा मान्त्रिकाः) प्रकारान्तरेण प्रतिपादयन्ति— परा-पश्यन्ती मध्यमा-वैखरीति । (ऋक् सं०, १।१६४।४५ सायणभा०)

३. "... ...उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः ।" (ऋक् सं०, १०।७१।४)

४. अष्टा० महाभा० पस्पशा० ।

ततः पूर्ववर्तिषु मध्यमादिषु। अतश्चत्वारीति पदेन मन्त्रार्थसङ्गतिदृष्ट्या परादिग्रहणं युक्तमेव।

निरुक्तिप्रक्रियायाः नामाख्यातोपसर्गनिपातेषु चतुःषु परिसमाप्तत्वाद् यास्कः चत्वारीति पदेन तान् समगृह्णात्[1]। निरुक्तिर्हि ध्वन्यात्मिकाया वैखर्या वाचो भवतीति नामादिचतुःषु वाचः समाहृतत्वादेव चत्वारीति पदेन नामादिग्रहणं प्रतीयते यास्कस्य। यास्केन निरुक्ते ये ये पक्षाः समुपस्थापिताः ते सर्वे एव वैखरीमात्रविषयका विद्यन्ते। पदभेदविषये षट्पक्षाः परिगणिता यास्केन। तथाहि—

१-ओङ्कारो महाव्याहृतयश्चेत्यार्षम्।

२-नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः।

३-मन्त्रः, कल्पः, ब्राह्मणम्, चतुर्थी व्यावहारिकीति याज्ञिकाः।

४-ऋचो यजूंषि, सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः।

५-सर्पाणां वाग्वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकीत्येके।

६-पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादाः[2]।

अत्र सर्वत्र पक्षेषु लौकिकवैदिकोभयव्यवहारप्राप्तानां वैखरीवाचां विभागप्रदर्शनं दृश्यते। सर्वसामान्यव्यवहारप्राप्तासु इमासु वैखरीवाक्षु कथमेकतमां वाचं मनुष्या वदन्ति, अन्याश्च गुहायां सन्तिष्ठन्ते इति महताऽनुसन्दधानेनाऽपि नाऽवगम्यते। अत्रैतत् समाधातुं शक्यते यत् तुरीयाऽवस्थाप्राप्तासु अतिस्थूलास्वपि वैखरीवाक्षु स्वल्पतमं स्वरूपं चतुर्थभागमात्रमेव सामान्या मनुष्या विदन्ति। वैयाकरणाश्च प्रकृतिप्रत्ययविभागकल्पनेन सर्वा एव वैखरीवाचः जानन्ति।

अत्र सन्दर्भे किञ्चिद् व्याकरणपरम्पराऽपि विचिन्तनीया। भर्तृहरिराचार्यः पदभेदविषयकं मतत्रयं पर्यगणयत्। केचन द्विधापदं व्याचक्षते। अन्ये चतुर्धापदं मन्वते। अपरे च पञ्चविधं पदं स्वीकुर्वते[3]। नामाख्यातोपसर्ग-

१. यद्वा समाहृता भवन्ति तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तानि इमानि भवन्ति। (निरु० १।१।१)

२. निरु० १३।१।९।

३. द्विधा कैश्चित् पदं भिन्नं चतुर्धा पञ्चधाऽपि वा।
अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत्॥ (वा०प० ३।१।१)

निपातभेदैः पदानां चतुर्धापक्षो भवति। कर्मप्रवचनीयमपि पदमिति सन्निवेशेन जायन्ते पदानां पञ्चभेदाः। एतेषां स्वरूपनिर्वचनमस्माभिरनुशासनीयशब्दप्रकरणे सम्यक् करिष्यते। पाणिनीया परम्परा नास्ति चतुर्धापक्षस्य नापि पञ्चधापक्षस्य। अत्र तु सुबन्तं तिङन्तञ्चेति द्विधापदं स्वीक्रियते। पाणिनिना सर्वाण्यपि पदजातानि अस्मिन् विभागद्वये एव समाहृतानि[1]। पाणिनीयतन्त्रस्य प्रमाणभूतस्य प्रवक्तुः पतञ्जलेः दृष्टिपथात् कथमेतत् तिरोहितमिति महदाश्चर्यम्।

वस्तुतस्त्वत्रेदमवधेयम्—तत्र पस्पशाह्निके ऋगुद्धरणेन पतञ्जलेः मन्त्रार्थकरणं लक्ष्यं नास्ति। अर्थस्तु यास्कस्याऽनूदितः पतञ्जलिना। भाष्यकर्तुरिदमेवाऽस्ति परमं लक्ष्यं यदनया ऋचा 'व्याकरणाऽध्ययनमपरिहार्यमिति' आदिश्येत। यतो हि भाषातत्त्वविषये अज्ञानां विशेषज्ञानाञ्च एतावानेव भेदो विद्यते यदज्ञाः प्रकृतिप्रत्ययविभागज्ञानरहितं सिद्धशब्दमात्रम् अवगच्छन्ति, तमेव च प्रयुञ्जते। विशेषज्ञास्तु सिद्धरूपमपि शब्दं जानन्ति, तत्कारणीभूतान् परा-पश्यन्ती-मध्यमारूपानपि शब्दान् विदन्ति। तस्मात् सकलपदस्वरूपज्ञानाय विशेषज्ञपदावाप्तये चाऽध्येयं व्याकरणम्। एतद् व्याकरणाध्ययनप्रयोजनप्रदर्शनाऽतिरिक्तं किञ्चिदन्यत् प्रयोजनं भाष्यकृतो नास्ति अनया ऋचा। अत चत्वारीति पदेन परादीनां ग्रहणे कश्चित् सङ्कोचो न विधेयः।

**परावाक्तत्त्वविषयकविवादस्य समाधानम्—**

अत्र प्रकरणे एकोऽन्योऽपि अवशिष्टो विवादग्रस्तो विषयः। पाणिनीयदर्शनस्य प्रामाणिको व्याख्याता भर्तृहरिः व्याकरणविवेच्यस्य शब्दस्य त्रीणि स्वरूपाणि समगृह्णाद् वाक्यपदीये, १-पश्यन्ती, २-मध्यमा, ३-वैखरीति च—

> वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
> अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्[2]॥

अत्र कारिकायां परायाः वाच उल्लेखाऽदर्शनात् केचन व्याकरणतन्त्रे वाचां त्रैविध्यस्यैव स्वीकृतिं मन्वते। अत्र त्रीण्येव वाक्स्वरूपाण्यभिमतानि आहोस्वित् पराऽपीति विचारणीयो विषयः। वाक्यपदीये पराया वाचो निषेधानुपलम्भात् प्रतिपादनाच्च भर्तृहरेः पराऽपि वागभिमतेति विद्यतेऽस्मदीया धारणा।

---

१. सुप्तिङन्तं पदम्। (अष्टा०, १।४।१४)

२. वा०प० १।१४२।

सर्वविधवाग्विकाराणां प्रकृतिं परां समाचष्टाऽऽचार्यो भर्तृहरिः। यथा सुवर्णेन कुण्डलादयो निर्मीयन्ते, कुण्डलादिनामाकृतिसंहारे च सुवर्णमेवाऽवशिष्यते तथा परावाचा एव सर्ववाग्विकारा जायन्ते, विकाराऽपगमे च परा वागेव अवशिष्यते।

विकाराऽपगमे सत्यं सुवर्णं कुण्डले यथा।
विकाराऽपगमे सत्यां तथाहुः प्रकृतिं पराम्[1]॥

उच्चारितः शब्दः परातः पृथङ् न भवति। तां विना शब्दार्थयोः परस्परं कञ्चन सम्बन्धं संस्थापयितुं न शक्यते[2]। उत्पादविनाशरहिता भवति परावागियम्। शब्दब्रह्मपदेनाऽपि शब्दतत्त्वविदः परावाक्तत्त्वं विदन्ति[3]।

वाचां चतुष्ट्वविषये बहवः प्राचीना अर्वाचीनाश्च विद्वांसो वैमत्यमाविष्कुर्वते। तत्र शैवाऽऽगमाचार्यः श्रीसोमानन्दनाथः स्वकीये शिवदृष्टिनामके ग्रन्थे वाक्तत्त्वविवेचनाप्रसङ्गे व्याकरणमतमचर्चयत्। विदुषाऽनेन वाक्यपदीयकारिकाम् आधृत्येत्थं प्रतिपादितं यद् वैयाकरणाः वाक्तत्त्वत्रयं मन्वानाः पश्यन्तीं परमां वाक्तत्त्वभूतामिच्छन्तीति[4]। व्याकरणविषयकमिममेव पक्षमुररीकुर्वन् आचार्यक्षेमेन्द्रोऽपि व्याचष्ट[5] यद् वैयाकरणाः पश्यन्तीरूपं शब्दब्रह्ममयमात्मतत्त्वं स्वीकुर्वते। एवञ्चेमावाचार्यौ व्याकरणमते वाचां त्रैविध्यमेव व्याचक्षाते। एतद्रीत्या वैयाकरणाः परामस्वीकुर्वाणाः प्रतीयन्ते इति सोमानन्दनाथस्य क्षेमेन्द्रस्य चाचार्यस्य अभिप्रायः।

वाक्यपदीयं टीकमानः श्रीसूर्यनारायणशुक्लः पश्यन्तीमध्यमावैखरीति त्रिविधामेव वाचं प्रत्यपादयत्। तन्मते पश्यन्ती वागेव परा वागस्ति[6]। शुक्ल-

---

१. वा०प० ३।२।१५।

२. वाच्या सा सर्वशब्दानां शब्दाश्च न पृथक् ततः।
अपृथक्त्वे च सम्बन्धस्तयोर्नानात्मनोरिव॥ (वा०प०, ३।२।१६)

३. अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ (वा०प०, १।१)

४. अथाऽस्माकं ज्ञानशक्तिर्या सदाशिवरूपता।
वैयाकरणसाधूनां पश्यन्ती सा परा स्थितिः॥
इत्याहुस्ते परं ब्रह्म यदनादि तथाऽक्षयम्।
तदक्षरं ब्रह्मरूपं सा पश्यन्ती परा हि वाक्॥ (शि०दृ० २।१-२)

५. शब्दब्रह्ममयं पश्यन्तीरूपमात्मतत्त्वमिति वैयाकरणाः श्रीसदाशिवपदमध्यासिताः तद्भूमिकाः सर्वदर्शनस्थितयः। (प्रत्यभि० हृ० ८, पृ० ४३)

६. पश्यन्ती मध्यमा वैखरी चेति त्रिविधैव वाक्।·· पश्यन्त्येव सूक्ष्मत्वेन परा वाक्।
(वा०प० १।१४२, भा०प्र०)

महोदयस्येदृशविचारस्य आधारो भर्तृहरे:[1] पूर्वोक्ता वैखर्या: मध्यमायाश्च पश्यन्त्या[2] श्चेत्यादिकारिका विद्यते। भर्तृहरे: दार्शनिकविचारमनुसन्दधानो डॉ० गौरीनाथ: शास्त्री भर्तृहरिमते वाचस्त्रित्वमेव समाचष्ट। शास्त्रिमहोदयस्यायमस्ति आशयो यद् भर्तृहरिरनादिनिधनं शब्दतत्त्वं पश्यन्तीं व्याचष्टे[3]। तत: पश्चाज्जायते मध्यमावैखरीति भेद:। अत: तन्मते मूलशब्दतत्त्वं पश्यन्तीति स्वीकुरुते भर्तृहरि:।

एतेषां विदुषामेवंविधाया धारणाया: प्रधानमाधार: शैवागमाचार्याणां व्याकरणविषयक: तादृशो लेखो विद्यते। शैवागमे तादृशी लेखनप्रवृत्तिश्च वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतमिति[4] भर्तृहरे: कारिकात: प्राभवत्। अतोऽत्र तत्कारिकाविषये किञ्चित् स्पष्टीकरणमपेक्षते। तत: पराऽपि भर्तृहरिसम्मतेति प्रतिपादयिष्यतेऽस्माभि:।

पूर्वं 'वैखर्या मध्यमायाश्च०' इति कारिकाया: अवतरणं विचारणीयम्। तत: सौकर्यं भविष्यति उक्तधारणाया निराकरणे। उद्धृतकारिकाया: प्राग् भर्तृहरि: व्याकरणमिदं शास्त्रं साधुत्वज्ञानविषयमिति प्रतिपादयन्नित्थं प्राह—

साधुत्वज्ञानविषया सैषा व्याकरणस्मृति:।
अविच्छेदेन शिष्टानामिदं स्मृतिनिबन्धनम्[5] ॥

अस्यां कारिकायां भर्तृहरि: व्याकरणशास्त्रस्य महत्त्वमचर्चयत्। यथा मन्वादीनां स्मृतौ भक्ष्याऽभक्ष्यगम्यागम्यादिलौकिककृत्यानां भवति नियम:, तथाऽत्राऽपि व्याकरणस्मृतौ वाच्याऽवाच्यानां साधुत्वाऽसाधुत्वादीनां नियमो जायते। तेषु अन्यतम: प्रमाणभूत: स्मर्ता पाणिनिराचार्य:। अनेन वाचां साधु अनुशासनं क्रियते। का साऽनुशासनीया वाक्? यामियं व्याकरणस्मृति: नियमयति इति

---

१. हयादिभि: वाचस्त्रित्वस्यैवोक्तत्वात्। (वा०प०, १।१४२, भा०प्र०)

२. वा०प०, १।१४२।

३. The first manifestation of the Eternal Verbum which Bhartrihari calls Pashyanti is, in the direction of name, known to be Madhyama, and the subsequent manifestation is asserted to be Vaikhari.........That Bhartrihari believed Pashyanti to be the Eternal verbum can be proved on the strength of convincing data.

(The Philosophy of Word and meaning P. 67-69)

४. वा०प० १।१४२।

५. वा०प०, १।१४१

जिज्ञासायाम् उत्तरति भर्तृहरिरुक्तया कारिकया। अनेनेदं सुस्पष्टमायातं यदत्र भर्तृहरिरनुशासनीयमेव शब्दस्वरूपं परिचाययति। इदं व्याकरणं वैखरी-मध्यमा पश्यन्तीरूपाया त्रय्या वाचः सर्वोत्कृष्टमास्पदम् आश्रयः, तदधिगमोपायो वाऽस्ति। वैखरीत आरभ्य पश्यन्तीं यावत् तिसृषु श्रेर्णाषु वाङ् नूनं विभज्यते, या व्याकरणेनाऽनुशिष्यते। अव्यक्तविभाजना पश्यन्ती, ईषद्व्यक्ता मध्यमा, सुव्यक्ता नाम वैखरी भवति। सर्वथैव सौक्ष्म्याद् विभागराहित्याच्च परमा अव्यक्ता परा नाम वाणी व्याकरणाऽध्ययनविषया एव नास्ति। अनेक-तीर्थभेदाया एव वाचो व्याकरणमिदमास्पदम्। परा चास्ति अविभागा वाक् अतः परावाचि अनेकतीर्थभेदत्वाभावाद् व्याकरणविषयत्वं नास्ति। स्वप्रति-पाद्यविषयाऽनन्तर्गतत्वादेव भर्तृहरिरत्र कारिकायां परां वाचं विहाय त्रयीमाचष्टे। भर्तृहरेः परावाचोऽस्वीकरणे नहि कश्चित् सङ्केत उपलभ्यते, न च कश्चिद्धेतुरेव अवलोक्यतेऽस्माभिः।

वैयाकरणमतमनुवदन्तो भर्तृहरिमतमालोचयन्तश्च शैवागमाचार्यादयः कारिकागतमेतद् रहस्यं व्यस्मरन्निति किमत्र कर्तुं शक्यमस्माभिः। तदनु-कुर्वद्भिरन्यैरपि पूर्वचर्चितैः विद्वद्भिर्विस्मृतमेतदिति महदाश्चर्यम्। निरुक्ता-दन्यैरपि हेतुभिरस्माभिः विनिश्चेतुं शक्यते यद् व्याकरणागमपारदृश्वा भर्तृ-हरिः पश्यन्तीं मूलशब्दतत्त्वं नाऽनुमनुते, अपि तु पश्यन्त्या व्यतिरिक्तां काञ्चिदन्यां मूलभूतां वाचं स्वीकुरुते। तस्या नामकरणविषये नास्ति विवा-दाऽवसरः। स्वयं भर्तृहरिणा तत्कृते पराशब्दो[1] व्यवहृतः। प्रसिद्धत्वाच्चाऽस्माभिरपि तस्या वाचः कृते 'परा' इति नाम प्रयुक्तम्। इयमेव परा-वाग् ज्ञानतत्त्वेन संस्कृता, मनसा संयुक्ता, कायाग्निप्राणादिभिः प्रेरिता, स्थानेषु आहता च सती वैखरी सम्पद्यते।

परा वाग् व्याकरणस्य अनुशासनविषयो नास्ति। अनुशासनीयस्य शब्द-स्याऽन्तिमं स्वरूपं पश्यन्ती एव। तत्र पश्यन्त्यां वाचि शब्दार्थविभागः सन्ति-ष्ठते। पश्यन्त्यतिरिक्ता अर्थसंस्कारशून्या भवति परावाक्। विभागरहिता-यास्तस्याः परावाचः प्राप्तये व्याकरणमिदं मार्गो भवति। अस्याः परावाचः कृते भर्तृहरिराचार्यः 'पुण्यतमं ज्योति'रिति शब्दं प्रायुङ्क्त—

प्राप्तरूपविभागाया यो वाचः परमो रसः।
यत् तत् पुण्यतमं ज्योतिस्तस्य मार्गोऽयमाञ्जसः[2] ॥

---

१. विकारापगमे सत्यं सुवर्णं कुण्डले यथा।
विकाराऽपगमे सत्यां तदाहुः प्रकृतिं पराम्॥ (वा०प०, ३।२।१५)

२. वा०प०, १।१२।

अत्र कारिकायाम् 'परमो रसः' इति पदेन 'पुण्यतमं ज्योतिः' इतिपदेन च किं ग्राह्यमिति सुस्पष्टम्। पश्यन्ती त्वत्र ग्रहीतुं न शक्यते। भर्तृहरिणा एव तस्याः कृते अनेकतीर्थभेदायाः[1] इत्युक्तत्वात् प्राप्तरूपविभागत्वमायातम्। ज्ञातमर्थं विवक्षोः पुंसो ज्ञानात्मिका वाक् पश्यन्ती भवति। तत्र वाच्यवाचकयोः परस्परं साङ्कर्यं भवति। पश्यन्ती खलु प्राप्तशब्दसंस्कारा प्राप्तार्थसंस्कारा च भवति। अतः पश्यन्ती अपि प्राप्तरूपविभागा उच्यते। यद्यत्र 'प्राप्तरूपविभागायाः' इति पदे रूपपदेन शब्दस्य ध्वन्यात्मकं स्वरूपं गृह्येत तदाऽपि तस्याः वाण्याः पश्यन्ती 'रस' एव, न तु 'परमो रसो' भवति। तदतिरिक्ताया अर्थसंस्कारशून्याया एकस्या वाचो विद्यमानत्वात्। सा एव पश्यन्त्यतिरिक्ता मूलभूतावाक् पुण्यतमं ज्योतिरिति पदेन भर्तृहरिणा निर्दिष्टा।

व्याकरणमिदं साधनमस्ति पुण्यतमस्य ज्योतिषः प्राप्तये, न तु कदाचित् साध्यम्। व्याकरणविषयत्वात् पश्यन्ती अपि साध्यभूतायास्तस्याः परावाचः कृते साधनमेव। भर्तृहरिः वाक्तत्त्वमिदं शुद्धं ज्योतिरपि समाचष्ट, यद् ध्वन्यात्मकरूपेणाऽभिव्यज्यते। तदेव च वाचामुत्तमं रूपं भवति[2]। यथाऽन्धकारे वस्तुतमसोः साङ्कर्यं भवति, सति च प्रकाशे केवलं वस्तु प्रकाशते, तथाऽत्रापि अनेकतीर्थभेदायामपि वैखरी-मध्यमा-पश्यन्तीरूपायां वाचि शब्दार्थप्रत्ययप्राणवाय्वादीनां साङ्कर्यं भवति। व्याकरणमार्गेण प्रकाशेऽवाप्ते पराख्यं शुद्धं शब्दस्वरूपं ज्योतिः पदाऽभिधेयं प्रकाशते। आपिशलिः[3] पाणिनिश्च[4] आकाशवायुप्रभवं शब्दं व्याचष्ट। तत्राऽपि ध्वन्यात्मके शब्देऽनेकतत्त्वानां साङ्कर्यं एव तात्पर्यम्। यौगिकीः विभूतीः विवृण्वन् पतञ्जलिराचार्यः शब्दार्थप्रत्ययानां साङ्कर्यमचर्चयत्[5]। 'घटः' इति शब्दे श्रुते घटशब्दः ज्ञायते, कम्बुग्रीवादिमदर्थोऽपि प्रतीयते, घटविषयकज्ञानञ्चाऽपि जायते। एवं शब्दार्थप्रत्ययाः परस्परमितरेतराध्यासात् सङ्कीर्णा दृश्यन्ते। य एषां प्रविभागज्ञो भवति, स सर्वेषामपि प्राणिनां शब्देन शाब्दं प्रत्ययमवबोद्धुं समर्थो भवति[6]। अत्र पतञ्जलिनाऽर्थतत्त्वात् प्रविभक्तं यच्छब्दस्वरूपमभिमतं तत् परावाक्तत्त्वं वक्तुं शक्यते।

---

१. वा०प०, १।१४२।
२. प्रत्यस्तमितभेदाया यद् वाचो रूपमुत्तमम्।
तदस्मिन्नेव तमसि ज्योतिः शुद्धं विवर्तते॥ (वा०प० १।१८)
३. आपि०शि०सू०, १, श्लो० १।
४. पा०शि० सू०, १, श्लो० १।
५. शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्करः तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम्। (यो०द०, ३।१७)
६. य एषां प्रविभागज्ञः स सर्ववित्। (यो०द०, ३।१७, व्या०भा०)

प्रतिपाद्यविषयबहिर्भूतत्वाद् भर्तृहरिः वैखर्या मध्यमायाश्च पश्यन्त्याश्चेत्यादिकारिकायां परां वाचं नोल्लिलेख । यत्र चोल्लेखस्य आवश्यकताऽऽसीत् तत्र कृत एवोल्लेखः । एवञ्च वाचो चातुर्विध्यप्रतिपादनपरेषु उक्तेषु प्रमाणेषु सत्स्वपि तद्विषये केषाञ्चन सन्देहाऽवसरो नोचितः प्रतिभाति । वैखर्या मध्यमायाश्चेत्यादिकारिकां व्याचक्षाणः स्वोपज्ञकारो वाचां यां तुरीयावस्थामचर्चयत्[1] सा परा वागेव सम्भवति । किञ्चैतत्कारिकागतायां स्वोपज्ञवृत्तावेव 'चत्वारि वाक्परिमिता पदानीति'[2] प्राग् व्याख्याता ऋगपि समुद्धृता विद्यते । यदि वाचां त्रैविध्यमेवाभिमतं वैयाकरणानां तदा वाचां चातुर्विध्यप्रतिपादनपरयाऽनया ऋचा तस्य सामञ्जस्यं कथमापद्यते । स्वोपज्ञवृत्तौ नामग्राहमपि परा वाक् प्रतिपादिता, या प्रत्यस्तमितभेदाया वाचः प्रकृतिरुच्यते[3] । भर्तृहरिराचार्यः तामेव परां वाचं वाचां सत्यां प्रकृतिं समाचष्ट[4] ।

केषाञ्चन विदुषां कृते वैखरीतः प्राक्तन्या वाचो मध्यमानामकरण पराचः स्वीकृतौ संशयास्पदं जायते । तेषां मते पश्यन्ती-वैखर्योः मध्ये भावादेव वागेषा मध्यमेति कथ्यते । यदि पश्यन्तीतः प्राक् पराऽपि आदिभूता वागेकाऽस्ति तर्हि मध्यमेति नाम किमर्थकं स्यात् ? वाक्यपदीयं टीकमानेन सूर्यनारायणशुक्लेन हेतुरयमवलम्बितः पराया अस्वीकृतौ[5] । परमयं हेतुः सन्तोषावहो नास्ति । यतो हि वैखरीपश्यन्त्योः मध्ये सत्त्वादियं वाग् मध्यमेति नोच्यते अपि तु स्थूल-सूक्ष्मतरयोः वाचोर्मध्ये सूक्ष्मरूपेण विद्यमानत्वादियं वाङ् मध्यमा कथ्यते । स्थूला नाम वैखरी वागस्ति । सूक्ष्मतरा च पश्यन्ती वाग् विद्यते । किञ्च सुस्पष्टा वाग् वैखरी भवति, अस्पष्टा च पश्यन्ती वाक् । उभयोः सुस्पष्टाऽस्पष्टयोः, सुव्यक्ताऽव्यक्तयोर्वा मध्ये ईषत्स्पष्टरूपेण ईषद्व्यक्तरूपेण वा सत्त्वाद् वागियं मध्यमेति नामभाग् भवति । परावाक् तु व्यक्ताऽव्यक्ताभ्यां वाग्भ्यां सर्वथैव परा, ध्वन्यर्थसंस्कारशून्या अनादिनिधना, वाग्विकाराणां मूलकारणभूता स्वीक्रियते ।

---

१. सैषा त्रयी वाक् तुरीयेण मनुष्येषु प्रत्यवभासते । (वा०प०, १।१४२, स्वो०)

२. ऋक् सं०, १।१६४, ४५ ।

३. सोऽव्यवकीर्णा वागवस्थामधिगम्य वाग्विकाराणां प्रकृतिं प्रतिभाम् अनुपरैति ।......प्रत्यस्तमितसर्वविकारोल्लेखमात्रां परां प्रकृतिं प्रतिपद्यते । (वा०प०, १।१४, स्वोप०)

४. विकाराऽपगमे सत्यं सुवर्णं कुण्डले यथा ।
विकाराऽपगमे सत्यां तथाहुः प्रकृतिं पराम् ॥ (वा० प०, ३।२।१५)

५. वैखरी-पश्यन्त्योर्मध्ये भावान्मध्यमा वागिति ।
पश्यन्ती-मध्यमा-वैखरी चेति त्रिविधैव वाक् ॥ (वा०प०, १।१४२ भा०प्र०)

एवञ्चोक्तैः प्रमाणैरेतत्कथने नास्त्यस्माकं सङ्कोचाऽवलेशो यत् पाणिनीया आचार्या वाचां चातुर्विध्यं स्वीकुर्वत एव। महदाश्चर्यकरः खल्वयं वृत्तान्तो यद् भर्तृहरितः प्राक्तना यास्क-पाणिनि-कात्यायन-पतञ्जलि-प्रभृतय आचार्याः परादिविभागवर्णनं वाचां न क्वाऽपि चर्चयन्ति। मध्यमापदं तु यत्र कुत्रचिद् विलोक्यत[1] अपि, परं तेन वाचां परादिभेदः सुविज्ञातो न भवतीति सुस्पष्टम्। अत एतद् विनिश्चेतुं शक्यते यदस्य वाग्भेदस्य शब्दशास्त्रे भाषातत्त्वदृष्ट्या प्रथमः स्मर्ता भर्तृहरिरेव सम्भवेत्। तेनैव च एषां वाग्विभागानां स्वरूपोल्लेखः सुस्पष्टं कृतः। सम्भवतो यास्कादय आचार्याः एषां वाग्विभागानां विवेचनाम् आवश्यकीं नान्वभवन्, अनुशासनीये ध्वन्यात्मके शब्दे एव शास्त्रस्य चारितार्थ्यस्वीकारात्। भर्तृहरितः पश्चादेव प्रत्यभिज्ञादिशास्त्रप्रवर्तकैः शैवागमाचार्यैः सोमानन्दादिभिः वाचां परादिभेदाः सम्यग् विविक्ता आलोचिताश्च।

तदेवं परा, पश्यन्ती, मध्यमा, वैखरी चेति वाचां चत्वारो मौलिका भेदाः सुस्पष्टमायाताः। तत्र मध्यमान्ता वाक् स्फोटपदाऽभिधेया। वैखरी च नादपदेनाऽभिधीयते। मध्यमान्तो य स्फोटः स वैखरीतिनामभाजो नादस्य कारणं भवति। भाषातत्त्वविद्भिः इमावेव द्वौ शब्दौ स्फोटनादौ अर्थस्य वाचकौ स्मर्येते। व्याकरणशास्त्रस्याऽनुशासनप्रक्रिया लौकिकानां व्यवहारपरम्परा च नादाख्ये शब्दे स्वीक्रियते। स्फोटवशाद् नादाख्यः शब्दोऽर्थवान् भवति—

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः।
एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते[2]॥

१. ......माध्यमिकां वाचं मन्यन्ते। (निरु० ११।३।६)

२. वा० प० १।४७।

# शब्दकाण्डे तृतीयः समुद्देशः

## स्फोटः

शब्दस्वरूपनिरूपणाऽवसरेऽस्माभिः वाचकेषु शब्देषु तत्त्वद्वयं सङ्गिरन्त आचार्या इति चर्चितम् । तत्र १-स्फोटः, २- नादश्चेति । नादस्वरूपमतः प्राक् प्रतिपादितम् । अत्र स्फोटस्वरूपमुच्यते ।



आद्यः करणविन्यासः,
प्राणस्योर्ध्वसमीरणम् ।
स्थानानामभिघातश्च,
न विना शब्दभावनाम् ॥
वा०प० १।१२२।

पाणिनीये शब्दाऽनुशासने स्फोटो मूलभूतः सिद्धान्तः स्वीक्रियते। स्फोटस्याऽभिव्यक्तये अनुभूतये चैव शब्दानुशासने प्रक्रिया भेदः समाश्रीयते । वाग्विकाराणां प्रकृतिः स्फोटो विद्यते । शब्दस्वरूपनिर्धारणाप्रसङ्गे पतञ्जलिः तत्त्वतः स्फोटमेव शब्दं व्याचष्ट[1] वैखरीरूपः कृत्स्नोऽपि वाग्व्यापारोऽस्यैव स्फोटस्याऽभिव्यञ्जको[2] भवति । सर्वविधानां वाचिकव्यवहाराणां कृते शब्दभावना नितरामावश्यिका जायते । शब्दभावनावशादेव वक्ता आस्यप्रयत्ने प्रवर्तते । शब्दभावनां विना स्थानाऽभिघातादिव्यापाराः न सम्पद्यन्ते । इयमेव शब्दभावना श्रोत्राऽवगता प्रतिभा जायते, वक्तरि चेयमेव शब्दभावना स्फोटो भवति ।

करणस्था वाङ् नादाख्या विद्यते । अयं नाद एव वैखरीरूपो वाग्व्यापारो वर्तते । भगवतोपवर्षेण नादात्मकमिदं वैखरीरूपमेव शब्दतत्त्वमभ्युपगतम् ।

---

१. स्फोटः शब्दः, ध्वनिः शब्दगुणः । (अष्टा० १।१।६७, महाभा०)

२. ग्रहणग्राह्ययोः सिद्धा नियता योग्यता यथा ।
व्यङ्ग्यव्यञ्जकभावेन तथैव स्फोटनादयोः ॥ (वा०प० १।९७)

३. आद्यः करणविन्यासः प्राणस्योर्ध्वसमीरणम् ।
स्थानानामभिघातश्च न विना शब्दभावनाम् ॥ (वा०प०, १।१२२)

मीमांसासूत्रं भाषमाणेन शबरस्वामिना भगवदुपवर्षस्य मतं प्रत्यपादि[1]। अनेन नादेन स्फोटस्याऽभिव्यक्तिः जायते। अर्थतत्त्वस्य वाचकोऽयं स्फोट एवाऽस्ति। लोके वाचकत्वेन नादः संस्मियते, तद् युक्तं वक्तुं न शक्यते। ध्वनिसङ्घातो भवति नादः। तस्य वाचकत्वस्वीकारे शब्दसत्तां कथञ्चिदपि संस्थापयितुं न शक्यते। यतो वर्णानां युगपत् प्रादुर्भावोऽसम्भवी। न वा पृथक्-पृथक् संस्थितानां वर्णानां तत्तदर्थानाञ्च सङ्ग्रह सम्भवति, नैव च वर्णोच्चारणक्रमेणाऽर्थक्रम एव ज्ञातुं शक्यते। वर्णानामुच्चारणं क्रमपूर्वकं भवति। उच्चारणकाले आगामिनां वर्णानां स्थितिरसम्भविनी। श्रुता वर्णाः श्रवणानन्तरमश्रुता जायन्ते। शब्दोऽक्रमः स्वीकृतः, नादश्च खलु क्रमजन्मा[2] दृष्टः। अतो नादस्य वाचकत्वमयुक्तमेव।

वक्तुः शब्दभावनाविशेषः (श्रोतृस्थः सन्निति शेषः।) स्फोटो व्याख्यातोऽस्माभिः। करणस्थवाचां जनकोऽयं बुद्धिस्थः स्फोट एव। स्वाऽभिप्रायं प्रकटयितुं प्रयुक्तासु वाक्षु वैयाकरणा वाक्यानि, वाक्येषु पदानि, पदेषु च वर्णान् स्फोटस्य अभिव्यक्तय एव प्रकल्पयन्ति। स्फोटनादयोः परस्परं व्यङ्ग्यव्यञ्जकभावाख्यः प्रकाश्यप्रकाशकाख्यो वा सम्बन्धो व्याख्यातुं[3] शक्यते। बाह्यावरणाऽपगमे यथा रत्नतत्त्वं विचकास्ति तथा नादश्रवणानन्तरं स्फोटः प्रतीयते। अस्य खलु स्फोटस्याऽभिव्यक्तिः बहुभिः प्रकारैः सम्भवति। मूकाः चारकर्मदक्षादयश्च बहुभिरिङ्गितादिभिरपि साधनैः स्फोटं प्रकाशयन्ति, अवगच्छन्ति च। परं तैः साधनैः केचिदेव गृहीतसङ्केता अर्थमधिगच्छन्ति। सर्वसाधारणम् अर्थप्रत्ययं नाद एव जनयति। यथा कश्चिच्छ्लोकः सकृत् पठ्यमानो नावधार्यते। अभ्यासेन तु स्फुटाऽवभासो जायते। तथा चरमेण ध्वनिना स्फोटतत्त्वं रत्नवद् विचकास्ति[4]। अतो नादं विना स्फोटस्य सुष्ठु अभिव्यक्तिः न सम्भवति। नाद एव स्फोटाख्यं शब्दं लौकिकं विदधाति। स्फोटे कश्चिदपि कालभेदो न सम्भवति। अत एवाऽभिन्नकालः स्फोटः कथ्यते। ध्वनावेव कालकृतो भेदो दृश्यते। ध्वनिकालाऽनुपाती च स्फोटो भवति[5]। यथा अक्रियस्य वस्तुनो जले

१. अथ गौरित्यत्र कः शब्दः ? गकारौकारविसर्जनीयाः इति भगवानुपवर्षः।
(मी०द०, १।१।५। शा०भा०)

२. नादस्य क्रमजन्मत्वान्न पूर्वो न परश्च सः।
अक्रमः क्रमरूपेण भेदवानिव जायते॥ (वा०प०, १।४८)

३. ग्रहणग्राह्ययोः सिद्धा नियता योग्यता यथा।
व्यङ्ग्यव्यञ्जकभावेन तथैव स्फोटनादयोः॥ ······(वा०प० १।९७)

४. रत्नतत्त्ववत् स्फोटतत्त्वम्। (वा०प०, ३।१।६ हेला०)

५. स्फोटस्याऽभिन्नकालस्य ध्वनिकालाऽनुपातिनः।···(वा०प०, १।७५)

स्थितं प्रतिबिम्बं तोयक्रियावशात् सक्रियं दृश्यते तथा स्फोटोऽपि बुद्धिस्थः तदभिव्यञ्जकस्य नादस्य कालभेदात् कालभेदभाग्[1] भवति ।

इह हि शब्दव्यवहारे कैश्चिच्छ्रुतैरपि शब्दैरर्थावगतिर्न दृश्यते, गृहीतशक्तिकैश्च श्रुतैः शब्दैः शाब्दबोधो भवति । अत एतत् स्पष्टं भवति यत् स्वरूपतः कश्चिदपि शब्दोऽर्थप्रत्यायने शक्तो न भवति[2] । एवञ्च वाचकत्वरूपायाः शक्तेराश्रयः कः ? इति स्वाभाविकी जिज्ञासा समुदेति । उच्चरितप्रध्वंसिशीलो ध्वनिग्रामः शक्त्याश्रयत्वेन निर्वक्तुं न शक्यते । अतोऽर्थप्रत्यायने शक्तत्वात् स्फोटः शक्त्याश्रय इति स्वीक्रियते ।

उच्चारणात् प्राक्तनं शब्दतत्त्वं हि स्फोट इति उपर्युक्तेन ग्रन्थेन सुविज्ञातं भवति । प्रायो हि लौकिकाः शब्दस्वरूपसम्प्रत्ययाधीनम् अर्थसम्प्रत्यायनं मन्वते । वस्तुतः शब्दस्वरूपसम्प्रत्ययेन(वैखर्यात्मकेन)स्फोटस्याऽवगतिर्भवति । वक्तुः शब्दभावनात्मकेनाऽनेन स्फोटेन श्रोतुः प्रतिभा प्रजायते । सर्वविधानां शब्दार्थसम्प्रत्ययानां मूलमियं प्रतिभा एव भवति । श्रुते शब्दे शब्दार्थप्रत्ययानां साङ्कर्यं भवति । गौरिति शब्दश्रवणानन्तरं गकारौकारविसर्जनीयानुपूर्वीकः शब्दो ज्ञायते, सास्नादिमद्रूपोऽर्थो ज्ञायते, श्रोत्रा गोशब्देन पूर्वगृहीतः सम्प्रत्ययश्चाऽपि ज्ञायते । सर्वस्याऽप्येतस्य शब्दार्थसम्प्रत्ययरूपस्य साङ्कर्यस्य आधारः प्रतिभा एव । शब्दार्थसम्प्रत्ययानां प्रविभागसंयमाभ्यां सर्वभूतरुतज्ञानं सम्भवतीति योगदर्शने पतञ्जलिः समाचष्ट[3] । इयं प्रतिभा एव अखण्डो वाक्यार्थः । पदार्थैरुपपादितोऽयं वाक्यार्थः श्रोतृभिः गृह्यते[4] ।

योगरूढोऽयं स्फोट-शब्दः । स्फुटत्यर्थोऽस्मादिति स्फोटः इत्यभियुक्तैः स्फोटशब्दस्य व्युत्पादनात्[5] । कस्य खलु धीमत उपज्ञा स्फोटसिद्धान्तोऽयमिति

---

१. प्रतिबिम्बं यथाऽन्यत्र स्थितं तोयक्रियावशात् ।
तत्प्रवृत्तिमिवाऽन्वेति स धर्मः स्फोटनादयोः ॥ (वा०प०, १।४९)

२. विषयत्वमनापन्नैः शब्दैर्नार्थः प्रकाश्यते ।
न सत्तयैव तेऽर्थानामगृहीता प्रकाशकाः ॥ (वा०प० १।५६)

३. शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्करः तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम् ।
(योग द०, ३।१७)

४. विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते ।
वाक्यार्थं इति तामाहुः पदार्थैरुपपादिताम् ॥ (वा०प० २।१४५)

५. तत्र स्फुटति अर्थोऽस्मादिति स्फोटः । वाचक इति यावत् ।
(स्फो० वा०, पृ० ५) द्र० स्फो० चं० कृष्णभट्टस्य ।
स्फुट विकसने (पा०धा०पा०, ६।९३) इत्यस्माद्धातोः अकर्तरि च कारके सञ्ज्ञायाम् ।
(अष्टा०, ३।३।१९) इति घञ् । (ले०)

निर्विवादं निर्देष्टुं न शक्यते। पदमञ्जर्यां हरदत्त:[1] स्फोटवादे नागेशश्च[2] स्फोटमिमं स्फोटायनस्यर्षे: मतं निरदिशताम्। काशिकावृत्तौ वामनो[3] भाषावृत्तौ पुरुषोत्तमदेव[4]श्चाऽपि स्फोटायननामानं कञ्चनाचार्यमचर्चयताम्। सम्भवतो विषयदृष्ट्या ऋषे: स्फोटायन इति नामकरणं विद्यते। हरदत्तकृतया स्फोटायनपदस्य व्युत्पत्त्या एतदेवाऽनुमातुं शक्यते। 'स्फोटायनपदं हरदत्तेनेत्थं व्युत्पादितम् –

"स्फोटोऽयनं पारायणं यस्य स स्फोटायन:।
स्फोटप्रतिपादनपरो वैयाकरणाचार्य:[5]॥

शाब्दिकै: स्फोटोऽयं मूर्द्धाऽभिषिक्त: सिद्धान्त: स्वीक्रियते। शब्दो हि अर्थाऽवसायप्रसवनिमित्तो भवति। वागिन्द्रियजन्यप्रत्ययविषयस्य नियतक्रमवर्णात्मन: शब्दस्य स्फोटमन्तरा शब्दार्थप्रतिपत्तिहेतुत्वं न सम्भवति। शब्दार्थप्रतिपत्तिविषये वैयाकरणसिद्धान्तं स्थापयन् भट्टोजिदीक्षित: स्फोटस्य वाचकत्वं प्रत्यपादयत्[6]। एको वाक्यात्मक: स्फोट: शब्दार्थावसायको भवति। स्फोटाभिव्यञ्जकध्वनीनां नानात्वेऽपि स्फोट एक एव भवति। यथा मणिकृपाणादौ एकमेव वस्तुरूपं ह्रस्वदीर्घकृशादिरूपेण संलक्ष्यते, तथा एक एव स्फोटोऽभिव्यञ्जकानेकध्वनिरूपेण प्रतीयते। अनेकै: ध्वनिभिरेक: स्फोट: प्रकाश्यत इत्याशय.।

यथा मणिकृपाणादौ रूपमेकमनेकधा।
तथैव ध्वनिषु स्फोट एक एव विभिद्यते[7]॥

यथा कुक्कुटादिनाम् अण्डमपरिलाक्षिताऽवयवं भवति, तथाऽयं स्फोटरूप आन्तर: शब्दोऽपि अव्यक्तध्वनिक्रमो विद्यते। वाचामक्रमत्वं सक्रमत्वञ्च स्वाभाविकं भवति। या वागुच्चारणात् प्रागक्रमा भवति सैव उच्चारणकाले सक्रमा

---

१. स्फोटोऽयनं पारायणं यस्य स स्फोटायन:, स्फोटप्रतिपादनपरो वैयाकरणाचार्य:। (अष्टा० ६।१।१२३, का०वृ०, पदमं०)

२. वैयाकरणनागेश: स्फोटायन-ऋषेर्मतम्।
परिष्कृत्योक्तवांस्तेन प्रीयतां जगदीश्वर:॥ (स्फो०वा०, पृ० १०२)

३. स्फोटायनग्रहणं पूजार्थम्। (अष्टा० ६।१।१२३, का०वृ०)

४. स्फोटायनग्रहणं पूजार्थम्। (अष्टा० ६।१।१२३, भा०वृ०)

५. अष्टा० ६।१।१२३, का०वृ० पदमं०।

६. वस्तुतस्तु वाचकता स्फोटैकनिष्ठा। (अष्टा० महाभा० पस्प०, श०कौ०)

७. श्लोकोऽयं नागेशेन स्फोटवादे स्फोटतत्त्वनिर्णयग्रन्थनाम्नोद्धृत:। (लि०)

भवति । क्रमश एव वागभिव्यञ्जकवर्णानाम् उच्चारणसम्भवात् । वक्तुरुच्चारणात् पूर्वं तद् बुद्धौ शब्दोऽक्रमो भवति । उच्चारणकाले स सक्रमो जायते । उच्चारिते च पुनरक्रमः सञ्जायते । श्रोतुः श्रवणकाले वक्त्रोच्चरितः शब्दः सक्रमो भवति । श्रवणानन्तरञ्च शब्दः पुनरक्रमो जायते । श्रुते शब्दे क्रमव्यवस्था न सम्भवति । उच्चारणे क्रियारूपा वृत्तिरेव भागशो ध्वनिक्रमं जनयति[1] । यथा चित्रकारस्य बुद्धिविषया मूर्तिरक्रमा भवति । पटादौ चित्रितायाञ्च सक्रमा जायते, विनष्टायाञ्च बुद्धौ पुनरक्रमा एव सन्तिष्ठते । तथाऽस्मिन् स्फोटेऽपि अक्रमत्वसक्रमत्वव्यवस्था[2] सञ्जायते । स्फोटरूपेयमक्रमा वागेव ध्वनिरूपायाः सक्रमाया वाचो नियामिका भवति ।

शब्दस्वरूपविवेचना प्रसङ्गेऽस्माभिः वाचश्चत्वारि पर्वाणि प्रतिपादितानि, १-परा, २-पश्यन्ति, ३-मध्यमा, ४-वैखरी चेति । तत्र सर्ववाग्विकाराणामुपादानभूता सूक्ष्मतमाऽक्रमा वाक् त्रीणि पर्वाणि व्यतीत्य तुरीये पर्वणि स्थूलरूपमापद्यमाना सक्रमा श्रोत्रोपलभ्या भवति । यो मनीषी शब्दस्य तात्त्विकमिदं स्वरूपं विजानाति तदनुसारेण च प्रयुङ्क्ते स खलु शब्दपारदृश्वा भवति । तस्य शब्दार्थ-प्रत्ययेषु काचिद् विप्रतिपत्तिर्न जायते । एतादृशं ज्ञातं प्रयुक्तञ्च शब्दं शब्दशास्त्रस्य प्रमाणभूतो व्याख्याता पतञ्जलिः कामदुहं[3] व्याचष्ट ।

**स्फोटभेदाः —**

उपर्यस्माभिः स्फोटस्य यत्स्वरूपमुपवर्णितं तेनैतत् सुस्पष्टमवगम्यते यदेकस्याऽभिप्रायस्य वाचक एकोऽखण्ड एव स्फोटो भवति, न तत्र भेदकल्पनाऽवसरः समुदेति । पुनरपि विचारसौकर्यार्थं शब्दशास्त्रीयप्रक्रियानिर्वाहार्थञ्च स्फोटेऽवास्तविकं भेदकल्पनं क्रियते । व्याकरणं हि शब्दाऽनुशासनमिति[4] प्रामाणिकैः प्रतिपाद्यते । शब्देषु प्रकृतिप्रत्ययानां प्रविभागकल्पनेन शब्दानामनुशासनं खलु शब्दशास्त्रस्य प्रधानकार्यं विद्यते[5] । अस्य मूर्द्धाभिषिक्तस्य प्रयोजनस्य

---

१. आण्डभावमिवापन्नो यः क्रतुः शब्दसञ्ज्ञकः ।
वृत्तिस्तस्य क्रियारूपा भागशो लभते क्रमम् ॥ (वा०प०, १।५१)

२. यथैकबुद्धिविषया मूर्त्तिराक्रियते पटे ।
मूर्त्यन्तरस्य त्रितयमेवं शब्देऽपि दृश्यते ॥ (वा०प०, १।५२)

३. एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति ।
(अष्टा० ६।१।८४, महाभा०)

४. अथ शब्दाऽनुशासनम् । (अष्टा० महाभा०, पस्प०)

५. भाष्यकारो विवरणकारत्वाद् व्याकरणस्य साक्षात् प्रयोजनमाह—अथ शब्दानुशासनमिति ।
(अष्टा०महाभा०, पस्प०, प्र०)

सिद्धय एवाऽयं स्फोटविभाग: स्वीक्रियते । अत एव अष्टविधान् स्फोटान् स्वीकृत्याऽपि भट्टोजिदीक्षित: 'अखण्डवाक्यजातिस्फोट एव सिद्धान्त:' इति प्रत्यपादयत्[1] ।

भट्टोजिदीक्षितेन अष्टौ स्फोटा एवं परिगणिता:—

१-वर्णव्यक्तिस्फोट:
२-वर्णजातिस्फोट:
३-पदव्यक्तिस्फोट:
४-अखण्डपदस्फोट:
५-अखण्डपदजातिस्फोट:
६-वाक्यस्फोट: ।
७-अखण्डवाक्यस्फोट: ।
८-अखण्डवाक्यजातिस्फोट:[2] ।

स्फोटस्येमानेव भेदान् स्फोटवादे नागेश: समगृह्णात्[3] । कौण्डभट्टादयश्चापि तानेवाऽन्वदन्[4] । अखण्ड एक एवाऽर्थाऽवसायक: स्फोट: करणाऽभिघातेनाऽभिव्यक्तो वर्णरूपेण पदरूपेण वाक्यरूपेण च प्रविभज्यते । स्फोटमभिव्यङ्क्तुं करणाऽभिघातश्चाऽयं स्वस्ववासनानुसारेणैव भवति । सास्नादिमदर्थस्याऽभिव्यक्तये कश्चिद् गोशब्दमुच्चारयति, अन्यो गावीशब्दमपरश्च गोणीपदम् । एके 'काउ' (Cow) प्रभृतीनि पदान्यपि प्रयुञ्जते । वर्णपदवाक्यानि स्वरूपतोऽभिन्नकालान्येव भवन्ति । तेषाम् उच्चारणे नादभेदेनैव द्रुतमध्यमविलम्बितादिकालभेद: प्रकल्प्यते[5] । एकस्य अभिधेयार्थस्य कृते विभिन्नासु भाषासु यद्यपि प्रत्येकं विभिन्ना नादविभेदा: प्रयुज्यन्ते तथापि विभिन्नै तै: नादविभेदैरभिव्यक्त: स्फोट: एक एव भवति । परिगणित: स्फोटभेदोऽयं ५४तमे पृष्ठे निर्दिष्टेन चित्रेण सुष्ठु परिज्ञातुं शक्यते ।

---

१. यद्यपीहाऽष्टौ पक्षा उक्तास्तथाऽपि वाक्यस्फोटे तात्पर्यं ग्रन्थकृताम् । तत्राऽपि जातिस्फोट इत्यवधेयम् । (अष्टा०, महाभा०, पस्प, श०को०)

२. तत्र चाऽष्टौ पक्षा: । वर्णस्फोट: १, पदस्फोट: २, वाक्यस्फोट: ३, अखण्डपदस्फोट: ४, तादृग्वाक्यस्फोट: ५, इत्थं पञ्चव्यक्तिस्फोटा: । वर्णपदवाक्यभेदेन त्रिविधो जातिस्फोट इति । (अष्टा० महाभा० पस्प०, शब्दको०)

३. ननु क: स्फोट इति चेत् ? शृणु, १-वर्णस्फोट:, २-पदस्फोट:, ३-वाक्यस्फोट:, ४-५-अखण्डपदवाक्यस्फोट:, ६-७-८-वर्णपदवाक्यभेदेन त्रयो जातिस्फोटा इति वैयाकरणसिद्धान्त: । (स्फो०वा०, पृ०१)

४. द्र० वैयाकरणभूषणसार: ।

५. तस्मादभिन्नकालेषु वर्णवाक्यपदादिषु ।
वृत्तिकाल: स्वकालश्च नादभेदाद्विभज्यते ॥ (वा०प०, १।१०१)

गौः
ग्
औ
:

निर्दिष्टचित्रे गौरिति नादस्थितः पदस्फोटः प्रदर्शितः। तत्र गकारौकारविसर्जनीयरूपं ध्वनित्रयं प्रतीयते। तेन ध्वनित्रयेण गलकम्बलादिमदभिधेयरूपोऽर्थो बोध्यते। अयमेवाऽभिधेयरूपोऽर्थो वक्तरि विद्यमानः स्फोटो भवति। अभिधेयरूपेऽस्मिन् स्फोटे गकारौकारविसर्जनीया ध्वनयो न सन्तिष्ठन्ते। तत्रैते आण्डभावं भजन्ते। तस्य स्फोटस्याऽभिव्यक्तये यस्य वक्तुः येन शब्देन सह शक्तिग्रहो भवति, स तद्गतान् वर्णानुच्चारयति। यदा विवक्षया मनोवेगेन प्रहितः प्राणवायुः कण्ठताल्वादिस्थानेषु आहन्ति, तदा गकारौकारविसर्जनीया ध्वनय उपजायन्ते।

येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः।—महाभा०

निर्दिष्टेऽस्मिन् चित्रे वाक्यस्फोटस्वरूपं प्रदर्शितम्। वक्तृबुद्धौ अनवयवो वाक्यरूपः स्फोटः सन्तिष्ठते। तमभिव्यङ्क्तुकामश्च स कञ्चन नादं प्रयुङ्क्ते। वाक्तत्त्वविदस्तत्र वाक्यात्मके नादे पदानि प्रकल्पयन्ति, पदेषु च वर्णान्। वक्तृबुद्धौ अभिधेयरूपोऽर्थः समुद्र इवाऽनवयवः अपरिमितश्च भवति। वाक्तत्त्व-

ञ्चाऽनादिनिधनं विद्यते। तेन यत्किञ्चिदपि यदाकदचिदपि अभिधातुं शक्यते।

उपर्युक्तया स्फोटविभाजनया स्फोटस्य मुख्यतः त्रैविध्यं प्रतीयते। तत्र—

१-वर्णस्फोटः, २-पदस्फोटः, ३-वाक्यस्फोटश्च।

यथाप्रसङ्गं स्फोटत्रयमत्र निरूप्यते।

**१-वर्णस्फोटः—**

पतञ्जलिराचार्यो वर्णानां सार्थक्यं नैरर्थक्यञ्च स्वाभाविकमिति व्याचष्ट[1]। लोके समानमीहमानेषु अधीयानेषु च केचन विद्यामधिगता दृश्यन्ते, केचन चाऽनधिगताः, तथा वर्णेष्वपि केचनाऽर्थप्रत्यायका दृश्यन्ते केचन चाऽनर्थकाः[2]। ये वर्णाः लोकेऽर्थबोधकत्वेन स्वीकृताः ते सार्थकाः, ये चाऽर्थबोधकत्वेन न दृष्टाः तेऽनर्थका वर्णा इत्येव वक्तुं शक्यते। न तत्र कश्चन वाचनिको नियम आविष्क्रियते, यमाश्रित्य वर्णाः सार्थका निरर्थका वा भवन्ति। एवञ्च स्वभावत एव वर्णाः सार्थका निरर्थका वा भवन्तीति पतञ्जलेरभिप्रायः। धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामपि अर्थवत्त्वदर्शनात् कात्यायनः[3] पतञ्जलिश्च[4] वर्णानामर्थवत्त्वं प्रत्यापादयताम्। स्फोटमन्तरा हि नादात्मके शब्दे अर्थाऽभिधायकत्वं न सम्भवतीति प्रागस्माभिः प्रतिपादितम्। अतः कात्यायनस्य पतञ्जलेश्च उक्तस्थले वर्णस्फोटोऽभिप्रेत इत्यनुमातुं शक्यते। 'एति' इत्यादावाख्याते एकवर्णा अपि धातवोऽर्थवन्तो दृश्यन्ते। 'आभ्या'मित्यादि सुबन्ते च एकवर्णं प्रातिपदिकमर्थवद् दृष्टम्। औपगवः, कापटवः इत्यादितद्धितादौ एकवर्णाः प्रत्ययाः, अ अपेहि इत्यादौ एकवर्णा निपाताश्चाऽपि अर्थवन्तो दृश्यन्ते[5]। अतो वर्णैरपि अर्थप्रत्ययो भवतीति विज्ञायते। वर्णानामर्थवत्त्वप्रसाधनाय कात्यायनेन हेतुत्रयं प्रदर्शितम्—

१-वर्णव्यत्यये चाऽर्थान्तरगमनात्[6]।

२-वर्णाऽनुपलब्धौ चाऽनर्थगतेः[7]।

---

१. उभयमिदं वर्णेषूक्तम्—'अर्थवन्तोऽनर्थका' इति किमत्र न्याय्यम्? उभयमित्याह। कुतः? स्वभावतः। (अष्टा० प्रत्या० सू० ५, महाभा०)

२. समानमीहमानानां चाऽधीयानानाञ्च केचिदर्थैर्युज्यन्ते अपरे न। न चेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुम्। कश्चिद्वाऽनर्थक इति कृत्वा सर्वैरनर्थकैः। (अष्टा०प्रत्या० सू० ५, महाभा०)

३. ......मन्यामहे—'अर्थवन्तो वर्णा' इति (अष्टा० प्रत्या०सू०५, महाभा०)

४. अर्थवन्तो वर्णाः धातुप्रतिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात्। (अष्टा० प्रत्या०सू० ५ वा० ९)

५. द्र०—अष्टा० प्रत्या० सू० ५, महाभा०।

६. अष्टा०, प्रत्या० सू०, वा० १०।

७. अष्टा०, प्रत्या० सू० ५, वा० ११।

३-सङ्घातार्थवत्त्वाच्च[1]।

वर्णस्फोटसाधका इमे हेतवः क्रमशोऽत्र विविच्यन्ते।

**वर्णव्यत्यये चाऽर्थान्तरगमनात्—**

वर्णव्यत्यये सति अर्थस्य वैयत्ययदर्शनाद् वर्णस्याऽर्थवत्त्वं प्रतीयते। सति यद्वर्णे योऽर्थोऽनुगम्यते, असति तद्वर्णे सोऽर्थो हीयते। अतः सोऽर्थः तस्यैव वर्णस्येति प्रतीयते। कूपशब्देन कूपार्थो गम्यते। ककारेऽपगते च कूपार्थो हीयते। यूपशब्देन यूपार्थो गम्यते। यकारेऽपगते च यूपार्थो हीयते। एवं सूपशब्देन सूपार्थोऽवगम्यते, सकारेऽपगते सोऽर्थो हीयते। अतः कूपशब्देनाऽवगतः कूपार्थः ककारस्य, यूपशब्देन अवगतो यूपार्थो यकारस्य, सूपशब्देन चाऽवगतः सूपार्थः सकारस्येति पतञ्जलिः समाचष्ट[2]। अनेन हेतुना कात्यायनो वर्णस्फोटं व्यनक्ति।

**वर्णाऽनुपलब्धौ चाऽनर्थगतेः—**

वर्णाऽनुपलब्धौ अभिप्रेतार्थो नोपलभ्यते। उपलब्धे च तद्वर्णे अभिप्रेतोऽर्थो गम्यते। तेन कात्यायनो वर्णानां वाचकत्वं प्रत्यपादयत्। 'वृक्ष' इति वकारसहितेन कश्चित् फलपलाशिरूपोऽर्थोऽवबुध्यते। वकाराऽनुपलब्धौ च 'ऋक्षः' इति वकाररहितेन शब्देन सोऽर्थो नाऽधिगम्यते। कश्चिदन्य एवाऽर्थः प्रतीयते। एवमेव काण्डीरशब्दे ककाराऽपगते आण्डीर शब्देन अभिप्रेतार्थः काण्डीरार्थो नाऽवगम्यते। एवं हि वर्णाऽनुपलब्धौ अनभिप्रेताऽर्थगतेरनुमीयते वर्णानां शब्दार्थवाचकत्वमिति।

**ग-सङ्घाताऽर्थवत्त्वाच्च**

अवयवगुणा अवयविनि अनुवर्तमाना दृश्यन्ते। अवयविगुणादर्शनाच्च अवयवगुणा अनुमीयन्ते। यथा एकः कश्चिच् चक्षुष्मान् दर्शने समर्थः, तेषां समुदायोऽपि दर्शने समर्थ एव भवति। तथा यस्य सङ्घातस्य वर्णाः सार्थका भवन्ति, स सङ्घातोऽपि अर्थवान् दृश्यते। सङ्घातस्य अर्थवत्त्वदर्शनात् तदवयववर्णानामप्यर्थवत्त्वं विज्ञातं भवति[3]। अनर्थकानां समुदायः सार्थको न भवति। खारीशतपरिमिताभिरपि सिकताभिः तैलं नोपलभ्यते, तदवयवेषु एकस्या अपि

१. अष्टा, प्रत्या० सू० ५, वा० १२।

२. तेन मन्यामहे—यः कूपे कूपार्थः स ककारस्य, यः सूपे सूपार्थः स सकारस्य, यो यूपे यूपार्थः स यकारस्येति। (अष्टा०प्रत्या० सू० ५, महाभा०)

३. सङ्घाता अर्थवन्तोऽवयवा अपि तेषामर्थवन्तः। (अष्टा०प्रत्या० सू०, महाभा०)

सिकतायास्तैलदानेऽसामर्थ्यदर्शनात्[1]।

'देवदत्तः' इत्यादिषु प्रातिपदिकोत्तरविद्यमानेन सकारादिप्रत्ययेन वर्णात्मकेन एकत्वाद्यर्थाऽवगतिः दृश्यते। एवमन्यत्राऽपि सुप्तिङ्कृत्तद्धितादिप्रत्ययेषु वाचकत्वम् अवगम्यते। येन यादृशी प्रकृतिप्रत्ययव्यवस्था प्रकल्पिता तस्य तादृगेव अर्थावगमो भवति। औपगव इत्यादिषु विद्यमानेन अकारादिना अपत्याद्यर्थस्य प्रतीतिः तादृशसम्प्रत्ययवतां भवति। तत्तदकारादिव्यक्तीनां पृथक् पृथक् शक्तत्वकल्पने गौरवादव्यवस्थितत्वाच्च वर्णजातिस्फोटः कल्प्यते। कात्यायन[2] इदमेव तथ्यं प्रादर्शयत्। व्यक्तीनामानन्त्येऽपि आकृतेरुपदेशात् कार्ये काचिदव्यवस्थितिर्न भवति। अवर्णाकृतावुपदिष्टायां सर्वमप्यवर्णकुलं गृहीतं भवति[3]। एवमेव समेष्वपि वर्णेषु बोद्धव्यम्। भगवानुपवर्षो वर्णानेव वाचकान् स्वीकृत्य[4] वर्णस्फोटं निर्दिदेश। जैनसम्प्रदायाचार्यैरपि श्रवणग्राह्या एव शब्दा वाचकत्वेन[5] व्याख्याता। वर्णस्फोटं विवृण्वन् भट्टोजिदीक्षितः प्रयोगान्तर्गतान्[6] सुप्तिङादीन् वाचकानवोचत्।

एवञ्चैतैः हेतुभिः वर्णानां वाचकत्वस्य सिद्धत्वाद् वर्णस्फोटः स्वीकृतः।

**पदस्फोटः—**

व्यवहारे केवलेन वर्णेन अर्थाऽवगतिर्न दृश्यते। पदरूपेण संहता एव वर्णा अर्थं प्रतिपादयन्ति। न हि लोके ककारमात्रेण कूपार्थोऽवगतो भवति, न वा सकारमात्रेण सूपार्थः, यकारमात्रेण वा यूपार्थः प्रतीयते। वर्णसमुदितः कूपशब्द एव कूपार्थं गमयति, सूपशब्दः सूपार्थम्, यूपशब्दश्च यूपार्थम्। एवञ्च पदादेवाऽर्थस्य स्फोटनाद् विद्वांसः पदस्फोटं व्याचक्षते। वर्णसङ्घातस्यैकार्थवाचकत्वं प्रतिपादयन् कात्यायनो वर्णात् सुबुत्पत्तिं निषिषेध। सरूपाणामेकशेष एक-

१. एका च सिकता तैलदानेऽसमर्था तत्समुदायश्च खारीशतमपि असमर्थम्। (अष्टा०प्रत्या० सू० ५, महाभा०)

२. आकृतिग्रहणात् सिद्धम्। (अष्टा० प्रत्या० सू० ५, वा० १३)

३. अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति। (अष्टा०प्रत्या० सू० १, महाभा०)

४. अथ गौरित्यत्र कः शब्दः ? गकारौकारविसर्जनीया इति भगवानुपवर्षः। (मीमां० द० १।१।५, शा० भा०)

५. न स्फोटात्माऽपि तस्यैव स्वभावस्याप्रतीतितः।
शब्दात्मानः सदा नाना स्वभावस्याऽवभासनात्॥ (तत्त्वार्थसू०, ५।२४, तत्त्वा० श्लो० वा० ३)

६. साधुशब्देऽन्तर्गता हि बोधका न तु तत्स्मृताः। (व०भू०का०, स्फो० नि०, १)

विभक्तौ[1] इति सूत्रे कात्यायनोऽर्थाभिधानाय पदस्य[2] प्रयोगं कण्ठतः स्वीचकार । अर्थप्रकाशनं नाम वाग्व्यापारस्य मुख्यं प्रयोजनमित्यहमनेकत्र प्रत्यपादयम् । 'समर्थानां प्रथमाद्वा[3]' इति सूत्रं भाषमाणेन पतञ्जलिना तथ्यमिदं समुद्घाटितम् । अर्थाऽभिधाने यत् समर्थं भवति तदेवाऽत्र पाणिनीये शब्दाऽनुशासने समर्थपदेन गृह्यते । पतञ्जलिः कृतवर्णानुपूर्वीकस्य पदस्याऽर्थाऽभिधाने सामर्थ्यं प्रत्यपादयत्[4] । प्रतिवर्णमर्थोपलब्धिरपि न दृश्यते[5] । अतो वर्णसङ्घातरूपस्य पदस्य वाचकत्वं सिध्यति ।

वर्णस्फोटनिरूपणाप्रसङ्गेऽस्माभिः धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामपि अर्थवत्त्वं प्रतिपादितम् । परं पृथगवस्थितानां तेषामर्थवत्त्वं केवलं शास्त्रीयप्रक्रियानिर्वाहार्थमेवाऽभ्युपगम्यते[6] । वस्तुतस्तु प्रकृतिमात्रेण प्रत्ययमात्रेण वा लोकेऽर्थप्रत्ययाऽनुत्पाद एव दृश्यते । 'संख्याया अतिशदन्तायाः कन्[7]' इति सूत्रं भाषमाणः परमशाब्दिकःपतञ्जलिः केवले प्रत्यये लौकिक्या अर्थवत्ताया अभावमेव व्याचष्ट[8] । सप्रकृतिकेनैव प्रत्ययेनाऽर्थाऽवगतिः जायते । सप्रकृतिकेन प्रत्ययेनाऽर्थावगतिर्भवतीत्येष नियमः शब्दसङ्घातस्थलीयो विद्यते इति पतञ्जलिः प्रत्यपादयत्[9] । प्रकृतिमात्रेण प्रत्ययमात्रेण वा याऽर्थाऽवगतिः कल्प्यते सा तु अन्वयव्यतिरेकसमधिगम्या एव[10] । वस्तुतस्तु सप्रकृतिकेन सप्रत्ययेन च पदरूपेणैव वर्णसङ्घातेन लोका अर्थमधिगच्छन्ति । अत एव भर्तृहरिराचार्यो विशुद्धानां

---

१. अष्टा०, १।२।६४ ।

क. सङ्घातस्यैकार्थ्यात् सुबभावो वर्णात् । (अष्टा० महाभा० आ० २)

२. न वा पदस्यार्थे प्रयोगात् । (अष्टा०, १।२।६४, वा० १८)

३. अष्टा०, ४।१।८२ ।

४. किं पुनः समर्थम् ? अर्थाऽभिधाने यत्समर्थम् ।

किं पुनस्तत् ? कृतवर्णाऽनुपूर्वीकं पदम् । सौत्थितिः, वैक्षमाणिः ।

(अष्टा०, ४।१।८२, महाभा०)

५. अनर्थकास्तु प्रतिवर्णमर्थाऽनुपलब्धेः । (अष्टा०, प्रत्या०सू० ५, वा० १४ ।

६. शास्त्रार्थ एव वर्णानामर्थवत्त्वे प्रदर्शितः ।…(वा०प०, २।२१०)

७. अष्टा० ५।१।२२ ।

८. नहि केवलेन प्रत्ययेनार्थोऽवगम्यते, केन तर्हि ? स प्रकृतिकेन ।

(अष्टा० ५।१।२२ महाभा०)

९. क्व तर्हि एषा परिभाषा ? यान्येतानि शब्दासङ्घातग्रहणानि ।

(अष्टा० ५।१।२२ महाभा०)

१०. केवलेनाऽपि प्रत्ययेनाऽर्थो गम्यते । कथम् ? उक्तमन्वयव्यतिरेकाभ्याम् ।

(अष्टा०, ५।१।२२ महाभा०)

धात्वादिप्रकृतीनां प्रत्ययानाञ्च लौकिकार्थं प्रत्याचष्ट[1]। धात्वादिप्रकृतिमात्रेण प्रत्ययमात्रेण वा किञ्चिदपि प्रवृत्तिनिमित्तं नोपजायते प्रतिपत्तॄणाम्। यत्राऽन्वयव्यतिरेकाभ्यामर्थवत्ता कल्पयितुं शक्या भवति तत्रैव धात्वादिषु वर्णस्फोटः कल्प्यते, न तु सर्वत्र। अतः पदादर्थाऽवस्फोटनं स्वीक्रियते। पदेषु वर्णविकारे जातेऽपि अर्थविकारो न दृश्यते। 'हतः, घ्नन्ति' इत्यादिषु वर्णविकारेऽपि अर्थाऽपायो न भवति। एवमेव पदेषु वर्णोपजने सति नहि मूलार्थे कश्चिदर्थोपजनो दृश्यते। 'लवितुम्, लविता' इत्यत्र इकार उपजातः, परमत्र मूलेऽर्थे न कश्चिदन्योऽर्थ उपजातः। अतः पदेषु वर्णानां व्यत्यये, विकारे, अपाये, उपजने च सत्यपि अर्थभेदाऽदर्शनाद्[2] अखण्डपदस्फोटः, पदजातिस्फोटश्च शब्दतत्त्वविद्भिः स्वीकृतः।

३-वाक्यस्फोटः—

वाक्यात् पदान्यपोद्ध्रियन्ते पदाच्च वर्णा अपोद्ध्रियन्ते। अन्वयव्यतिरेकाभ्यां वाक्यात् पदानि वर्णाश्च कल्प्यन्ते। अर्थाऽभिधायकः शब्दो वस्तुतो वाक्यात्मक एक एव भवति। तत्र पदभेदावसरो वर्णभागावसरो वा न सन्तिष्ठते। केवलं प्रक्रियानिर्वाहार्थं व्यवहारसौकर्यार्थञ्चैव वाक्ये पदानि पदे वर्णाश्च स्वीक्रियन्ते। यथातथ्यं वस्तु प्रबोधयितुमतथ्येन वस्तुना बालानामुपलालना कल्प्यते। तथाऽत्रापि वाक्यं बोधयितुं वाक्ये पदानि पदे च वर्णाः कल्प्यन्ते। लोके एक एव प्रकाशो यथा दृश्यभेदाद् भिद्यमानो दृश्यते[3], यथा वा एकमेव चित्रं नीलपीतादिभिः भेदनिदर्शनैः समाख्यायते[4] तथाऽत्राऽपि शब्दशास्त्रे एकमेव निराकाङ्क्षं वाक्यं साकाङ्क्षैः पदैः वर्णैश्च समाख्यायते[5]। सिद्धान्ततो वाक्येनाऽर्थविबोधनाद् वाक्यस्फोटः पाणिनीयैराचार्यैः स्वीकृतः।

वाक्यस्याऽर्थवत्त्वादेव पदानां वर्णानां वा अर्थवत्त्वं कल्प्यते। भट्टोजिदीक्षितो वाक्यादेवाऽर्थाऽवस्फोटनं स्वीकृत्य वाक्यस्फोटं वैयाकरणानां सैद्धान्तिकं

---

१. धात्वादीनां विशुद्धानां लौकिकोऽर्थो न विद्यते।
कृत्तद्धितानामर्थश्च केवलानामलौकिकः।
प्राग्विभक्तेरतदन्तस्य तथैवार्थो न विद्यते॥ (वा०प०, २।२१०-११)

२. वर्णव्यत्ययाऽपायोपजनविकारेष्वर्थदर्शनात्। (अष्टा०प्रत्या०सू० ५, वा० १५)

३. यथैक एव सर्वार्थप्रकाशः प्रविभज्यते।
दृश्यभेदाऽनुकारेण वाक्यार्थाऽनुगमस्तथा॥ (वा०प०, २।७)

४. चित्रस्यैकस्वरूपस्य यथा भेदनिदर्शनैः।
नीलादिभिः समाख्यानं क्रियते भिन्नलक्षणैः॥ (वा०प०, २।८)

५. तथैवैकस्य वाक्यस्य निराकाङ्क्षस्य सर्वतः।
शब्दान्तरैः समाख्यानं साकाङ्क्षैरनुगम्यते॥ (वा०प० २,९)

पक्षं व्याचष्ट[1]। वाक्यातिरिक्तस्य पदस्य प्रविवेको न सम्मतः। पदे वर्णकल्पना वर्णे चाऽवयवकल्पनाऽपि नितराम् औपचारिकी एव[2]। वस्तुतः पदवाक्ययोः कश्चिद् भेदो नाऽस्ति, वाक्यगताऽर्थैकदेशस्यैव कल्पितेन पदेनाऽभिधानात्। पदेन कश्चिदपि स्वतन्त्रोऽर्थो नाऽभिधीयते[3]। अखण्डेन वाक्येन अखण्ड एवाऽर्थोऽभिधीयते। वक्तुः शब्दभावना एवाऽखण्डं वाक्यं भवति। श्रोतुः प्रतिभा चाऽखण्डोऽर्थो भवति। प्रयुक्तेन वाक्येन श्रोतुः प्रतिभा परिस्फुटति। प्रतिभापरिस्फोट एव वाक्यार्थः।

'देवदत्त ! ग्रामभ्याज शुक्लाम्' इति वाक्येन समन्वित एकोऽर्थात्मा प्रतीयते। तत्र पृथक्-पृथक् पदानामर्थदर्शनं वाक्यार्थोऽपयोगि न भवति। यथा गौरखरः, कृष्णसर्पः सञ्ज्ञुः, प्रज्ञुरित्यादिस्थलेषु पृथक् पदानाम् अर्थावगतिर्न दृश्यते तथाऽन्यत्राऽपि वाक्ये पृथक् पदार्थकल्पनमयथार्थमेवास्ति[4]। 'प्रगते जानुनी यस्ये'ति प्रज्ञुशब्दो व्युत्पादितः, 'सङ्गते जानुनी यस्ये'ति सञ्ज्ञुशब्दो व्याकृतः। तत्राऽवयवेन काचिदपि अर्थप्रतीतिर्नाऽवलोक्यते। अतः सङ्घातस्य वाक्यरूपस्य वागात्मनो वाचकत्वं स्वीक्रियते[5]। एकस्याखण्डस्य प्रविभागशून्यस्य वाक्यरूपस्य स्फोटात्मनः, विशिष्टस्य प्रतिभात्मकस्याऽर्थस्य वाचकत्वस्वीकाराद् वैयाकरणैरखण्डवाक्यस्फोटः सिद्धान्तोऽङ्गीकृतः।

---

१. वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः।
(वै० भू० का०, स्फो० नि० १)

२. पदे न वर्णाः विद्यन्ते वर्णेष्ववयवा न च। (वै०भू०का०, स्फो० नि०, ८)
वाक्यात् पदानामात्यन्तं प्रविवेको न कश्चन। (वै०भू०का०, स्फो०नि० ९)

३. वर्णानां पदमर्थेन युक्तं नाऽवयवाः पदे। (वा०प०, २।२०७)

४. पदवाच्यो यथा नार्थः कश्चिद् गौरखरादिषु।
सत्यपि प्रत्ययेऽत्यन्तं समुदाये न गम्यते॥ (वा०प० २।२१८)
समन्वित इवार्थात्मा पदार्थैर्यः प्रतीयते।
पदार्थदर्शनं तत्र तथैवानुपकारकम्॥ (वा०प०, २।२१९)

५. प्रज्ञुसञ्ज्ञाद्यवयवैर्न चाऽस्त्यर्थावधारणम्।
तस्मात्तु सङ्घात एवैको विशिष्टार्थनिबन्धनम्॥ (वा०प०, २।२२२)

# शब्दकाण्डे चतुर्थः समुद्देशः

## शब्दब्रह्म

अनादितत्त्वं हि नाम शब्दब्रह्मेति आम्नायेषु[1] निगद्यते । विभिन्नैराचार्यैः शब्दब्रह्मणो विभिन्नं स्वरूपं व्याख्यातम् । वर्णेषु ब्रह्मत्वव्यवहारं कात्यायनः प्रत्यपादयत्[2] । लौकिके वैदिके च वाङ्मये यत्किञ्चिदपि ज्ञानतत्त्वमनुभूयते तत्सर्वं वर्णेष्वेव प्रतिष्ठितमिति[3] आचार्याः सङ्गिरन्ते । ऋग्वेदा[4]नुसारेणप्रकृति-प्रत्ययप्रविभागसंयमवतां वाचि यथेप्सितफलप्रदा काचन शक्तिः सन्तिष्ठते । वाग्विदो हि तां शक्तिमधिगच्छन्ति । शब्दतत्त्वविदो मनसाकर्षन्ति वाचम् । यथा तितउः सक्तोस्तुषादि अपनयति तथा व्याकरणमपि वाचोऽपशब्दानपनयति । अपगताऽपशब्दायां परिशुद्धायां वाचि ज्ञानात्मिका ब्रह्मशक्तिः सुस्पष्टमवगन्तव्या भवति । ऋक्संहितायां वाचो व्यापकत्वं व्याख्यायते । ब्रह्मणो वाचश्च अधिष्ठानं समानमेव ऋचि[5] समाख्यायते । एतादृशि शब्दब्रह्मणि निष्णातो जनो ज्ञानात्मकं परं ब्रह्माऽपि सारल्येन अधिगच्छति[6] ।

ख्यातनामा अज्ञातवृत्तान्तश्च स्फोटायनो नाम ऋषिः शब्दब्रह्मसिद्धान्तस्य प्रमाणभूत आचार्य आसीदिति श्रूयते । दौर्भाग्याद् वाग्विदोऽस्य काचनाऽपि कृतिर्नाऽधिगताऽद्यावधि विद्वद्भिः । अयं हि स्फोटसिद्धान्तस्य आदिमेषु आचार्येषु अन्यतम इति[7] मनीषिभिरुद्घोषितम् । यस्माच्छब्दस्वरूपाद् अवगतार्था लौकिका व्यवहाराः सम्पाद्यन्ते तत् स्फोट इति तद्व्याख्यातारोऽभ्युपगच्छन्ति । उपरि वर्णितस्य शब्दब्रह्मणः स्वरूपाऽवलोकनेनाऽयं स्फोटः तस्य

---

१. द्र०—वा०प०, १।१, वाज० प्राति० ८।२५, ब्रह्मबि० उ० १६, प्रभृति ।
२. एते पञ्चषष्टि वर्णा ब्रह्मराशिरात्मवाचः । (वाज० प्राति०, ८।२५)
३. यत्किञ्चिद् वाङ्मयं लोकं सर्वमत्र प्रतिष्ठितम् । (वाज० प्राति०, ८।२५, उ० भा०)
४. सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताऽधिवाचि ॥ (ऋक्सं०, १०।७१।२)
५. …यावद् ब्रह्म विष्ठितं तावती वाक् । (ऋक्सं०, १०।११४।८)
६. शब्दब्रह्मणि निष्णातः परं ब्रह्माऽधिगच्छति । (ब्रह्मबि० उ०, १६)
७. स्फोटोऽयनं पारायणं यस्य स स्फोटायनः, स्फोटप्रतिपादनपरो वैयाकरणाचार्यः ।
(अष्टा०, ६।१।१२३, का०वृ०, पदमं०)

पर्याय इत्यवगन्तुं शक्यते । उपर्युक्तं शब्दब्रह्मण स्वरूपं शब्दब्रह्मसिद्धान्तस्य भूमिकास्थानीयं विद्यते । एतदेव समुपबृंहितं ततः पश्चाद्भवेषु ग्रन्थेषु ।

शब्दशास्त्रे शब्दतत्त्वेन सह ब्रह्मपदस्य सामञ्जस्यं सर्वप्रथमं पतञ्जलिना समुपस्थापितम् पतञ्जलिदृष्ट्या व्याकरणशास्त्रेण वागियमाबध्यते । वर्णानां शुद्धं स्वरूपञ्चाऽपि व्याकरणेनैव ज्ञायते । एवञ्च शास्त्रप्रवृत्त्यर्थं निर्दुष्टवाग्ज्ञानार्थञ्च पाणिनिना अक्षरसमाम्नाय उपदिष्ट इति पतञ्जलिः मनुते । एवं श्रूयते यत् पुरा वाचमिमां हि जनाः संहितारूपामकल्पितवर्णपदाम् अव्याकृतामेवाऽवदन्[1] । इन्द्रश्च कश्चिद् वैयाकरणः प्रतिपदपाठलक्षणेन[2] व्याकरणेन वाचमिमां व्याकरोदिति । स्यादेतत् कथानकं संल्लक्ष्यैव पतञ्जलिरेतत् स्वीकुरुते यद् व्याकरणमिदं वाचम् आबध्नातीति । तदेतत् पतञ्जलिनोक्तम् –



वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्तते ।
तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते[3] ॥

अत्र शब्दतत्त्वे यस्य ब्रह्मणोऽधिष्ठानं पतञ्जलिना प्रतिपाद्यते तद् दार्शनिकानामभिमतं ब्रह्म नास्ति, अपि तु भाषाशास्त्रिणां स्वीकृतं ब्रह्म विद्यते ।

---

१. वाग्वै पराच्यव्याकृतावदत्, ते देवा इन्द्रमब्रुवन्—इमां नो वाचं व्याकुर्वीति,……।……तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुच्यते । (तै०ति०स० ६।४।७)

२. बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम । (अष्टा० महाभा०, पस्प० १)

३. अष्टा०, प्रत्या०सू० महाभा०, आ० २ ।

शब्दब्रह्मविषयेऽन्वेषणात् प्राग् एतदवधेयम् । ब्रह्मपदेनाऽत्र पतञ्जलेः किमभिप्रेतमित्यवश्यम् अनुसन्धेयम् । अर्थसङ्कोचादद्य ब्रह्मपदशक्तिः सच्चिदानन्दस्वरूपे अनिर्वचनीयतत्त्वमात्रे रूढा दृश्यते । परं प्राक् प्रयोगभेदादनेकार्थस्य अभिधायकं ब्रह्मपदमासीदिति दृश्यते । यास्केन जलार्थाभिधायी[1] अन्नार्थाभिधायी[2] धनार्थाऽभिधायी[3] च ब्रह्मशब्दः समाख्यातः ।

ब्रह्मपदस्य ज्ञानमप्यर्थो[4] दृश्यते । शब्दब्रह्मशब्दगतस्य ब्रह्मपदस्याऽपि स एवार्थः सङ्गतः प्रतीयते । पतञ्जलेरुक्तं श्लोकं व्याचक्षाणः कैयटो ब्रह्मपदं वेदार्थकं व्याचष्ट[5] । वेदश्च ज्ञानात्मको विद्यते[6] । पतञ्जलिरपि श्लोकहृदयं स्फोटयन्नेवमाह—

'सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितः चन्द्रतारकादिवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः, सर्ववेदफलावाप्तिश्चाऽस्य ज्ञाने भवति[7] ।'

यद्यत्र शब्दब्रह्मपदे ब्रह्मपदं सच्चिदानन्दघनार्थकमस्ति तर्हि पतञ्जलिना प्रयुक्तस्य ब्रह्मराशिरिति पदस्य कोऽर्थः स्यात् ?

ब्रह्मराशिरित्यस्य ज्ञानराशिरित्यर्थविगत्या काचित् समस्या न जायते । अर्थप्रकाशनार्थो हि नाम शब्दः प्रयुज्यते । शब्दानां सम्यग् ज्ञानञ्चाऽर्थस्य शब्दैः प्रकाशनं भवति । अर्थो हि वाचामन्तरात्मा निगद्यते । यतो हि अर्थपरिज्ञानफला वाग् विद्यते । अतो ज्ञानराशेरधिष्ठानं वागिति सत्यं व्याख्यातं पतञ्जलिना । ब्रह्मराशित्वेन वर्णान् व्याचक्षाणः कात्यायन एवमाह—

"एते पञ्चषष्टि वर्णा ब्रह्मराशिरात्मवाचः[8] ।

एतत्स्थलं टीकमानोऽनन्तभट्ट[9] उव्वटश्च सर्वे वर्णाः त्रयीलक्षणो ब्रह्मराशिरिति

---

१. निघण्टुः, १।१२ ।
२. निघण्टुः, २।७ ।
३. निघण्टुः, २।१० ।
४. सत्यं ज्ञानमनन्तं ब्रह्म । (तैत्ति०उ०, २।१।१)
५. ब्रह्म वेदः, पदे वर्तते, तस्य च शास्त्रं विषयः, लौकिकानां वैदिकानाञ्च शास्त्रं विषय इत्यर्थः । अष्टा० प्रत्या० सू०, महाभा० आ० २, प्र०)
६. विद् ज्ञाने । पा०धा०पा०, अदा०ग०, ११४०)
७. अष्टा० प्रत्या०सू०, महाभा० आ० २ ।
८. वाज०प्रा०, ८।२५ ।
९. ......एते पञ्चषष्टि वर्णाः, ते एते समस्ता एव त्रयीलक्षणो ब्रह्मराशिः । (वाज० प्रा०, ८।२५, उ०भा०, तथा—वाज०प्रा०, ८।२५, अनं०भा०)

व्याचष्ट। तत्राऽपि ज्ञानाऽर्थक एव ब्रह्मशब्दः सङ्गच्छते। अन्यथा सच्चिदानन्दार्थाऽभिधायिनो ब्रह्मण एकत्वेन राशिपदेन तस्य कथं सामञ्जस्यं सम्भवेत्।

वस्तुतोऽत्र ब्रह्मपदस्य शब्दब्रह्मपदस्य वा, अथवा अन्यस्य कस्यचन विवादास्पदस्य विषयस्य स्पष्टीकरणं शब्दशास्त्रीयव्यवस्थानुसारि एव विधेयम्। विभिन्नशास्त्रीयसिद्धान्तैः सह सामञ्जस्यसंस्थापने तु महदानर्थक्यं समापद्येत। किञ्च शब्दशास्त्रीयसिद्धान्तभङ्गः सम्पद्येत। अवश्यमत्र कश्चिच्छब्दशास्त्रीयः कृतान्तोऽन्वेष्टव्यः[1]।

शब्दो ज्ञानस्य परिणाम इति शब्दोत्पत्तिप्रक्रियायामस्माभिः प्रतिपादितम्। येन नादात्मकसङ्केतादिना वक्तृस्था बुद्धिः श्रोतृस्था सञ्जायते सा वागिति प्रामाणिका व्याचक्षते[2]। वक्ता स्वज्ञानानुसारेण शब्दं प्रयुङ्क्ते। प्रयुक्तेन शब्देन वक्तुः ज्ञानं प्रकाशते। श्रोता तु श्रुतशब्दाऽनुसारेण ज्ञानमादत्ते। श्रुतेन शब्देन श्रोता वक्तुः ज्ञानमधिगच्छति। अत एव पस्पशाह्निके पतञ्जलिः सम्प्रत्ययनिमित्तकं शब्दं परिबभाषे[3] वक्तरि ज्ञानसम्बद्धः शब्दो भवति, श्रोतरि च शब्दसम्बद्धं ज्ञानं भवति। अतो वक्तुः कृते ज्ञानं शब्दस्य कारणं जायते, श्रोतुः कृते च शब्दो ज्ञानस्य कारणं भवति। एवञ्च श्रोतॄणां ज्ञानात्मकं ब्रह्म शब्देष्वेव सन्तिष्ठते अर्थाच्छब्दश्रवणानन्तरमेव वक्तृबुद्धिः श्रोतृस्था सञ्जायते। शब्दश्रवणं विना श्रोतुरर्थावगतिरसम्भविनी एव। अतएव भर्तृहरिराचार्योऽर्थबुद्धेराधारं शब्दं[4] समाचष्ट।

वक्तृश्रोतृद्वयमध्ये शब्दस्य खलु महत्त्वपूर्णं स्थानं विद्यते। यत उभयोर्मध्ये व्यवहारस्य साधनं शब्द एव स्वीक्रियते। वक्तृमनसि च बृहत्त्वादिदं

---

१. अवश्यं कश्चित् स्वकृतान्तः आस्थेयः। (अष्टा० ४।१।३ महाभा०)

२. शब्दः कारणमर्थस्य स हि तेनोपजन्यते।
तथा च बुद्धिविषयादर्थाच्छब्दः प्रतीयते॥ (वा०प०, ३।३।३२)
…बुद्ध्यर्थादेव बुद्ध्यर्थे जाते तदपि दृश्यते। (वा०प०, ३।३।३३)

३. येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः।
(अष्टा० महाभा०, पस्पशा०)

४. अनादि निधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ (वा०प० १।१)
शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।
छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत॥ (वा०प०, १।१२०)

शब्दतत्त्वं शब्दब्रह्म कथ्यते । यच्च सर्वेभ्यो बृहत्त्वं गुणमाधत्ते तद् ब्रह्मेति प्रामाणिका मन्वते[1] । येन सर्वाणि भूतानि वर्द्धन्ते तद् ब्रह्मेति निघण्टुनिर्वचने देवराजयज्वा प्रत्यपादयत्[2]। वक्तुः श्रोतुश्च मध्ये व्यवहारसाधनेषु शब्दो हि बृहत्तमं साधनं भवति । एवञ्च बृंहणशीलस्वभावत्वादेव वाक्तत्त्वमिदं ब्रह्मेति अन्वर्थमाख्यां लभते[3] । यस्य शब्दस्य योऽर्थः साम्प्रतं प्रतिपाद्यमानत्वेन शक्तिग्रहोपायैः आश्रीयते, कालान्तरे प्रयोगाभावात् सोऽर्थः ततोऽपचीयते । कदाचिच्च तेनैव शब्देनाऽन्यस्याऽर्थस्याऽभिधानात् तत्राऽन्योऽर्थः प्रचीयते । प्रचयाऽपचयात्मकेऽपि शब्दतत्त्वे यस्य कस्याऽर्थस्याऽभिधानसामर्थ्याद् बृंहणशील एव शब्दो विद्यते[4] । बाह्यवस्तुशून्येऽपि शब्दाऽभिधेये शब्दः शब्दजन्यं यत्किञ्चिदर्थं प्रत्याययत्येव[5] । बुद्धिद्वयमध्यगा आदानप्रदानात्मिका प्रक्रिया नाम भवति शब्दव्यापारो भाषणं वा । अतो यदपि बुद्धिसिद्धं सम्भवति तदभिधातुं शक्यते[6] । एवञ्च बाह्याऽर्थाऽभावेऽपि बुद्धिद्वयकल्पितस्य अर्थस्य गृहीतशक्तिकेन शब्दसङ्घातेन बोधो भवत्येव[7] ।

तैत्तिरीयोपनिषदि ब्रह्मणः स्वरूपवर्णना उपलभ्यते । तद्रीत्या यस्मादिमानि भूतजातानि उत्पद्यन्ते, उत्पन्नानि वस्तूनि यदाश्रित्य जीवन्ति, पुनर्यत्र प्रतिगच्छन्ति, यत्र च संप्रविशन्ति तद् ब्रह्मेति[8] अवगम्यते । एतल्लक्षणाऽनुसारेणैवाचार्यो वरुणः स्वपुत्राय भृगवे अन्नस्य, प्राणस्य, चक्षुषः, श्रोत्रस्य मनसो वाचश्च ब्रह्मत्वं प्रोवाच[9] । शब्दब्रह्मविषयेऽपि उक्तं लक्षणं सङ्गतं प्रतीयते । श्रोतृणां कृते सर्वाणि अर्थजातानि वाग्भ्यो जायन्ते,[10] वाचमाश्रित्यैव अर्था

---

१. ब्रह्म परिवृढं सर्वतः । (निरु०, १।३।३)

२. ब्रह्म···वर्द्धन्तेऽनेन भूतानीति । (निघं०, २।७, निघं० निर्व०)

३. बृंहति वर्धते तद् ब्रह्म । (उणा० व्या०, ४।१४६ दयानन्द-व्याख्या)
द्र०-सत्या० प्र०, प्र० समु० ।

४. बृहस्पतिर्ब्रह्मासीत् । सोऽस्मै वाचमयच्छत् । बृहदुपाख्यातम् । (निरु०, २।३।३)

५. शब्दज्ञानाऽनुपाती वस्तुशून्यो विकल्पः । (यो० द०, १।९)

६. अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि । (खं० खा०, १।११)

७. अत्यन्तमतथाभूते निमित्ते श्रुत्युपाश्रयात् ।
दृश्यतेऽलातचक्रादौ वस्त्वाकारनिरूपणा ॥ (वा० प० १।१३०)

८. यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद् ब्रह्मेति । (तैत्ति० उ०, ३।१)

९. भृगुर्वै वारुणिः वरुणं पितरमुपससार—अधीहि भगवो ब्रह्मेति ।
तस्मा एतत्प्रोवाच—अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति । (तैत्ति० उ०, ३।१)



१०. शब्दः कारणमर्थस्य स हि तेनोपजन्यते ।···(वा० प० ३।३।३२)

व्यवह्रियन्ते, वाचि एव च तेऽर्था अभिसंविशन्ति[1]। बृंहणशीलत्वाद् अर्थ-निमित्तकत्वाच्चाऽयं शब्दो ब्रह्मोच्यते।

शब्दब्रह्मण एतादृशी भाषावैज्ञानिकी एव व्याख्या सङ्गच्छते। कैश्चिद् वैयाकरणैः कल्पितेन शब्दब्रह्मणा सृष्ट्युत्पत्तिप्रक्रियाऽपि व्याख्याताऽवलोक्यते। परमेतत् सुस्पष्टम् अवधेयं यदत्र शब्दशास्त्रे भाषातत्त्वस्यैव प्राधान्यम्, सृष्ट्युत्पत्त्यादिकमन्यत् सर्वं गौणमेव।

**शब्दब्रह्मविषये भर्तृहरेर्मतम्—**

अर्थशब्दस्य द्विधा भवति प्रवृत्तिनिमित्तम्। तत्र १-बाह्यार्थरूपं वस्तुमात्रम्, २-अभिधेयार्थश्च स्वीकृतः। योऽर्थो वक्तुं प्रतिपादयितुं वा न विवक्षितः सोऽर्थो बाह्यार्थो विद्यते। शब्दैरभिहितोऽर्थः अभिधेय उच्यते। अभिधेयरूपेऽर्थे शब्दस्याऽधिकारः स्वीक्रियते[2] सर्वस्याऽप्यस्य अभिधेयरूपस्यार्थस्य मूलं शब्दब्रह्मैव भवति। उपसंहृतक्रममुत्पादविनाशरहितमक्षराख्यं शब्दतत्त्वं शब्दब्रह्मेति भर्तृहरिः स्वीकुरुते। तथा हि—

'अनादि निधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[3]॥

सर्वस्याऽपि सांसारिकस्य व्यवहारस्याधारः शब्द एव दृश्यते। सर्ववस्तुभेदकः प्रतिभात्माऽपि शब्दैरेवाऽवगम्यते। तद्यथा—

शब्देष्वेवाश्रिता शक्तिः विश्वस्याऽस्य निबन्धनी।
यन्नेत्रः प्रतिभात्माऽयं भेदरूपः प्रतीयते[4]॥

व्याकरणागममनुसृत्य भर्तृहरिः नित्यं शब्दब्रह्म वैखरीरूपेण शब्दभावेन विवृत्तं सदभिधेयरूपेणाऽर्थभावेन विवर्तत इति 'अनादि निधनं ब्रह्मे'ति[5] कारिकया व्याचष्टे।

**विवर्तपदार्थविवेचना—**

'...विवर्ततेऽर्थभावेन...[6]' इति कारिकया भर्तृहरिः शब्दस्याऽर्थो विवर्त

१. आत्मरूपं यथा ज्ञाने ज्ञेयरूपञ्च दृश्यते।
अर्थरूपं तथा शब्दे स्वरूपञ्च प्रकाशते॥ (वा० प०, १।५०)

२. तत्र वस्तुमात्रम्—बाह्यार्थो यो वक्तुं प्रतिपादयितुं वा न समीहितः।
यस्तु समीहितोऽसावभिधेयः। तत्रैव च शब्दस्याऽधिकारः। (वा० प०, २।८१, पुण्य०)

३. वा० प०, १।१।

४. वा० प० १।११८।

५. वा० १।१।

६. वा० १।१।

इति स्वीकुर्वन्निव प्रतीयते। अग्रे च 'शब्दस्य परिणामोऽयम्...[1]' इति कारिकया शब्दस्यार्थः परिणाम इति ब्रुवाणो भर्तृहरिर्विलोक्यते। अतोऽत्रैतत् संशयास्पदं जायते यद् भर्तृहरेः किमभिप्रेतम्—विवर्तः परिणामो वेति। प्रसङ्गाद् विवर्तपरिणामयोर्विषयेऽत्र किञ्चिद् विचार्यते।

वेदान्तग्रन्थेषु विवर्तपरिणामयोः यादृशं स्वरूपं प्रदर्शितं तदनुसारेण उपादानसमसत्ताककार्यापत्तिः परिणामो भवति। यथा दुग्धस्थं दधिरूपं कार्यम्। अत्रोभयोरपि व्यावहारिकत्वमस्ति। उपादानविषमसत्ताककार्यापत्तिः विवर्तो निगद्यते। यथा—शुक्तिकायां रजतप्रतीतिः। अत्र शुक्तिकायान्तु व्यावहारिकत्वमस्ति, परं प्रतीयमाने रजते प्रातिभासिकत्वेन व्यावहारिकत्वाऽभावः। इमावेव विवर्तपरिणामौ सदानन्देनेत्थमपि वर्णितौ—

"अतत्त्वतोऽन्यथा प्रथा विवर्त इत्युदीरितः।
सतत्त्वतोऽन्यथा प्रथा विकार इत्युदीरितः[2] ॥

अनादि निधनं ब्रह्मेति कारिकां टीकमानः स्वोपज्ञकारो विवर्तपदमित्थं लक्षितवान्—

एकस्य तत्त्वादप्रच्युतस्य भेदाऽनुकारेणाऽसत्या विभक्ताऽन्यरूपोपग्राहिता विवर्तः[3]।

अत्रैतद् विज्ञेयं यत् प्रदर्शितं विवर्तस्वरूपं भर्तृहरेः प्राक्कालिकं नास्ति। प्राक्काले विवर्तपरिणामपदयोः प्रयोगसाङ्कर्याद्उभयोः पर्यायवाचित्वं प्रतीयते। करुणरसस्य प्रस्तोता भवभूतिः परिणामार्थे विवर्तपदं प्रायुङ्क्त—

एको रसः करुण एव निमित्तभेदाद्,
भिन्नः पृथक् पृथगिवाश्रयते विवर्तान्।
आवर्तबुद्बुदतरङ्गमयान् विकारान्,
अम्भो यथा सलिलमेव हि तत्समग्रम्[4] ॥

यथा मृत्तिकायाः परिणामो घटादिस्तथा जलस्यापि परिणाम एव बुद्बुदतर-

---

१. वा० प० १।१२०।
२. वेदां० सा०, अप० प्रक० ।
३. वा० प० १।१, स्वोप० ।
४. उत्तरराम० ३।४७।

ङ्गादिः तदत्र परिणामार्थे विवर्तपदं भवभूतिना प्रयुक्तम् । किञ्च अनादि निधनमिति कारिकामिमामर्थतोऽनुवदन् शान्तरक्षितो विवर्तार्थे परिणामपदमेव प्रायुङ्क्त । तथाहि—

नाशोत्पादसमालीढं शब्दब्रह्ममयञ्च यत् ।
यत्तस्य परिणामोऽयं भावग्रामः प्रतीयते[1] ।।

शङ्कराचार्येणाऽपि "विवर्तते" इति पदं विकारार्थे प्रयुक्तम्—

'स्वभावेनैव विचित्रेण विकारात्मना विवर्तते इति[2] ।

'अनादि निधनं ब्रह्मेति' निरुक्तकारिकायां भर्तृहरिणा' विवर्तते, इति क्रियापदं प्रयुक्तम् । तत्पदस्य शब्दशास्त्रीया एव व्याख्या समीचीना प्रतिभाति, न तु दार्शनिकानां विवादास्पदं व्याख्या । प्रवृत्तिनिमित्तभेदाच्छब्दानां चातुर्विध्यमिति अनुशासनीयशब्दनिरूपणासन्दर्भे प्रतिपादयिष्यते । भर्तृहरिणा प्रयुक्ते 'विवर्तते' इति क्रियापदेऽपि तेषु किञ्चिदन्यतमं प्रवृत्तिनिमित्तमन्वेष्टव्यम् । कियाविशेषः, 'विवर्तते' इति पदस्य प्रवृत्तिनिमित्तमस्ति । एवञ्च शब्दतत्त्वादेवाऽभिधेयरूपोऽर्थो विवर्तते=विभिन्नरूपेण सन्तिष्ठत इत्येव भर्तृहरेरभिप्रायः प्रतीयते । ग्रन्थार्थमभिधातुमेकस्मादेव शब्दतत्त्वात् कश्चित् पुस्तकमिति पदं प्रयुङ्क्ते । अन्ये 'बुक् (Book)' इति पदं प्रयुञ्जते । अपरे च किताबादि पदमपि स्वीकुर्वते । एवमेव सास्नादिमदर्थमभिधातुमेकस्मादेव शब्दतत्त्वाद् गोगावीगोणीगोतागोपोतलिकादीनि पदानि प्रयुज्यन्ते । शब्दश्रवणानन्तरं श्रोतरि अर्थबुद्धेराधारः शब्द एव भवति । नादं श्रुत्वा श्रोता पूर्वं स्फोटाख्यं शब्दतत्त्वमवधारयति, ततो निर्णयमधिगच्छति । एकस्याऽर्थस्याऽभिधानायाऽनेकेषु नादेषु सत्स्वपि तत्र शब्दतत्त्वमेकमेव विद्यते । अनेकेषु नादेषु विद्यमानादेकस्मादेव शब्दतत्त्वाच्छ्रोता समानमर्थमधिगच्छति । एतदेवाऽभिप्रेत्य भर्तृहरिराचार्यः 'विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः'[3] इति वाक्यं प्रयुङ्क्ते ।

**नागेशाऽनुमतं शब्दब्रह्म—**

नागेशो द्विविधं ब्रह्म स्वीकुरुते १. परब्रह्म, २. शब्दब्रह्म च । मायाऽनुप-

---

१. तत्त्वसं०, श्लो० १२८ ।
२. वे० द० २।२।१, शां० भा० ।
३. [illegible] १।१ ।

हितं परब्रह्म निर्गुणं भवति, मायोपहितं सगुणं जगदुपादानं शब्दब्रह्म। तदेवमाह नागेशः—

'ततः.........भगवतो बुद्धिपूर्विका सृष्टिर्मायापुरुषौ प्रादुर्भवतः।...... ततो बिन्दुरूपमव्यक्तं त्रिगुणं जायते।......अस्माद्बिन्दोः शब्दब्रह्माऽपरनामधेयं वर्णादिविशेषरहितं ज्ञानप्रधानं सृष्ट्युपयोग्यमवस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते[1]।'

नागेशस्यैतन्मतं तन्त्रसिद्धान्तप्रभावितमस्ति। तन्त्रग्रन्थेषु शब्दब्रह्मस्वरूपस्येत्थमेव वर्णितत्वात्। तदेवम् उक्तं प्रपञ्चसारे—

बिन्दोस्तस्माद् भिद्यमानाद् रवो व्यक्तात्मकोऽभवत्।
स रवः श्रुतिसम्पन्नैः शब्दब्रह्मेति कथ्यते[2]॥

यच्छब्दब्रह्म भर्तृहरिणा अनादि निधनं प्रतिज्ञातं तन्नागेशः सादि विनाशि व्याचष्ट। शब्दब्रह्मविषये तन्त्रसिद्धान्ताऽनुरागी खलु नागेश इति पूर्वं निर्दिष्टम्। केचन समालोचका अपि नागेशस्याऽभिमतमिदं तन्त्रसिद्धान्तप्रभावितं निरदिशन्[3]।

वस्तुतः शब्दब्रह्मतत्त्वनिरूपणाऽवसरे भाषातत्त्वस्य प्राधान्यमास्थेयम्। तदनुसारेणैव किञ्चिच्छब्दब्रह्मस्वरूपं विनिश्चेयम्। नागेशेनैतदुपेक्षितम्।

## उपनिषत्सु चर्चितं शब्दब्रह्म

शब्दब्रह्मणः सिद्धान्तस्य प्रभवस्थानमुपनिषदः सन्ति। उपनिषत्सु न खलु शब्दब्रह्मण आध्यात्मिकमेव स्वरूपम् उपवर्णितमपि तु तत्र शब्दब्रह्मणो भाषातात्त्विकं मनोवैज्ञानिकञ्चाऽपि स्वरूपं स्पष्टमुपलभ्यते। शब्दब्रह्मोपवर्णनायामुपनिषत्काराणां व्यापिका दृष्टिर्दृश्यते। उपनिषत्सु शब्दब्रह्मगवेषकैरेतदवश्यमवधेयं यत्कमभिप्रायमवलम्ब्य उपनिषत्सु वाचां ब्रह्मसञ्ज्ञा स्वीकृता।

---

१ वै० सि० ल० मञ्जू०। शक्त्या० निरू०, पृ० ४२-४५।

२. प्रपञ्चसारः, १।४४।

३. नागोजीभट्टास्तु ..... बिन्दोः शब्दब्रह्मापरनामधेयं...... ...नादमात्रमुत्पद्यते।
......स चाऽयं पन्था न वाक्यपदीयकाराऽनुगतः किन्तु तन्त्रशास्त्रानुगतः।
(वा० प०; १।१२०, भा० प्र०)

अन्यथा शब्दशास्त्रस्याऽर्वाचीनेषु ग्रन्थेषु यथा शब्दब्रह्मणः सैद्धान्तिकी दुर्व्यवस्था दृश्यते तथा तत्राऽपि सम्भवेत्।

गुणविशेषाऽवेक्षणाद् वस्तुनः सञ्ज्ञा स्वीक्रियते। येन वक्त्रा वक्तृसमुदायेन वा वस्तुगतो यो गुणः परिदृष्टः, स तदनुसारेण तद्वस्तुनः सञ्ज्ञां प्रयोजयति। अस्मादेवाऽनेकेषां तत्त्वानां ब्रह्मसञ्ज्ञा उपनिषत्सु दृश्यते। आचार्यो वरुणो ब्रह्मस्वरूपमित्थमलक्षयद् यद् यस्माद् वस्तुतत्त्वानि जायन्ते, जातानि वस्तूनि यमाश्रित्य सन्तिष्ठन्ते, अन्ते च यं प्रतिगच्छन्ति तद्धि ब्रह्म। तथा हि "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व तद् ब्रह्मेति[१]।"

एतद् ब्रह्मलक्षणं विचिन्त्यैव ब्रह्मस्वरूपस्य जिज्ञासवे स्वसुताय भृगवे वारुणये वरुणः प्राणस्य चक्षुषो मनसः श्रोत्रस्य वाचश्च ब्रह्मत्वमुपदिदेश[२]। एभ्यः खल्विमानि भूतानि जायन्ते, एभिर्जातानि जीवन्ति, इमानि प्रयन्त्यभिसंविशन्ति च। स्वीकृतस्य ब्रह्मणो गुणस्य विज्ञानेऽपि अवेक्षणाद् वरुणो विज्ञानमपि ब्रह्म व्यजानात्[३]। वाचामपि ब्रह्मत्वप्रतिपादने आचार्यवरुणस्य एतदेवान्तर्निहितं तात्पर्यं दृश्यते। श्रोतॄणां कृते सर्वाण्यपि अभिधेयरूपाणि अर्थजातानि वाग्भ्यो[४] जायन्ते। वागेव तेषां मूलम्। वाक्षु एव चान्तर्भवन्ति अतो वरुणमते वागप्यास्ति ब्रह्म।

"विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[५]।"

उपनिषत्सु न खलु वाचामेव ब्रह्मत्वं प्रतिपादितम्, अपि तु अनेकैराचार्यैरनेकेषां तत्त्वानां ब्रह्मत्वं व्याख्यातम्। आचार्य उदङ्कः प्राणान्[६] ब्रह्म व्याचष्ट। वार्ष्णो वर्कुश्चाचार्यः[७] चक्षुर्ब्रह्मेति उपदिदेश। गर्दभीविपीतोपनामा भारद्वाज[८]

---

१. तैत्ति० उप०, ३।१।

२. भृगुर्वै वारुणिः वरुणं पितरमुपससार, अधीहि भगवो ब्रह्मेति, तस्मा एतत्प्रोवाच—अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। (तैत्ति० उप०, ३।१)

३. विज्ञानं ब्रह्मेति व्यजानात्। विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते। विज्ञानेन जातानि जीवन्ति। विज्ञानं प्रयन्ति अभिसंविशन्ति। इति। (तैत्ति० उप०, ३।४)

४. शब्दः कारणमर्थस्य स हि तेनोपजन्यते। (वा० प०, ३।३।३२)

५. वा० प०, १।१।

६. ...उदङ्कः शौल्वायनः प्राणो वै ब्रह्मेति। (बृह० उ०, ४।१।३)

७. ...वर्कुर्वार्ष्णश्च चक्षुर्वै ब्रह्मेति। बृह० उ०, ४।१।४)

८. ...गर्दभीविपीतो भारद्वाजः श्रोत्रं वै ब्रह्मेति। (बृह० उ०, ४।१।५)

आचार्यः श्रोत्रस्य ब्रह्मत्वं स्वीचकार। सत्यकामो जाबालो[1] मनो ब्रह्मेति अजानात् शाकल्येन चाचार्येण महता शब्देन हृदयस्य[2] ब्रह्मत्वं प्रतिपादितम्।

ब्राह्मणग्रन्थेष्वपि उक्तरीत्यैव अग्नेः[3] कृष्णाजिनस्य[4] प्रातःसवनस्य[5] प्रज्ञानादेश्च[6] ब्रह्माख्या प्रतीयते। गुणविशेषाऽपेक्षणाद्धि खल्वेषामियं सञ्ज्ञा समाश्रिता।

**शब्दब्रह्मणो भाषातात्त्विकं स्वरूपम्—**

यः यैरभिप्रायैः शब्दस्य ब्रह्मत्वं प्रतिपादितमाचार्यैः तेषु मुख्यतमा इमे निम्नाङ्किता अभिप्राया विद्यन्ते। तत्र—

१. शब्दानां व्यावहारिकमहत्त्वम्।

२ शब्दानां व्यापकत्वम्।

३. शब्दानां भाषातात्त्विकं वैशिष्ट्यञ्चेति सन्ति त्रयोऽभिप्रायाः। इमेऽत्र क्रमशो निरूप्यन्ते।

**१. शब्दानां व्यावहारिक महत्त्वम्—**

आचार्यः शैलिनिः जनकाय शब्दब्रह्मोपदिष्टवान्।[7] विषयगाम्भीर्यादज्ञातशब्दब्रह्माशयो जनको याज्ञवल्क्यं जगाम। जनको याज्ञवल्क्यं पप्रच्छ यदनेन शैलिनिनाचार्येण शब्दस्य ब्रह्मसञ्ज्ञा विधीयते। तद्रीत्या जीवनस्य समेऽपि ज्ञानात्मिका व्यवहाराः शब्देभ्य एवोपजायन्ते शब्दज्ञानं विना सृष्टेरणुरपि परिज्ञातुं न शक्यते। वाग् हि नाम प्रज्ञा[8] भवति। तस्मादियं वाक् परमब्रह्म[9] भवतीति शैलिनिनोच्यते, तदस्य कोऽभिप्रायः?

अवगतविषयगाम्भीर्योऽसौ याज्ञवल्क्यः सुस्पष्टं शैलिनेरभिप्रायं जनकमाह। यदा आदित्यः अस्तम् एति, चन्द्रोऽपि अस्तङ्गच्छति, भौतिकोऽग्निश्चाऽपि समेति तदा लोका वाचा पश्यन्ति। अर्थात् समाप्तेष्वपि समस्तेषु

---

१. …सत्यकामो जाबालो मनो वै ब्रह्मेति। बृह० उ०, ४।१।६।
२. …शाकल्यो हृदयं वै ब्रह्मेति। (बृह० उ०, ४।१।७)
३. …ब्रह्म वा अग्निः। (कौ० ब्रा०, १२।८)
४. ब्रह्म वै कृष्णाजिनम्। (कौ० ब्रा०, ४।११)
५. ब्रह्म वै प्रातःसवनम् (कौ० ब्रा०, १६।४)
६. प्रज्ञानं ब्रह्म (ऐत० आ०, २।६।१, तथा ऐत० उ० ६।३)
७. शैलिनिरब्रवीद् वाग्वै ब्रह्म।(बृह० उ०, ४।१।२)
८. वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञा। (बृह० उ०, ४।१।२)
९. वाग्वै सम्राट् परमं ब्रह्म। (बृह० उ०, ४।१।२)

प्रकाशसाधनेषु प्रकाशयितुं वागवशिष्यते[1]। वाग्रूपनेत्रेण सुनयना प्रतिभा व्यवहारादावुन्मेषरूपां प्रज्ञां प्रयोजयति। ततोऽर्थाऽवधारणा मेधा प्रजायते[2]। वाग्व्यवहारस्य चैतदेव फलम्। सर्वविधव्यवहारस्याधारः खलु प्रतिभा भवति[3]। वाग्व्यवहारेण साऽभिव्यज्यते।

सर्वव्यवहारस्य प्रयोजकद्वयं विद्यते, १ ज्ञानम्, २. कर्म च। ज्ञानकर्म्मभ्यामेव लोका व्यवहरन्ति। ज्ञानं विना कर्म अन्ध इव लक्ष्यनिर्धारणाऽक्षमं विद्यते। कर्म विना ज्ञानञ्च पङ्गुरिव व्यवहारसम्पादनाऽक्षमं जायते। उभयस्याऽपि प्रयोजिका खलु वाग् भवति। अतो लौकिकस्य व्यवहारस्य मूलभूमिः वाक् स्वीक्रियते[4]। जीवने ज्ञानकर्मणोः कियदस्ति माहात्म्यमिति अधोऽङ्कितेन यजुषा अवगन्तुं शक्यतेः—

विद्यां चाऽविद्याञ्च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते[5]॥

अविद्यापदमत्र कर्मार्थकमित्यवधेयम्। श्वेताश्वतरोपनिषत्कारो विद्याविद्ययोरधिष्ठानमक्षरद्वयं मनुते। अस्य प्राप्तिरेव पुरुषार्थो विद्यते।

'द्वे अक्षरे ब्रह्मपरे त्वदन्ते विद्याऽविद्ये निहिते यत्र गूढेऽक्षरं त्वविद्या ह्यमृतं तु विद्या। विद्याऽविद्ये ईशते यस्तु सोऽन्यः[6]।' एवञ्च लोके आध्यात्मिकस्य भौतिकस्य च सर्वस्याऽपि व्यवहारस्योपकारकत्वाद् वाग् ब्रह्म विद्यते इत्याशयः।

## २. शब्दानां व्यापकत्वम् —

वाक्तत्त्वस्य सर्वत्राऽभिव्याप्तत्वादेतद् ब्रह्मत्वेन व्यपदिश्यत उपनिषत्सु।

---

१. अस्तमिते आदित्ये 'याज्ञवल्क्य'! चन्द्रमस्यस्तमिते शान्तेऽग्नौ किं ज्योतिरेवाऽयं पुरुष इति? वागेवाऽस्य ज्योतिर्भवति, वाचैव अयं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीति ...। (बृह० उ० ४।३।५)

२. प्रज्ञानं ग्रन्थादावुन्मेषः, मेधा ग्रन्थतदर्थधारणा। (ऐत० आ० २।६।१, सा० भा०)

३. शब्देष्वेवाश्रिता शक्तिर्विश्वस्याऽस्य निबन्धनी।
यन्नेत्रः प्रतिभात्माऽयं भेदरूपः प्रतीयते॥ (वा० प०, १।११८)

४. अर्थक्रियासु वाक् सर्वान् समीहयति देहिनः।
तदुत्क्रान्तौ विसञ्ज्ञोऽयं दृश्यते काष्ठकुड्यवत्॥ (वा० प०, १।१२७)

५. यजुः सं० ४०।१४।

६. श्वेता० उ०, ५।१।

सनत्कुमारो नारदं शब्दब्रह्मोपदिशन् वाग्ब्रह्मणः सर्वकार्यसाधकत्वमाह । शब्दं विना प्राणिनां काचिद् गतिर्नास्ति । प्रतिवस्तु शब्दतत्त्वमिदमभिव्याप्तं विद्यते । धर्माऽधर्मयोः सत्यानृतयोः साध्वसाध्वोः हृदयाऽहृदयोः विज्ञापकः शब्द एव । सर्वज्ञानेष्वभिव्याप्तस्य शब्दब्रह्मण उपासना[1] विधेया । अधीतनिखिलशास्त्रस्याऽपि शब्दब्रह्म ज्ञातुमवशिष्यते ।

शब्दतत्त्वं सर्वस्मिन्नपि वस्तुनि इत्थमनुस्यूतं विद्यते यत्तद्रहितस्य वस्तुनो भानं न सम्भवति । भर्तृहरिमते सर्वमपि ज्ञानं शब्दाऽनुविद्धमेवाऽवगतं[2] भवति । शब्दतत्त्वाऽनुगमं विना तु ज्ञानमसम्भवि एव । बृहदारण्यकसिद्धान्तरीत्या विद्युतो विद्योतनम्, वायोः प्रवहणम्, मेघस्य वर्षणमित्यादि सर्वं वागनुविद्धमेव ज्ञातव्यम्[3] । तेषाम् अव्यक्तः स्वनो गर्जनादिः वाक्तत्त्वस्यैव परिचायकः । बृंहणशीलत्वात् प्रतिवस्तु अनुविद्धस्याऽस्य शब्दतत्त्वस्य उपनिषत्काराणां ब्रह्मत्वमभिमतम् ।

### ३. शब्दानां भाषातात्त्विकं वैशिष्ट्यम्—

शब्दस्वरूपनिरूपणायाम् अस्माभिः मनोद्वयव्यापारो नाम वाग् भवतीति वाचो भाषातात्त्विकं वैशिष्ट्यं प्रतिपादितम् । उपनिषत्स्वपि आचार्यैरेतच्छब्दान्तरेण सम्यक् प्रत्यपादि । वाक्तत्त्वविवेचनया वक्तुः वाग्व्यापारस्य प्रयोजिका प्रतिभा प्रतीयते । वाग्व्यापारेण च श्रोतुः प्रतिभा प्रबोध्यते । अर्थतत्त्वस्य यथार्थग्राहिणी बुद्धिः प्रतिभा भवति । प्रतिभावशादेव जना अर्थक्रियासु प्रवर्तन्ते । तया एव च प्राणिषु व्यवहारोन्मेषरूपा प्रज्ञा प्रादुर्भवति । उपनिषत्सु आचार्या एतदाधारं वाक्तत्त्वं व्याचक्षते[4] । वक्त्राऽभिव्यक्तस्य प्रतिभात्मनो ज्ञानस्य वाङ् माता भवति मनश्च पिता । उभयोः संयोगाद् नादात्मकः प्राणः प्रजायते[5] ।

छान्दोग्ये परमपुरुषस्य रसो वै वागिति व्याख्यातम् । तस्याश्च वाचो

---

१. यद्वै वाङ् नाभविष्यन्न धर्मो नाऽधर्मो व्यज्ञापिष्यन्न सत्यं नाऽनृतं न साधु नाऽसाधु न हृदयज्ञो, नाऽहृदयज्ञो, वागेव एतत् सर्वं विज्ञापयति, वाचमुपास्वेति ।(छांदो० उ०, ७।२।१)

२. न सोऽस्ति प्रत्ययो लोके यः शब्दाऽनुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ (वा० प०, १।१२३)

३. ···यद्विजृम्भते तद्विद्योतते, यद्विधूनते तत्स्तनयति ।
यन्मेहति तद्वर्षति वागेवाऽस्य वाक् ॥ (बृह० उप०, १।१।१)

४. वागेवातनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत । (बृह० उ०, ४।१।२)

५. पिता माता प्रजैत एव, मन एव पिता, वाङ् माता, प्राणः पुत्रः ।
(बृह० उप०, १।५।७। द्र० ऐत० आ०, ३।१।६)

रसभूता ऋगादिज्ञानराशयः[1] स्वीक्रियन्ते। अवश्यं हि विशिष्टेयं वागुपासनीया[2]। सर्वासां विद्यानां कलानां शिल्पादीनाञ्च बोधिकयाऽनया वाचा सर्वाण्यपि घटादिवस्तूनि प्रविभज्यन्ते—

सा सर्वविद्याशिल्पानां कलानाञ्चोपबन्धनी तद्वशादभिनिष्पन्नं सर्वं वस्तु विभज्यते[3]।' ऐतरेयसिद्धान्ते वाङ्मनसि मनश्च वाचि अन्योन्याश्रितम् अनुस्यूतञ्च सन्तिष्ठते[4]। उपनिषदामेतादृशं शब्दब्रह्म अभिमत्यैव भर्तृहरिराचार्यः सुस्पष्टमुक्तवान्।

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[5]॥

शतपथब्राह्मणे[6] ऐतरेयब्राह्मणे[7] ऐतरेयारण्यके[8] गोपथब्राह्मणे[9] च वाग् ब्रह्मत्वेन समाख्याता। एतादृशं वाचां ब्रह्मत्वसमाख्यानम् आतिदेशिकं विद्यते। अतएव गोपथब्राह्मणे होतृवद् ब्रह्मवच्च यज्ञप्रतिपादकत्वेन वाचः, प्राणापानयोः, चक्षुषः, मनसश्च ब्रह्मत्वं व्यपदिष्टम्[10]। यत एभिरपि यज्ञकर्माणि सम्पाद्यन्ते।

वाचो हि कश्चिद् विशिष्टो महिमा स्वीक्रियते[11]। अर्थतत्त्वेषु गद्यपद्यरूपेण प्रसरणाद् वागियं सरस्वतीति[12] उच्यते। वाचो बौद्धत्वाद् वाग् धियावसुः[13] स्वीक्रियते। अभिधेयरूपस्यार्थतत्त्वस्य विदारणाद् भेदनाद्वा वागिन्द्रो[14]

१. पुरुषस्य वाग्रसो वाच ऋग्रसः, ऋचः साम रसः, साम्नः उद्गीथो रसः। (छान्दो० उ०, १।२।२)
२. …वाचमुपास्वेति। (छा० उ०, ७।२।१)
३. वा० प०, १।१२५।
४. वाङ् मे मनसि प्रतिष्ठिता, मनो मे वाचि प्रतिष्ठितम्।
५. वा० प०, १।१।
६. वाग्वै ब्रह्म। तस्यै वाचः सत्यमेव ब्रह्म। (शत० ब्रा० २।१।४।१०)
७. वाग्घि ब्रह्म। (ऐत० ब्रा०, २।१५)
८. यत्र ह क्व च ब्रह्म, तद् ब्रह्म। यत्र वा वाक् तद् ब्रह्म इत्येतदुक्तं, भवति। (ऐत० आ०, १।५।२)
९. वाग्ब्रह्म (गो० ब्रा०, २।१०)
१०. …वागेव होता वाग् ब्रह्म…प्राणापानौ ब्रह्म…चक्षुर्ब्रह्म…मन एव ब्रह्म मनो ब्रह्म मनो देव इति। (गोपथ ब्रा०, २।१०)
११. वाग्वा अस्य स्वो महिमा। (शत० ब्रा० २।२।४।४)
१२. वाग्वै सरस्वती। (शत० ब्रा०, २।५।४।६)
१३. वाग्वै धियावसुः। (ऐत० ब्रा०, १।१।४)
१४. वाग्वा इन्द्रः। (कौ० ब्रा०, १३।५)

कथ्यते। अर्थप्रकाशने शब्दव्यापारेण इङ्गितादीनां वर्जनाद् वाग्वज्रोऽपि[1] समाख्यायते। सर्वप्रत्यायनसामर्थ्यवति शब्देऽभिधेयनियमसत्त्वाद् वाच्यन्तरतक्षणाद्वा वाक् त्वष्टा[2] भवति। इत्थमेव वाग् यज्ञः[3], राष्ट्री[4] शर्मेति च[5] व्यपदिष्टम्। अनादि निधनं हि शब्दतत्त्वं भवति। यथा समुद्रो न क्षीयते कदाचित्तथा वागपि क्षीणा न भवति। अतो वागपि समुद्रः[6] समाख्यातः।[7] प्राणो समुद्राख्यायां वाचि प्रविशति, तदा वाग् व्यक्ता भवति। स्वाऽभिव्यक्तये वाक् प्राणं प्रेरयति[7]। व्यक्तया वाचा व्यवहारः सम्पाद्यते[8]। इत्येवं वैशिष्ट्येन परिवृढत्वात्, सर्वदा व्यवह्रियमाणेऽपि अनुपक्षीयमाणत्वाच्च शब्दतत्त्वं ब्रह्मेत्याख्यां लभते।

---

१. वाग्घि वज्रः। (ऐत० ब्रा०, ४।१)
२. वाग्वै त्वष्टा, वाग्घीदं त्वाष्टीव। (ऐत० ब्रा०, २।४)
३. वाग्वै यज्ञः। (ऐत० ब्रा० ५।२४)
४. वाग्वै राष्ट्री। (ऐत० ब्रा०, १।१९)
५. वाग्वै शर्म। (ऐत० ब्रा०, २।४०)
६. वाग्वै समुद्रः। न वै वाक् क्षीयते। न समुद्रः क्षीयते। (ऐत० ब्रा०, ५।१६)
७. तावन्योऽन्यं रेळिहः। वाग्वै माता प्राणः पुत्रः। (ऐत० ब्रा० ३।१।६)
८. एकः समुद्रः स समुद्रमाविवेश, स इदं विश्वं भुवनं विचष्टे। (ऋक्सं०, १०।११४।४)

# शब्दकाण्डे पञ्चमः समुद्देशः

## अनुशासनीयः शब्दः

पतञ्जलिः पाणिनीयस्याऽस्य व्याकरणस्य साक्षात् प्रयोजनं शब्दानुशासनं[1] समाचष्ट। व्याकरणं नाम शब्दानां साध्वसाधुस्वरूपस्य निर्णायकं परिचायकं च भवति। व्याकरणमन्तरा शब्दस्यानपगतसंस्कारं साधुस्वरूपं न ज्ञायते[2]। व्याकरणमहत्त्वं चर्वयन् भर्तृहरिः तथ्यमिदमित्थं प्रादर्शयत्–

दुष्टान् शब्दान् मा प्रयुक्ष्महीत्यध्येयं व्याकरणम्। महाभा०



"तत्त्वाऽवबोधः शब्दानां नास्ति व्याकरणादृते[3]। भर्तृहरेराचार्यस्याऽयमस्ति आशयः। शब्दस्य रूपद्वयं संलक्ष्यते— १. शब्दत्वम्, २. साधुत्वञ्च। शब्दत्वस्य ग्रहणं तु श्रवणेन्द्रियेणैव भवति। परं शब्दस्य साधुत्वज्ञानं व्याकरणं विना न सम्भवति। अर्थावगतये शब्दप्रयोगाङ्गीकारो दृश्यते लोके[4]। अर्थावगतिश्च साधुशब्देनाऽसाधुशब्देन चापि सम्भवति। तत्र साधुशब्दैरेव स्वाभिप्रायो वेदयितव्यो नाऽसाधुशब्दैरिति पाणिनीयानां सिद्धान्तः[5]। एवञ्च 'साधवः शब्दा एवाऽत्राऽनुशासनीयाः, नाऽसाधवः शब्दा इति ज्ञायते। व्याकरण-प्रयोजनं व्याचक्षाणः पतञ्जलिराचार्यः अपशब्दं म्लेच्छं व्याजहार[6]. उच्चा-

१. अथ शब्दानुशासनम्। (अष्टा० महाभा० पस्प०)

२. साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।
अविच्छेदेन शिष्टानामिदं स्मृतिनिबन्धनम्॥ (वा० प० १।१४१)

३. वा० प०, १।१३।

४. अर्थपात्यर्थः शब्दप्रयोगः। (अष्टा० २।१।१, महाभा०)

५. शब्देनैवाऽर्थोऽभिधेयो नापशब्देनेत्येवं क्रियमाणमभ्युदयकारि भवतीति।
(अष्टा०, महाभा० पस्प०)

६. म्लेच्छो ह वा एष यदपशब्दः। म्लेच्छा मा भूमेत्यध्येयं व्याकरणम्।
(अष्टा० महाभा० पस्प०)

रणे म्लेच्छनं न स्यादित्येतदर्थमध्येयं व्याकरणमिति पतञ्जलेराशयः। स्वरवर्णादिभिरदुष्टानां शब्दानां प्रयोगो व्याकरणाऽध्ययनं विना न सम्भवति[1]। कोऽसावनुशासनीयः शब्दः ? यदर्थमिदं व्याकरणाध्ययनमावश्यकमिति अस्ति साम्प्रतमेष विचारणीयो विषयः।

अष्टाङ्गं व्याकरणं स्वीकुर्वाणो[2] भर्तृहरिरनुशासनीयस्य शब्दस्य द्वैविध्यं व्याचष्ट—

१. अन्वाख्येयाः। २. प्रतिपादकाश्च।

भर्तृहरिमते तत्र अर्थोऽपि द्विविधोऽभिमतः—

१. अपोद्धारपदार्थः। २. स्थितलक्षणपदार्थश्च।

शब्दार्थयोः सम्बन्धोऽपि द्विविधः स्वीकृतः—

१. कार्यकारणलक्षणः। २. योग्यतालक्षणश्च।

व्याकरणाऽध्ययनस्य प्रयोजनञ्चापि द्विविधं समाख्यातम्—

१. ज्ञानम्। २. धर्मश्च। एवञ्च व्याकरणस्येमानि अष्टाङ्गानि विद्यन्ते।

**अन्वाख्येयाः शब्दाः—**

अन्वाख्यायन्त इति व्युत्पत्तिनिमित्तात् पदानि वाक्यानि च अन्वाख्येयाः शब्दा उच्यन्ते। लघुनोपायेन प्रकृतिप्रत्ययकल्पनया सामान्यविशेषवल्लक्षणेन[3] च पदानि वाक्यानि च व्याकरणेन अन्वाख्यायन्ते। यद्यप्यत्र पाणिनीये सिद्धान्ते वाक्यस्फोट एव वास्तवो विद्यते। लोके च 'वृक्षः पतती'त्यादिवाक्येनैवाऽर्थावगतिः दृश्यते। वृक्षमात्रोच्चारणेन तदर्थावगतिर्न दृश्यते। वाक्ये पदानि वर्णाश्च कल्पिता एव। तथापि लघ्वर्थमिदं व्याकरणमिति[4] सिद्धान्ते, लघुनोपा-

१. दुष्टान् शब्दान् मा प्रयुक्ष्महीत्यध्येयं व्याकरणम्। (अष्टा० महाभा० पस्प०)

२. अपोद्धारपदार्था ये ये चाऽर्थाः स्थितलक्षणाः।
अन्वाख्येयाश्च ये शब्दा ये चाऽपि प्रतिपादकाः॥ वा० प०, १।२४,
कार्यकारणभावेन योग्यभावेन च स्थिताः।
धर्मे प्रत्यये चाङ्गं सम्बन्धाः साध्वसाधुषु॥ (वा० प०, १।२५)
स्मृत्यर्थमनुगम्यन्ते केचिदेव यथागमम्।
ते लिङ्गैश्च स्वशब्दैश्च शास्त्रेऽस्मिन्नुपवर्णिताः॥ (वा० प०, १।२६)

३. किञ्चित् सामान्यविशेषवल्लक्षणं प्रवर्त्यम्, येनाऽल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन्। (अष्टा० महाभा० पस्प०)

४. [illegible] व्याकरणम्। (अष्टा० महाभा० पस्प०)

पायेन प्रतिवाक्यं शक्तिग्रहस्य साधुत्वबोधस्य चाऽशक्यत्वाद् वाक्येभ्यः पदानि, पदेभ्यश्च प्रकृतिप्रत्ययानपोद्धृत्य प्रकृत्यर्थे प्रकृतेः, प्रत्ययार्थे च प्रत्ययस्य शक्तिः साधुत्वञ्च व्याकरणेन व्यवस्थाप्यते। एतद्द्वारा च पदार्थे पदस्य, वाक्यार्थे च वाक्यस्य शक्तिः साधुत्वञ्च सुग्रहमस्तीति अनुशासनलाघवाऽर्थमेतत् प्रकृतिप्रत्ययकल्पनं विद्यते, न तु तयोरन्वाख्येयत्वम्। प्रकृतिप्रत्ययप्रकल्पनद्वारा पदवाक्यान्वाख्यानम् एव शास्त्रकृतामाशयः। एवञ्च भर्तृहरिप्रतिपादिताऽन्वाख्येयपदेन पदवाक्ययोर्ग्रहणं युक्तम्। तात्त्विकदृष्ट्याऽखण्डेऽपि शब्दे व्यवहारसम्पादनार्थम् अनुशासनसौकर्यार्थञ्च पदभेदः स्वीक्रियते श्रवणविषयभूताया वैखर्या एव वाच एष विभागो बोध्यः। तत्त्वतः शब्दस्य सखण्डाऽवगमनं किञ्चिद् वैदुष्यं नास्ति[1]। यथा पदेषु प्रकृतिप्रत्ययभेदसमाख्यानं भवति तथा वाक्येभ्योऽपि पदानि अपोद्ध्रियन्ते[2]। अन्वयव्यतिरेकौ हि शब्दशास्त्रस्य सर्वव्यवहारप्रकृतिरित्युच्यते[3]। वाक्येषु पदप्रविभागः, पदेषु च प्रकृतिप्रत्ययप्रविवेकः अन्वयव्यतिरेकसमधिगम्य एव।

**प्रतिपादकाः शब्दाः—**

प्रतिपादकशब्देनाऽत्र प्रकृतिप्रत्ययौ स्वीकृतौ। स्वस्वरूपबोधनद्वारा प्रकृतिप्रत्ययौ पदानि प्रतिपादयतो व्युत्पादयतो वा। पदप्रतिपत्त्युपायत्वात् प्रतिपादकपदेन तयोर्ग्रहणमुचितम्। यद्यपीदं पदमपि वाक्यप्रतिपत्त्युपायोऽस्ति। पदमपि वाक्यं प्रतिपादयतीति प्रतिपादकशब्देन पदस्यापि ग्रहणं प्राप्नोति तथापि प्रतिपादकशब्देनेह प्रतिपाद्यत्वासमानाधिकरणस्य प्रतिपादकत्वस्य विवक्षितत्वात् प्रतिपादकशब्देन पदस्य ग्रहणं न भवति। पदस्य वाक्यप्रतिपादकत्वेऽपि प्रकृतिप्रत्ययाऽपेक्षया प्रतिपाद्यत्वसत्त्वात्। प्रकृतिप्रत्यययोस्तु कस्याप्यपेक्षया प्रतिपाद्यत्वं नास्ति, अपितु तयोः केवलं प्रतिपादकत्वमेव। एवञ्च प्रकृतिप्रत्यययोः प्रतिपाद्यत्वासमानाधिकरणस्य प्रतिपादकत्वस्य सत्त्वात् प्रतिपादकशब्देन तयोरेव ग्रहणम्।

यद्यपि पतञ्जलिराचार्यः क्वचिदपि अन्वाख्येयप्रतिपादकभेदेन अनुशासनीयं शब्दं न समगृह्णात्, तथापि 'अथ शब्दानुशासनम्[4]।' इति प्रतिज्ञाय

---

१. शब्दस्य न विभागोऽस्ति कुतोऽर्थस्य भविष्यति।
विभागैः प्रक्रियाभेदमविद्वान् प्रतिपद्यते॥ (वा० प०, २।१३)

२. यथा पदे विभज्यन्ते प्रकृतिप्रत्ययादयः।
अपोद्धारस्तथा वाक्ये पदानामुपवर्ण्यते॥ (वा० प०, २।१०)

३. अन्वयव्यतिरेकौ तु व्यवहारनिबन्धनम्। (वा० प० २।१२)

४. अष्टा० महाभा०, पस्प०।

अथ गौरित्यत्र कः शब्दः[1] ? इत्याशङ्कां समादधानः "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः[2]।" इत्यभिधानेन पतञ्जलिः पदवाक्ययोरनुशासनीयत्वममन्यतैव। पतञ्जलिना पदवाक्ययोरन्वाख्येयत्वमपि प्रतिपादितम्। लोके शब्दस्वरूपनिर्ग्रहं विना कश्चिदपि शाब्दो व्यापारो नाऽवलोक्यते। पतञ्जलिमते लौकिकप्रयोगं विना शब्दस्य रूपनिर्ग्रहो न सम्भवति। अस्य शब्दरूपनिर्ग्रहस्याधारः पदमुच्यते। यतो ह्यर्थाऽभिधाने पदस्यैव प्रयोगात्[3]। एवं ब्रुवाणस्य पतञ्जलेः पदस्य अन्वाख्येयत्वस्वीकृतिः दृश्यते।

"समर्थानां प्रथमाद्वा[4]।" इति सूत्रं भाषमाणः पतञ्जलिः कण्ठतो वाक्यस्याऽन्वाख्येयत्वं प्रास्तावीत्। सूत्रे वावचनं किमर्थमिति शङ्कां निराकुर्वाणो भाष्यकार एवमाह —

"नित्येषु शब्देषु वाक्यस्याऽनेन (वावचनेन) साधुत्वम् अन्वाख्यायते[5]।

अयमस्ति भाष्यकृतामत्राशयः—यद्यपि वृत्तिवाक्ययोरवान्तरार्थभेदोऽस्ति, तथापि प्रधानेऽर्थेऽभेदाद् वृत्तिवाक्ययोः समानार्थकत्वमभ्युपगम्यते। यथा 'राजपुरुषं प्रेषय' इत्युक्ते योऽर्थः प्रतिपत्त्रा प्रेष्यते, 'राज्ञः पुरुषं प्रेषय' इति वाक्ये प्रयुक्तेऽपि स एवाऽर्थः प्रेष्यते, न त्वन्यः कश्चित् परमत्र वृत्तिवाक्ययोः प्रवृत्तिनिमित्तैक्येऽपि वा वचनं विना समासवृत्त्या वाक्यस्य बाधः स्यात्। वाक्यस्य प्रयोगश्च प्रामादिकोऽसाधुर्वा कल्प्येत। यथा गोशब्देन गावीशब्दो निवर्त्यते। गावीशब्देनाऽधिकस्य स्त्रीत्वास्याऽवगतौ सत्यामपि जातिलक्षणस्याऽर्थस्याऽभिन्नत्वाद् गोशब्देन गावीशब्दप्रयोगो बाध्यते, तथैवाऽत्र वाक्यस्याऽपि समासेन बाधः स्यात्। अतो वाक्यस्य साधुत्वप्रतिपादनार्थं सूत्रे वावचनं कर्तव्यमिति भाष्यकृतो हृदयम्। 'यदत्राधिक्यं स वाक्यार्थः'[6] इति वाक्यार्थं परिचाययतः पतञ्जलेः वाक्यस्यान्वाख्येयत्वमेवाऽभिप्रेतम्।

'न पदान्तद्विर्वचनवरेयलोपस्वर-सवर्णा-नुस्वारदीर्घजश्चर्विधिषु'[7]। इति

---

१-२. अष्टा० महाभा०, पस्प०।

३. पदमर्थे प्रयुज्यते। विभक्त्यन्तञ्च पदम्। रूपश्चेहाऽश्रीयते। रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकप्रयोगम्। अष्टा०, १।२।६४ महाभा०।

४. अष्टा० ४।१।८२।

५. अष्टा० ४।१।८२, महाभा०।

६. अष्टा० २।३।४६, महाभा०।

७. [illegible]

पाणिनीयसूत्रस्थां काशिकावृत्तिं विवृण्वानो जैनेन्द्रबुद्धिपादाचार्यः पाणिनीयमिदं व्याकरणं पदसंस्काराय चेति स्वीकुरुते[1]। एतच्च स्वयं पाणिनिनाचार्येण 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः।'[2] इत्यादि सूत्रयता युष्मदाद्युपपदे मध्यमादिपुरुषविधानाद् वाक्यसंस्कारप्रयुक्तमपि एतच्छास्त्रमिति सूचितम्।

प्रकृतिप्रत्यययोश्चापि अनुशासनीयत्वं भाष्यकृतामभिप्रेतम्। प्रकृतिप्रत्ययविषये पतञ्जलिना एष सिद्धान्तः स्वीकृतो यद् नहि केवला प्रकृतिः प्रयोक्तव्या, न वा प्रत्ययमात्रमेव। सप्रत्यया प्रकृतिः प्रयोज्या, सप्रकृतिश्च प्रत्ययः[3]। एवञ्चाऽत्र पाणिनीये तन्त्रे चत्वारि लक्ष्याणि सन्ति—

१. वाक्यम्, २. पदम्, ३. प्रकृतिः, ४. प्रत्ययश्च। तान्यत्र क्रमशो विचार्यन्ते—

## १. वाक्यम्—

प्रसङ्गप्राप्तं पूर्वं वाक्यमत्र किञ्चित् परिचेतव्यम्। अर्थाभिधानं हि वाचामुद्देश्यं स्वीक्रियते। अर्थं सम्प्रत्याययिष्यामीति विचार्य प्रयोक्ता शब्दे प्रवर्तते। अस्मादेव पतञ्जलिराचार्यः अर्थनिमित्तकं शब्दं व्याचष्ट[4]। अर्थाभिव्यक्तिश्च वाक्येनैव सम्भवति न पदादिभिरिति आचार्याणां निष्कर्षो दृश्यते। 'वृक्ष' इत्यादिपदप्रयोगमात्रेण नहि कश्चिद् अभिधेयः प्रस्फुटो भवति, वाक्येन तु अर्थाऽवगतिर्भवतीति पूर्वमस्माभिः प्रतिपादितम्। संग्रहकारो व्याडिराचार्यः पदानामर्थो रूपञ्च वाक्यादेव सञ्जायत इति समाचष्ट[5]। किञ्चिदपि पदं क्वचिन्नियतरूपेण संस्थितं न भवति। अतो वाचामन्त्यावयवि वाक्यमेवेति वक्तुं शक्यते।

---

१. अष्टा० १।४।१०५।

२. किं पुनरिदं राजशासनम्—पदसंस्कारायैव व्याकरणं कर्तव्यमिति? अथ शास्त्रकारस्यैवाभिप्राय इति चेत्? न, शास्त्रकारेण हि 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः।' इति युष्मदाद्युपपदे मध्यमादिपुरुषविधानाद् वाक्यसंस्कारप्रयुक्तमपि शास्त्रमेतदिति सूचितम्। अष्टा०, १।१।५८, का० वृ० न्यासः।

३. यावता समयः कृतः, न केवला प्रकृतिः प्रयोक्तव्या नाऽपि केवलः प्रत्ययः।
अष्टा०, १।२।६४ महाभा०।

४. अर्थनिमित्तकेन नाम शब्देन भवितव्यम्। (अष्टा०, ७।१।३३, महाभा०)

५. नहि किञ्चित् पदं नामरूपेण नियतं क्वचित्।
पदानां रूपमर्थो वा वाक्यार्थादेव जायते॥
(व्याडिनाम्नोद्धृतः, वा० प०, १।२४ स्वो०)

एतस्य वाक्यस्य स्वरूपविषये विदुषां परस्परं महान् विवादो दृश्यते। भर्तृहरिः वाक्यस्वरूपविषयेऽष्टौ मतानि प्रास्तावीत्—

आख्यातशब्दः, सङ्घातः, जातिः सङ्घातवर्तिनी,
एकोऽनवयवः शब्दः, क्रमः, बुद्ध्यनुसंहृतिः[1]।
पदमाद्यं, पृथक्सर्व - पदं साकाङ्क्षमित्यपि,
वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायवादिनाम्[2]॥
तान्यत्र क्रमश उपस्थाप्यन्ते।

**(क) आख्यातशब्दो वाक्यम् —**

वाक्ये आख्यातस्य क्रियाया वा भवति प्राधान्यम्। अन्ये कारकशब्दाः क्रियाया एवाङ्गभावं प्रतिपद्यन्ते। शब्दबोधे च क्रियाया एव भवति प्राधान्यम्[3]। क्रिया एकाकिनी सत्यपि वाक्यार्थं वोढुं क्षमा भवति। 'मेघो वर्षती'ति प्रयोक्तव्ये वर्षतीति मात्रमपि प्रयुज्यते, वाक्यार्थश्च भासितो भवति। शब्दशास्त्रिभिराख्यातपदेन प्रायः क्रियाप्रधानत्वमर्थो लक्ष्यते। तेन 'देवदत्तेन शयितव्यमि'त्यादवतिङन्तेऽपि आख्यातशब्दत्वेन वाक्यत्वं स्वीक्रियते[4]। वाक्यस्वरूपं व्याचक्षाणः पतञ्जलिः 'सविशेषणमाख्यातं वाक्यं भवती'ति कस्यचनाचार्यस्य मतम् अन्ववदत्[5]। अव्ययकारकादीनि पदानि आख्यातस्यैव विशेषणभावं भजन्त इति तेषामाशयः। एकतिङ् वाक्यं ब्रुवाणः कात्यायनश्चापि आख्यातस्य वाक्यत्वं स्वीकुरुते[6]। वस्तुतः क्रियां विना वाक्यार्थपूर्तेरभावात् कारकादीनाञ्च क्रियाङ्गत्वात् तस्याः वाक्यत्वस्वीकारोऽन्यथा न प्रतीयते। आख्यातशब्दस्य वाक्यत्वं भर्तृहरिरित्थं वर्णितवान्—

आख्यातशब्दे नियतं साधनं यत्र गम्यते।
तदप्येकं समासार्थं वाक्यमित्यभिधीयते[7]॥

---

१. वा० प०, २।१।
२. वा० प०, २।२।
३. फलव्यापारयोः धातुराश्रये तु तिङः स्मृताः।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्॥ (वै० भू० का० १)
४. आख्यातेन च क्रियाप्रधानत्वं लक्ष्यते इत्यतिङन्तेष्वपि देवदत्तेन शयितव्यमित्यादिषु वाक्यत्वं सिद्ध्यति। अष्टा०, २।१।१, महाभा०, प्र०।
५. अपर आह—आख्यातं सविशेषणमित्येव। सर्वाणि ह्येतानि क्रियाविशेषणानि।
(अष्टा०, २।१।१, महाभा०)
६. एकतिङ्—अष्टा० २।१।१, वा०, १०।
७. वा० प० २।३२७।

अक्रियावाचकं पदं यदा क्रिया इवाचरति, स्वञ्चार्थं प्रतिपादयति तदा तत्पदमपि वाक्यजनकं जायते ---

वाक्यं तदपि मन्यन्ते यत्पदं चरितक्रियम् ।
अन्तरेण क्रियाशब्दं वाक्यादेव द्विदर्शनात्[1] ॥

**(ख) सङ्घातो वाक्यम् —**

अभिधानदृष्ट्या यद्यपि वाक्यमखण्डं भवति तथापि अनुशासनसम्पादनार्थं वाक्ये पदानि प्रकल्प्यन्ते । तेषां प्रकल्पितानां पदानां सङ्घातो वाक्यं भवति । वाक्यार्थे च पदार्थानामभिसम्बन्धो भासते[2] । यद्यपि पाणिनिना वाक्यस्वरूपं क्वचिन्न परिभाषितं तथापि सुबन्तस्य तिङन्तस्य च[3] पदत्वं व्याचक्षाणेन तेन पदचयस्य वाक्यत्वमनुमोदितम् । पदान्वाख्यानस्य पदसङ्घातस्य वाक्यत्वे एव तात्पर्यसम्भवात् । वाक्यं परिभाषमाणः कात्यायनः 'साव्ययं सकारकं सकारकविशेषणं सक्रियाविशेषणञ्च आख्यातं वाक्यं भवती'ति समाचष्ट[4] । तेनापि पदसङ्घातस्य वाक्यत्वं प्रतीयते । केवलस्य पदस्य योऽर्थोऽभिप्रेतः, वाक्येऽपि तत्पदस्य स एवार्थो भवति[5] । पदानां परस्परसम्बद्धानां यदाधिक्यमुपजायते संसर्गादि, शब्दतत्त्वविदः तं वाक्यार्थं व्याचक्षते[6] । अनेकपदसंश्रयस्य वाक्यत्वं पतञ्जलिनाऽपि प्रतिपादितम् । पतञ्जलिमते केवलस्यैकस्य पदस्य प्रयोगे सति प्रयोक्तुः कृत्स्नस्य भावस्य सुस्पष्टाऽभिव्यक्तिर्न भवति । वाक्ये पुनरुक्ते सर्वं निर्दिश्यते सर्वं चाऽभिव्यज्यते । वाक्यविषयकं स्वाऽभिप्रायं पतञ्जलिरित्थं वचनपथमानीतवान्—

"इहेदानीम्, देवदत्त ! गामभ्याज शुक्लाम् ।" इत्युक्ते सर्वं निर्दिष्टम्, देवदत्त एव कर्ता नान्यः, गौरेव कर्म नान्यत्, अभ्याजैव क्रिया नान्या, शुक्लामेव न कृष्णामिति[7] ।

---

१. वा० प० २।३२६ ।
२. पदार्थाऽभिसम्बन्धस्योपलब्धिर्भवति वाक्ये । अष्टा०, १।२।४५, महाभा० ।
३. सुप्तिङन्तं पदम् । (अष्टा०, १।४।१४)
४. आख्यातं साव्ययकारकविशेषणं वाक्यम् । अष्टा०, २।१।१ वा० ९ ।
५. केवलेन पदेनार्थो यावानेवाऽभिधीयते ।
वाक्यत्वं तावतोऽर्थस्य तदाहुरभिधायकम् ॥ वा० प०, २।४७ ।
६. सम्बन्धे सति यत्त्वन्यदाधिक्यमुपजायते ।
वाक्यार्थमेव तं प्राहुरनेकपदसंश्रयम् ॥ वा० प० २।४८ ।
७. अष्टा०, १।२।४५ महाभा० ।

पतञ्जलेरयमभिप्रायः — प्रवृत्तिनिमित्तस्य प्रवृत्तिनिमित्ताश्रयस्य वा सुस्पष्टाभिव्यक्तये पदसङ्घातरूपं वाक्यं प्रयुज्यते, अन्यथा प्रयोक्तुरभिप्रायस्याऽभिव्यक्तिर्न स्यादाहोस्वित् परस्परं साङ्कर्यं सम्भवेत्। सङ्घातरूपे वाक्ये प्रयुक्ते प्रयोक्तुः कृत्स्नोऽप्यभिप्रायः सुव्यक्तो भवति। 'देवदत्तः' इत्येतावन्मात्रोक्ते कर्ता निर्दिष्टो भवति, कर्मक्रियागुणौ च न निर्दिष्टौ। गाममित्येतावन्मात्रोक्ते कर्म पुनर्निर्दिष्टम्, परं कर्ताऽनिर्दिष्टः क्रियागुणावपि अनिर्दिष्टौ। 'अभ्याजे'त्येतावन्मात्रोक्ते च क्रिया निर्दिष्टा, कर्मादिकञ्चानिर्दिष्टम्। 'देवदत्त ! गामभ्याज शुक्लामिति' वाक्ये प्रयुक्ते तु न काचिद् अव्यवस्थितिः। सामान्येऽर्थे वर्तमानानां पदानामर्थविशेषेऽवस्थानं वाक्यार्थो भवति[1]। पदवाक्ययोरयमेव परस्पर भेदोऽस्ति। एतन्मताऽनुसारेण पदान्येव स्वं स्वमर्थं प्रतिपादयन्ति। पदार्था एव हि आकाङ्क्षादिवशात् परस्परसंसृष्टाः वाक्यार्थं



वाक्यार्थः सन्निविशते,
पदेषु सहवृत्तिषु।
यथा तथैव वर्णेषु,
पदार्थः सहवृत्तिषु॥

वा० प० ।२।६१।

जनयन्ति। वाक्यं वाक्यार्थो वा पदातिरिक्तमन्यन्नास्ति किञ्चिदिति स्वीकृत्य कैश्चिदाचार्यैः पदसङ्घातो वाक्यमित्यभ्युपगम्यते। यावद्भिः पदैरर्थाऽभिधानं सम्भवति तावतां पदानां प्रयोगं न्याय्यं मनुते पतञ्जलिः[2]। वर्णेषु यथा पदं सन्तिष्ठते तथा सहवृत्तिषु पदेषु वाक्यार्थोऽपि सन्निविशत इति भर्तृहरिः समाचष्ट[3]। पदसमूहस्य वाक्यत्वं न्यायसूत्रं भाषमाणेन वात्स्यायनेन[4] प्रतिपादितम्।

---

१. एतेषां पदानां सामान्ये वर्तमानानां यद्विशेषेऽवस्थानं स वाक्यार्थः।
अष्टा० १।२।४५, महाभा०।

२. यावतामर्थानामभिधानं भवति तावतां शब्दानां प्रयोग इत्येष पक्षो न्याय्यः।
अष्टा०, १।२।६४ महाभा०।

३. वाक्यार्थः सन्निविशते पदेषु सहवृत्तिषु।
यथा तथैव वर्णेषु पदार्थः सहवृत्तिषु॥ वा० प०, २।६१।

४. पदसमूहो वाक्यमर्थपरिसमाप्तौ। न्या० द०, २।१।५४, वा० भा०।

**(ग) जातिः सङ्घातवर्तिनी वाक्यम्—**

अर्थाऽभिधायकदृष्ट्या स्फोटो द्विविधो भवति—१. आभ्यन्तरः, २. बाह्यश्च। तत्र बाह्योऽपि स्फोटो द्विविधः स्मर्यते। १. जातिस्फोटः, २. व्यक्तिस्फोटश्च। तत्र जातिलक्षणं बाह्यं स्फोटं संलक्ष्य वाक्यविषयकं जातिः सङ्घातवर्तिनीति मतं प्रवृत्तम्। सर्वस्यापि वस्तुजातस्याद्यप्रत्यक्षे जनस्य निर्विकल्पात्मकं ज्ञानं जायते। तत्र पूर्वं वस्तुमात्रात्मकं ज्ञानं भवति। तत्तद्वस्तुविषयको बोधस्तु पश्चाद् भवति। यदा वस्तुज्ञानेन सह प्रतिपत्तुः पूर्वज्ञातस्य ज्ञानस्य साङ्कर्यं भवति तदा सविकल्पात्मकं ज्ञानं जायते। पूर्वं केनचिद् गोवस्तु दृश्यते। पश्चात् 'सास्नादिमानर्थो गौरुच्यत' इति पूर्वज्ञातं स्मर्यते। ततो गोपदार्थोऽयमिति ज्ञायते। एवमेव पदेषु श्रुतेष्वपि पूर्वं श्रुतिसंवेदनामात्रं जायते। तदेव वाक्यम्। तच्च पदसङ्घातवर्तिनोऽर्थैकस्य वाचकम्। पदेषु तत्र एकत्वबोधिका पदसङ्घातवर्तिनी आकृतिः सन्तिष्ठते। तस्या एव वाक्यत्वं केचन स्वीकुर्वते। पदभेदाऽवगतिस्तु तत्र पश्चाद् भवति। यथाद्य चित्रदर्शने व्यक्तिनिरपेक्षा आकृतिमात्रात्मिका एका दृष्टिसंवेदना भवति, व्यक्तिविशेषबोधस्तत्र पश्चाज्जायते। एवं शब्देष्वपि श्रुतेषु पदसङ्घातवर्तिनी एकात्मिकाऽवगतिर्भवति[1]। चक्रादीनां भ्रमणे विशिष्टप्रयत्नजेन आक्षेपविशेषेण आवृत्तिभिः कर्मजातिः गृह्यते। न तत्र प्रतिभ्रमणं भेदः प्रतीयते। तथा वर्णवाक्यपदेष्वपि स्थानकरणाभिघातलक्षणाऽपि वाक् पदसङ्घातवर्तिन्या जात्याः प्रत्यायिका भवति[2]।

एतदेवमप्यवगन्तुं पार्यते। यथाऽसौ कच्छपोऽङ्गप्रत्यङ्गसङ्कोचनपूर्वकं स्वस्मिन्नेकात्मकः सन्तिष्ठते, यथा वा मयूरादयः पूर्वमङ्गप्रत्यङ्गादीनामुपसंहारेण लीनाः सूक्ष्मरीत्या तदुत्पादनशक्त्या सह रसभावमापन्नाः स्वस्मिन्नण्डेषु संतिष्ठन्ते एवं पदसङ्घातवर्तिन्यां जातावपि पदानि विलीयन्ते। तस्या एव च वाचकत्वं स्वीक्रियते। सङ्घातवर्तिनीं जातिमाश्रित्यैव भर्तृहरिः शब्दम-

१. यथैक एव सर्वार्थः प्रकाशः प्रविभज्यते।
दृश्यभेदानुकारेण वाक्यार्थाऽनुगमस्तथा ॥ वा० प०, २।७।
चित्रस्यैकस्वरूपस्य यथा भेदनिदर्शनैः।
नीलादिभिः समाख्यानं क्रियते भिन्नलक्षणैः ॥ वा० प०, २।८।

२. यथाक्षेपविशेषेऽपि कर्मभेदो न गृह्यते।
आवृत्तौ व्यज्यते जातिः कर्मभिर्भ्रमणादिभिः ॥ वा० प० २।२०।
वर्णवाक्यपदेष्वेवं तुल्योपव्यञ्जना श्रुतिः।
अत्यन्तभेदो तत्त्वस्य सरूपेव प्रतीयते ॥ वा० प०, २।२१।

विभक्तं समाचष्टे[1]। वाक्यात्मके शब्दे पदविभागः केवलं प्रक्रियानिर्वाहाय एवाऽभ्युपगतः। समासस्थले यथा पदैकदेशस्य नैरर्थक्यं स्वीक्रियते तथा पद-सङ्घातरूपे वाक्येऽपि वाक्यैकदेशस्य पदस्य नैरर्थक्यमेव, पदैः समुदितैरेकस्या-ऽर्थस्य प्रतिपादनात्[2]।

(घ) एकोऽनवयवः शब्दो वाक्यम्—

व्यक्तिलक्षणं वाह्यं स्फोटं संलक्ष्य वाक्यविषयकम् एकोऽनवयवः शब्दो वाक्यमित्येतन्मतं प्रवृत्तम्। अनुशासनसौविध्यार्थम् एव वाक्ये पदविभागः स्वीकृत इत्यस्माभिरनेकत्र प्रतिपादितम्। वस्तुतः सम्प्रत्ययनिमित्ता वागेकैव भवति। सा च वाक्यात्मिका विद्यते। तत्राऽवयवकल्पनं नास्ति तात्त्विक-मित्येतस्य मतस्याऽभिप्रायः। अक्रमस्य बौद्धस्य वाक्यस्याऽभिव्यक्तये एव ध्वन्यात्मक औपचारिकः क्रमवान् शब्दः प्रयुज्यते[3]। एतन्मताऽनुसारेण वाक्ये पदस्य पदार्थस्य चोपस्थितिरतात्त्विकी स्वीक्रियते। ध्वन्यात्मकाः शब्दा अनवयवाः सन्तः एकवृन्तावलम्बिफलद्वयन्यायेन वाक्यार्थं प्रतिपादयन्ति वाक्यञ्च जनयन्ति। यद्यप्यत्र मते ध्वन्यात्मकाः शब्दाः परस्परमनवयवास्त-थापि एकस्मिन् विशिष्टे वाक्यार्थे ते संहता एव भवन्ति। यथा तदर्थेन गुणेन गुणिनोऽर्थभावः स्वीक्रियते लोके तथाऽत्राऽपि अनवयवेन पदेनाऽवयविनो वाक्यस्याऽङ्गभावोऽभ्युपगम्यते। तद्यथा—त्वक्त्राणेऽसमर्थ एकस्तन्तुः, परं तत्समुदायः कम्बलः समर्थो भवति। उदरपूर्तावेकस्तण्डुलोऽसमर्थो भवति। तण्डुलसमुदायश्च भवति क्षुत्प्रतिघाते समर्थः। तथैवाऽत्र अनवयवेषु पदेष्वपि बोध्यम्।

(ङ) शब्दक्रमो वाक्यम्—

वाग्विषयकं खण्डपक्षमभिप्रेत्य शब्दक्रमस्य वाक्यत्वमतं स्वीकृतम्। अत्र मते शब्दत्वम् अर्थवाचकता च क्रमेष्वेवाऽनुगम्येते। पदानामर्थद्वयं दृश्यते, १. स्वार्थः, २. विशिष्टार्थश्च। पदानां स्वार्थस्तु कदाचिदप्यवगन्तुं शक्यते,

---

१. शब्दस्य न विभागोऽस्ति कुतोऽर्थस्य भविष्यति।
विभागैः प्रक्रियाभेदमविद्वान् प्रतिपद्यते॥ वा० प० २।१३।

२. ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले।
देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः॥ वा० प० २।१४।

३. अव्यक्तः क्रमवान् शब्द उपांश्वयमधीयते।
अक्रमस्तु वितत्येव बुद्धिर्यत्राऽवतिष्ठते॥ वा० प०, २।१९।

परं क्रमाऽनुसारपदसंस्थापनं विना पदानां विशिष्टाऽर्थो नाऽभिव्यज्यते[१]। 'यवागूर्भवता भोक्तव्या न वा' इत्यत्र यदा यवागूशब्दो भुजिना सम्बध्यते, भुजिश्च नवा-शब्देन, तदा प्रतिषेधवाचिनो नवा शब्दस्य सम्प्रत्ययो भवति। यदा तु न-वा-शब्दो यवागूशब्देन सम्बध्यते न तु भुजिना तदा प्रत्यग्रवाचिनो नवाशब्दस्य सम्प्रत्ययो भवति, 'यवागूर्नवा भवता भोक्तव्येति[२]।' अर्थवैशिष्ट्यमेतच्छब्दक्रमबलादेवावगम्यते। निश्चितक्रमगता वर्णाः पदं कथ्यते, निश्चितक्रमगतानि च पदानि वाक्यं भवति। च्युतक्रमाणि पदानि वाक्यं जहति, च्युतक्रमाश्च वर्णाः पदात् परित्यज्यन्ते—

वर्णानाञ्च पदानाञ्च क्रममात्रनिवेशिनी।
पदाख्या वाक्यसञ्ज्ञा च शब्दत्वं नेष्यते तयोः[३]॥

क्रमो हि कालस्य धर्मो भवति[४]। शब्दक्रमे निश्चितकालातिरिक्तकालव्यवायेन क्रमो विनश्यते। क्रमनाशे च वाक्यं स्वतो भिद्यते। अतः शब्दक्रमो वाक्यमित्यभ्युपगम्यते।

## (च) बुद्ध्यनुसंहृतिः वाक्यम्—

अर्थाऽभिधानदृष्ट्या स्फोटस्य द्वैविध्यमस्माभिः पदसङ्घातवर्तिन्या जातेः वाक्यत्वप्रतिपादनाऽवसरे प्रतिपादितम्—१. आन्तरस्फोटः, २. बाह्यस्फोटश्च, तत्र आन्तरं स्फोटमभिलक्ष्य बुद्ध्यनुसंहृतेर्वाक्यत्वं स्वीक्रियते[५]। प्रयोक्तृप्रतिपत्तृबुद्धिद्वयस्य तादात्म्यं नाम शब्दव्यापारस्य परिणामो भवति[६]। एतत् संलक्ष्यैव च पतञ्जलिः सम्प्रत्ययनिमित्ताया वाचः शब्दत्वं समाचष्ट[७]।

---

१. सन्त एव विशेषा ये पदेषु समवस्थिताः।
ते क्रमादनुगम्यन्ते न वाक्यमभिधायकम्॥ वा० प० २।४९।

२. अपि चास्त्र कामाचारः प्रयोक्तुः शब्दानामभिसम्बन्धे। तद्यथा 'यवागूर्भवता भोक्तव्या न वा।' यदा यवागूशब्दो भुजिना सम्बध्यते, भुजिर्न वा शब्देन तदा प्रतिषेधवाचिनः सम्प्रत्ययो भवति,…यदा तु यवागूशब्दो नवा-शब्देन सम्बध्यते, न भुजिना, तदा प्रत्यग्रवाचिनः सम्प्रत्ययो भवति। (अष्टा०, १।१।४४ महाभा०)

३. वा० प०, २।५३।

४. क्रमो हि धर्मो कालस्य तेन वाक्यं न भिद्यते। वा० प०, २।५१।

५. आभ्यन्तरस्य तु बुद्ध्यनुसंहृतिरित्यनेनोद्देशः। वा० प० २।२। पुण्य०।

६. भोजनाद्यपि मन्यन्ते बुद्ध्यर्थे यदसंभवि।
बुद्ध्यर्थादेव बुद्ध्यर्थे जाते तदपि दृश्यते॥ वा० प०, ३।३।३३।

७. येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः।
अष्टा० महाभा०, पस्प०।

शब्दो बुद्ध्यर्थादुत्पद्यते बुद्ध्यर्थे च लीयते। परिकल्पितमर्थं विवक्षुर्वक्ता शब्दान् प्रयुङ्क्ते, श्रोता च तैः प्रयुक्तैः शब्दैः वक्तृबुद्धिं प्रतिपद्यते। अर्थाच्छ्रोता प्रयुक्तशब्दसाहाय्येन वक्तृबुद्धिमधिगच्छति। अतो बुद्ध्यनुसंहृतिः वाक्यमिति वाक्यविषयकं मतं स्वीकृतम्। अन्तःशब्दतत्त्वमेव नादैः प्रकाशितं सत् प्रत्ययजनकं भवति। तदेवाऽनवयवं बोधस्वभावं शब्दार्थमयमन्तःशब्दतत्त्वं वाक्यमुच्यते[1]। वाक्यमिव वाक्यार्थोऽपि अखण्ड एव भवति, अत्र मते शब्दार्थावभिन्नौ स्वीक्रियेते[2]।

## (छ) पदमाद्यं वाक्यम्–

पदमाद्यं वाक्यमिति मतं मन्वानानां राद्धान्ते वक्तुरभिप्रायः वाक्यस्य प्रथमपदेनैवाऽभिव्यज्यते, अतस्तस्यैव वाक्यत्वमिति स्वीक्रियते। आद्यपदेनाऽत्र कर्तृकर्मादिकारकयुक्तं यत्किञ्चिदपि पदं ग्रहीतुं शक्यते। तदनन्तरञ्चाऽन्यानि पदानि वक्तुर्विवक्षां वोढुं प्रयुज्यन्ते। 'देवदत्त ! गामभ्याज शुक्लामिति' प्रयोगे 'गां वधाने'त्यस्माद् विशिष्टमेव देवदत्तपदं वक्त्रा समुदीरितम्। गवादिपदसम्बन्धेन विशिष्टा प्रतिपत्तिः तेनाद्येन पदेनाऽभिव्यज्यते। तेनैव चाकाङ्क्षादिवशात् प्रतिपत्तारो वाक्यार्थमवगच्छन्ति[3]। आद्ये पद एव कृत्स्नस्य वाक्यार्थस्य समाप्तिः स्वीक्रियते। आद्यपदानन्तरं समुदीरिताः पदविशेषास्तु आद्येन पदेन प्रतीतस्य वाक्यार्थस्यैवाऽभिव्यञ्जका भवन्ति[4]।

अयमत्राऽभिप्रायः—यथा कश्चिद् ग्रन्थकारो ग्रन्थं प्रणिनीषुः प्राग् विषयभूमिं संस्थापयति। सा एव ग्रन्थो भवति। अन्यत्तु तस्या एव परिगुम्फनं जायते। यथा वा कश्चिच्छिल्पी भवनं निर्मातुमनाः प्रागाधारशिलां संस्थापयति, सा एव च भवनं जायते। अग्रे तु आधारशिलायां परिकल्पितस्यैव भवनस्य विकासो भवति। तथैवाऽत्राऽपि वक्तुर्विवक्षायां सत्यामाद्ये पदे एव कृत्स्नोऽभिप्रायः सन्निविशते। तस्यैव च वाक्यत्वम्। पश्चात्तु प्रकरणादिना

---

१. यदन्तः शब्दतत्त्वं तु नादैरेकं प्रकाशितम्।
तदाहुरपरे शब्दं तस्य वाक्ये तदैकता॥ (वा० प०, २।३०).

२. अर्थभागैस्तथा तेषामान्तरोऽर्थः प्रकाश्यते।
एकस्यैवात्मनो भेदो शब्दार्थावपृथक्स्थितौ॥ (वा० प०, २।३१।)

३. विशेषशब्दाः केषाञ्चित् सामान्यप्रतिरूपकाः।
शब्दान्तराऽभिसम्बन्धाद् व्यज्यन्ते प्रतिपत्तृषु॥ (वा० प०, २।१७)

४. तेषां तु कृत्स्नो वाक्यार्थः प्रतिभेदं समाप्यते।
व्यक्तोपव्यञ्जना सिद्धिरर्थस्य प्रतिपत्तृषु॥ (वा० प०, २।१८)

प्रयुक्तान्यपदेन च तस्यैवाऽर्थस्याऽभिव्यञ्जना भवति। अतः पदान्तराणां वाक्ये वैयर्थ्यं न भवति। 'द्वारमि'त्युक्ते प्रकरणादिवशाद् 'बधान' 'देहि' वेति अनुगम्यते। अतो द्वारमित्यस्य आद्यस्य पदस्य वाक्यत्वमित्यभिप्रायः।

तदाह भर्तृहरिः—

> यथा प्रकरणं द्वारमित्यस्यां कर्मणः श्रुतौ।
> 'बधान' देहि वेत्येतदुपायादधिगम्यते[1]॥

वस्तुतः पक्षोऽयं दोषमुक्तो नाऽस्ति। किञ्चिदपि पदं स्वरूपमात्रेणाऽर्थ-बोधकं न भवति। शब्दार्थाऽवगमनार्थं हि प्रकरणज्ञानम्, औचित्यबोधः, देशकालादिपरिज्ञानञ्च नितान्तमपेक्ष्यते। प्रकरणादिज्ञानं विना 'द्वारमि'-त्युक्तेऽपि 'बधान' 'देहि' वेति सन्देहः स्यादेव। प्रकरणादिज्ञानं विना तु कृत्स्न-वाक्यश्रवणानन्तरमपि अर्थाऽवगतिर्न दृश्यते। सैन्धवमानयेति वाक्ये श्रुतेऽपि प्रकरणादिज्ञानहीनेन 'अश्व आनेयः, लवणं वेति' सन्दिह्यत एव। यद्येकेन पदेन सकलवाक्यार्थस्याऽवगतिः स्यात्तदोत्तरेषां पदानामुच्चारणं नियमायाऽनु-वादाय वा स्वीक्रियेत, न चैवं स्वीक्रियेत। एकस्मात् पदात् समस्तविशेष-खचितस्य वाक्यार्थस्य प्रतीतावन्येषां पदानां वैयर्थ्यं सुस्पष्टमेव। अस्मादेव पुण्यराजो वाक्यविषयकं पक्षमिमं दुष्टं व्याचष्ट[2]।

## (ज) पृथक् सर्वपदं साकाङ्क्षं वाक्यम् —

वाक्यविषयकमन्तिममेतन्मतं विद्यते। अत्र मते वाक्ये प्रयुक्तानां पदानां पार्थक्येन संस्थितिः स्वीक्रियते। परं सर्वाणि पदानि साकाङ्क्षाणि भवन्ति। वाक्ये गृहीतानि पदानि परस्परं सम्बद्धानि भवन्ति। एकमपि पदं विना वाक्यार्थो भिद्यते। यावद्भिरपि पदैः वाक्यार्थाऽवगतिः सम्भवति तावतां पदानां प्रयोगो वाक्यं भवति। प्रत्येकपदस्य नैजोऽर्थो भवति, तेषां समुदायो हि वाक्यार्थो भवति। "यावतामर्थानामभिधानं भवति तावतां शब्दानां प्रयोग इत्येष पक्षो न्याय्यः[3]।"

क्रियायां गुणभूतं कारकपदं पदान्तरमाकाङ्क्षति। प्रधानभावेन संस्थितं

---

१. वा० प०, २।३३४।

२. दूषणान्यस्याऽग्रे तत्र तत्राऽभिधास्यति। वा० प०, २।१८, पुण्य०।

३. अष्टा०, १।२।६४, महाभा०।

च क्रियापदं वाक्ये कारकपदान्यपेक्षत इति साकाङ्क्षं सर्वपदं भवति वाक्यम्।[1] शब्दशक्तिप्रकाशिकायां जगदीश एतादृशमेव वाक्यस्वरूपं निर्दिदेश—

मिथः साकाङ्क्षशब्दस्य व्यूहो वाक्यं चतुर्विधम्।[2]

साहित्यदर्पणकारो विश्वनाथोऽपि एतद् वाक्यस्वरूपमनुमनुते—

"वाक्यं स्याद् योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः।[3]"

## अष्टानां मतानां विश्लेषणम्

शब्दस्वरूपनिरूपणायामस्माभिः शब्दस्य स्वरूपद्वयं प्रतिपादितम्—१. व्यावहारिकं शब्दस्वरूपम्, २. आपातात्त्विकञ्च शब्दस्वरूपम्। तत्र व्यवहारसम्पादनार्थम् अनुशासनप्रक्रियानिर्वाहार्थञ्च प्रथमं शब्दस्वरूपमभ्युपगतम्, शब्दस्य आन्तरं वास्तविकञ्च शब्दस्वरूपमवगन्तुमपरम्। शब्दविषये शब्दतत्त्वविदां पक्षद्वयं दृश्यते, १—अखण्डपक्षः, २—खण्डपक्षश्च। अखण्डपक्षं स्वीकृत्याऽनवयवमविभक्तमान्तरं स्फोटात्मकं शब्दस्वरूपं स्वीक्रियते। खण्डपक्षञ्चाश्रित्य ध्वन्यात्मकं व्यावहारिकं शब्दस्वरूपं स्वीक्रियते।

उपरि वर्णितेषु वाक्यविषयकेषु अष्टसु मतेषु एष एवाभिप्रायो दृश्यते। तत्र कानिचिद् वाक्यविषयकमतानि अखण्डपक्षाधृतानि, कानिचिच्च खण्डपक्षाधृतानि। अखण्डवाक्यवादिभिः पदवादः काल्पनिकः समाख्यातः, खण्डपदवादिभिश्च अखण्डं वाक्यं काल्पनिकमाख्यातम्[4]। उभयत्रापि पक्षे स्वपक्षपरिपोषणे 'संहिता पदप्रकृतिः'[5] इति ऋक्प्रातिशाख्यसूत्रं समुपस्थाप्यते, स्वपक्षानुकूलञ्च व्याख्यायते सूत्रमिदम्। 'पदस्य प्रकृतिरिति' षष्ठीतत्पुरुषेण पदप्रकृतिः संहितेति अखण्डवादिभिः सूत्रमिदं व्याख्यायते।[6] प्रकृतिपदमत्र कारणार्थकम्। एवञ्च संहिता एव पदकारणं भवति। खण्डमतवादिभिस्तु सूत्रमिदमन्यथैव व्याख्यायते। तैर्हि सूत्रगते पदप्रकृतिपदे बहुव्रीहिसमासः स्वीक्रियते। 'पदानि प्रकृतिः, कारणं यस्याः संहितायाः' इति पदप्रकृतिरिति

१. गुणभावेन साकाङ्क्षं तत्र नाम प्रवर्तते।
साध्यत्वेन निमित्तानि क्रियापदमपेक्षते॥ वा० प० २।४८।

२. श० श० प्र०, श्लो० १३।

३. सा० द०, २।१।

४. अभेदपूर्विका भेदाः कल्पिता वाक्यवादिभिः।
भेदपूर्वानभेदांस्तु मन्यन्ते पददर्शिनः॥ वा० प०, २।५८।

५. ऋ० प्रा०, २।१।

६. तत्र पदानां प्रकृतिः, कारणं पदप्रकृतिः संहितेत्यखण्डपक्षः। वा० प०, २।१। पुण्य०।

व्याख्यानेन खण्डपक्षोऽपि अनेन सूत्रेण ज्ञाप्यते ।[१] पदानां च असत्यत्वात् तत्कारणिका संहिताऽपि असत्येति खण्डवादिनो व्याचक्षते । भर्तृहरिणा एतस्य प्रातिशाख्यसूत्रस्य व्याख्याभेदमिमं समुपस्थाप्य खण्डपक्षोऽखण्डपक्षश्च वाक्यविषयकः प्रतिपादितः[२] । यथाप्रसङ्गमत्रोक्तानां वाक्यमतभेदानां विभाजना समुपस्थाप्यते ।

**(अ) अखण्डपक्षः—**

अखण्डवाक्यपक्षः पाणिनीयानामाचार्याणां सिद्धान्तो विद्यते । कृत्स्ना वक्तृबुद्धिः शब्दद्वारेण श्रोतृबुद्धिः सञ्जायते । नहि तत्र कश्चिद् भेदः सम्भवति । पदेषु वर्णभेदाः वाक्येषु च पदभेदा औपचारिका एव न तु वास्तविकाः ।

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।
वाक्यात्पदानामात्यन्तं प्रविवेको न कश्चन[३] ।।

वाक्यविषये विवदमानेषु मतत्रयमखण्डपक्षाऽनुसारेण संलक्ष्यते ।[४] तत्र—

१. सङ्घातवर्तिनी जातिर्वाक्यम् ।
२. एकोऽनवयवः शब्दो वाक्यम् ।
३. बुद्ध्यनुसंहृतिर्वाक्यञ्चेति मतानि अखण्डपक्षाऽभिमतानि सन्ति ।

प्राकृतवैकृतध्वनिजन्यो नाद एव शब्दव्यपदेशं न लभते । अन्तःस्थितां प्रयोगभावनामादायैव ध्वनिना शब्दोऽभिव्यज्यते । तस्या भावनाया एकत्वाद् अखण्डपक्षोऽभ्युपगम्यते । तत्त्वतः शब्दोऽर्थश्चाऽखण्ड एव विद्यते । प्रक्रियानिर्वाहाय स्वीकृतस्य पदभेदस्य वास्तविकत्वकल्पनं भर्तृहरिमते अवैदुष्यमेवाऽस्ति ।[५] व्यवहारनिबन्धना एव भेदा न तु वास्तविका इति भर्तृहरेरभिप्रायः । यद्यपि व्याकरणेन प्रत्यक्षतः पदान्येव संस्क्रियन्ते न वाक्यम्, तथापि 'स्तः' इत्यादौ व्याक्रियमाणे

१. पदानि प्रकृतिः यस्याः सेति खण्डपक्षः प्रादुर्भवति । वा० प० २।१, पुण्य० ।
२. पदप्रकृतिभावश्च वृत्तिभेदेन वर्ण्यते ।
पदानां संहिता योनिः, संहिता वा पदाश्रया ।। वा० प०, २।५९ ।
३. वा० प०, १।७३ ।
४. तत्राखण्डपक्षे जातिः सङ्घातवर्तिनी एकोऽनवयवः शब्दो बुद्ध्यनुसंहृतिरिति त्रीणि लक्षणानि । वा० प०, २।१-४, पुण्य० ।
५. शब्दस्य न विभागोऽस्ति कुतोऽर्थस्य भविष्यति ।
विभागैः प्रक्रियाभेदमविद्वान् प्रतिपद्यते ।। वा० प०, २।१३ ।

'कौ' इत्यादेः पदस्य सन्निधानमविरुद्धम् । 'कौ स्तः' इति समुदितेनैव सुस्पष्टमर्थाऽवगमसम्भवात्तस्यैव वास्तविकमनुशासनम् । अखण्डपक्षस्था वाक्यभेदाः स्फोटं संलक्ष्य स्वीकृता इति तेषां स्वरूपनिरूपणाप्रसङ्गेऽस्माभिः प्रतिपादितम् । आभ्यन्तरं स्फोटं संलक्ष्य बुद्धयनुसंहृतिवाक्यपक्षः, जातिलक्षणं बाह्यं स्फोटमभिप्रेत्य सङ्घातवर्तिनी जातिवाक्यपक्षः, व्यक्तिलक्षणं बाह्यस्फोटञ्चाश्रित्य एकोऽनवयवशब्दवाक्यपक्षोऽभ्युपगतः ।[1]

**(आ) खण्डपक्षः —**

शब्दस्य ध्वन्यात्मकं व्यावहारिकं स्वरूपमाधृत्य वाक्यविषयकः खण्डपक्षोऽभ्युपगतः । खण्डवाक्यपक्षे वाक्यं सखण्डं सावयवञ्च भवति । पृथक् पृथक् पदेषु वाक्यं प्रविभक्तं जायते । परिगणितेषु वाक्येषु पञ्चवाक्यानि खण्डवाक्यपक्षाऽनुसारेण संलक्ष्यन्ते । तत्र—

१. आख्यातशब्दो वाक्यम्, २. सङ्घातो वाक्यम् ।
३. शब्दक्रमो वाक्यम्, ४. पदमाद्यं वाक्यम् ।

५. साकाङ्क्षं पृथक्सर्वपदं वाक्यञ्चेति खण्डवाक्यपक्षस्थानि वाक्यानि सन्ति । पुण्यराज इमान्येव पञ्च वाक्यानि खण्डपक्षाऽनुसारीणि पर्यगणयत् ।[2]

अनुशासनलक्षणेऽस्मिन् व्याकरणे वाक्यस्याऽन्त्यावयवः पदं स्वीक्रियते । तत्रैव प्रकृतिप्रत्ययादिपरिकल्पनेनाऽनुशासनसम्भवात् । स्वयं पाणिनिना 'स्वं रूपं शब्दस्याऽशब्दसंज्ञा ।'[3] 'सरूपाणामेकशेष एकविभक्तौ ।'[4] 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ।'[5] 'सुप्तिङन्तं पदम्'[6] इत्यादिसूत्रप्रणयनेन खण्डवाक्यवादिनां पक्षोऽयं प्रतिपादितः । परमत्रैतद् न विस्मर्तव्य कदाचिद् यदत्र पाणिनीये तन्त्रे प्रक्रियानिर्वाहार्थमेव पदपरिकल्पनं विद्यते । लघुनोपायेन वाचाम् अनुशासनार्थं पदान्यत्र स्वीक्रियन्ते । परमार्थतस्तु अखण्डैकवाक्यपक्ष एवाऽस्ति सिद्धान्तः ।

---

१. तत्र जातिलक्षणस्य जातिः सङ्घातवर्तिनीति, व्यक्तिलक्षणस्य एकोऽनवयवः शब्द इति, आभ्यन्तरस्य तु बुद्धयनुसंहृतिरित्यनेनोद्देशः । वा० प०, २।१-२ पुण्य० ।

२. खण्डपक्षे तु आख्यातशब्दः, क्रमः, सङ्घातः, पदमाद्यं, पृथक्सर्वपदं साकाङ्क्षमिति पञ्चलक्षणानि । वा० प०, २।१-२ पुण्य० ।

३. अष्टा०, १।१।६८ ।

४. अष्टा०, १।२।६४ ।

५. अष्टा०, १।२।४५ ।

६. अष्टा०, १।४।१४ ।

खण्डवाक्यवादिनामिमान्येव मतानि समाश्रित्य, १. अभिहितान्वयवादः, २. अन्विताऽभिधानवादश्चेति, पक्षद्वयं प्रवृत्तम् । अस्मिन्नेव पक्षद्वये पञ्चाऽपि खण्डवाक्यानि सन्निविशन्ते ।[1] तथाहि --

१. सङ्घातः ।

२. क्रमश्चेति वाक्यद्वयमभिहितान्वयवादे स्वीक्रियते ।

१. आख्यातशब्दः, २. पदमाद्यम्,

३. पृथक् सर्वपदं साकाङ्क्षञ्चेति लक्षणत्रयम् अन्विताऽभिधानवादे स्वीक्रियते । खण्डवाक्येषु पक्षभेदोऽयं शाब्दबोधदृष्ट्याऽभ्युपगतः । वाक्यस्य सङ्घातपक्षे क्रमपक्षे च संसर्गो वाक्यार्थः स्वीक्रियते ।[2] सङ्घातपक्षे संसर्गवशान्निराकाङ्क्षो विशेषावस्थितः पदार्थोऽपि वाक्यार्थत्वेन स्वीक्रियते ।[3] आख्यातशब्दस्य वाक्यस्य क्रिया वाक्यार्थो भवति ।[4] अन्यत्र वाक्यद्वयेऽवशिष्टे संसृष्टो वाक्यार्थः ।[5] एवञ्च तत्र सङ्घातक्रमयोः संसर्गे संसर्गवशाद्विशेषाऽवस्थिते पदार्थे च वाक्यार्थे अभिहितान्वयवादो ज्ञेयः । अवशिष्टस्य वाक्यत्रयस्य क्रियायां संसृष्टे च वाक्यार्थेऽन्विताभिधानवादो बोध्यः ।[6]

अखण्डवाक्यपक्षस्थस्य वाक्यत्रयस्य प्रतिभा खलु वाक्यार्थो भवति । प्रतिभायां हि एकरसैव प्रतिपत्तिर्भवति । अतस्तत्र अभिहितान्वयाऽन्विताभिधानवन्न काचिच्चर्चा सन्तिष्ठते ।[7] येषां नये पदार्थयोः संसर्ग आकाङ्क्षाभास्यः स्वीकृतः तन्नये अभिहितान्वयवादः येषां तु मते संसृष्ट एव पदार्थो वाक्यशक्त्याऽभासते तेषां मतेऽन्विताऽभिधानवादः । इदमेव वादद्वयमाश्रित्य मीमांसकेषु दलद्वयं प्रवृत्तमस्ति ।

---

१. अत्राऽपि सङ्घातः, क्रम इत्यभिहितान्वयपक्षे लक्षणद्वयम् । आख्यातशब्दः, पदमाद्यं, पृथक् सर्वपदम् साकाङ्क्षमित्यन्विताऽभिधानपक्षे लक्षणत्रयमिति विभागः ।
वा० प०, २।१-२, पुण्य० ।

२. सङ्घातपक्षे क्रमपक्षे च संसर्गो वाक्यार्थः । वा० प०, २।१-२, पुण्य० ।

३. सङ्घातपक्षे एव···विशेषविश्रान्तः पदानामेवाऽर्थो वाक्यार्थ इति लक्ष्यते ।
वा० प०, २।१-२ पुण्य० ।

४. आख्यातशब्दो वाक्यमित्यस्मिन् पक्षे क्रिया-वाक्यार्थः । वा० प०, २।१-२ पुण्य० ।

५. पदमाद्यं पृथक् सर्वपदं साकाङ्क्षमित्यस्मिन् तु पक्षद्वये संसृष्ट एव प्रथमतरं प्रक्रम्यते वाक्यार्थः । वा० प०, २।१-२, पुण्य० ।

६. संसर्गे संसर्गवशाद्विशेषाऽवस्थिते पदार्थे च वाक्यार्थेऽभिहितान्वयः । संसृष्टे क्रियायां चान्विताऽभिधानम् । वा० प०, २।१-२, पुण्य० ।

७. प्रतिभायां त्वेकरसैव प्रतिपत्तिरिति न तत्र काचिदभिहितान्वयान्विताभिधानवच्चर्चा ।
वा० प०, २।१-२ पुण्य० ।

## वैयाकरणानामखण्डवाक्यपक्ष एव सिद्धान्तः

अखण्डवाक्यपक्षविश्लेषणे पाणिनीयानामाचार्याणामखण्डवाक्यमभिमत-मित्यस्माभिः प्रतिपादितम् । स्फोटाभिव्यक्तये च ध्वन्यात्मका वाग्व्यापाराः स्वीक्रियन्त इत्यपि चर्चितमस्माभिरनेकत्र । वस्तुतो वैयाकरणस्याखण्ड एक एवाऽनवयवः स्फोटलक्षणः शब्दो वाक्यम्, प्रतिभा च भवति वाक्यार्थः । यदा यदा शब्द उच्चारितः तदा तदा तदर्थाकारा बुद्धिरुपजायते इति बुद्धि-प्रतिभास एव शब्दार्थः भवति । अत्र सिद्धान्ते पृथगर्थविनिवेशिनां पदानां वाक्यार्थत्वादेवार्थकत्वं विद्यते । वाक्यात् प्रविभक्तानां तेषां पदानामर्थवत्त्वं न कल्प्यते ।[1] यथा पृथगर्थानुपातिनां सर्वेषामिन्द्रियाणां शरीरादृते कार्यं न भवति तथा पदानामपि वाक्यादृते प्रयोजनाऽभाव एव । अतो वाक्यवाक्यार्थयो-र्विषयेऽखण्डपक्ष एव वैयाकरणैरभ्युपगम्यते । अर्थसम्प्रत्ययनिमित्तावाग् व्याकरणेनाऽनुशासनीया भवतीति पतञ्जलिः प्रत्यपादयत् ।[2] वाक्येनैव चार्थ-सम्प्रत्ययः सम्भवतीति वाक्यस्यैव शब्दत्वम् । पदकारैर्हि लक्षणाऽनुवर्तनं कार्यमिति सिद्धान्तमभ्युपगच्छतां पतञ्जलीनामखण्डवाक्यपक्ष एवाऽभिमतः, पदानाञ्चाऽसत्यत्वम् अभिमतम् । 'तृज्वत् क्रोष्टु'रिति[3] सूत्रं भाषमाणः पतञ्जलिरित्थमभाषत न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणम् अनुवर्त्यम् ।[4]

यदि पदानां सत्यता सुस्पष्टा स्यात्तदा तेषां स्वत एव सिद्धत्वात् । 'पदानि कुर्वन्ति इति पदकाराः' इति व्युत्पत्तिनिमित्तमसङ्गतं स्यात् । पदानां वस्तुसत्वे लक्षणेन पदकाराऽनुवर्तनं पदकारैश्च लक्षणाऽनुवर्तनं किमर्थकं स्यात् । 'यथा लक्षणमप्रयुक्ते'[5] इति वाक्यमपि पदानां वस्तुसत्त्वेऽनुपपन्नमेव । 'अप्रयुक्ते यथालक्षणम्=लक्षणाऽनुसारेण पदकरणमिति' पदानामसत्यत्वे मानम् । एकम-भिन्नस्वभावं वाक्यमेव सत्यमिति वैयाकरणानां सिद्धान्तः । तदबुधबोधनाय खलु पदविभागः कल्प्यते ।

---

१. तथा पदानां सर्वेषां पृथगर्थनिवेशिनाम् ।
वाक्येभ्यः प्रविभक्तानामर्थवत्ता न विद्यते ॥ वा० प०, २।४२१ ।

२. येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति, स शब्दः ।
अष्टा० महाभा०, पस्प० ।

३. अष्टा०, ६।१।२०७ ।

४. अष्टा, ६।१।२०७, महाभा० ।

५. अष्टा०, ६।४।१९ तथा १।१।२४ महाभा० ।

## कात्यायनस्य जैमिनेश्च वाक्यस्वरूपविवेकः

वाक्यस्वरूपनिरूपणावसरे 'सङ्घातो वाक्यमि'ति निरूपणायां कात्यायनाऽभिमतं वाक्यस्वरूपमचर्चयम् । निघातयुष्मदस्मदादेशानभिलक्ष्य कात्यायनो वाक्यं पर्यभाषत । कात्यायनमते समानवाक्य एव निघातयुस्मदस्मदादेशाः[1] स्वीकार्याः । अन्यथा 'अयं दण्डः, हरानेन' इत्यत्र 'हर' इति तिङन्तस्यातिङन्तात् परत्वेन निघात आपद्येत । अत्र हि 'अनेनेति' सर्वनाम्ना दण्डस्य परामर्शात्तस्य हरतिना सह सामर्थ्यमस्ति । एवञ्च सामर्थ्ये सति 'तिङ्ङतिङः[2] ।' इति निघात प्राप्नोति । तद्व्यावृत्त्यर्थं कात्यायनो वाक्यस्वरूपं समुपास्थापयत् ।

'आख्यातं साव्ययकारकविशेषणं वाक्यम्[3] ।' इति एतल्लक्षणाऽनुसारेण 'अयं दण्डः, हराऽनेने'त्यत्र न भवति निघातापत्तिः, वाक्यभेदात् । समानवाक्य एव निघातस्येष्टत्वात् । एवमेव 'ओदनं पच, तव भविष्यति' 'ओदनं पच, मम भविष्यति' इत्यत्राऽपि 'तेमयावेकवचनस्य'[4] । इति युष्मदस्मदादेशा अपि न भवन्ति, वाक्यभेदात् । समानवाक्ये एव युष्मदस्मदादेशानामभीष्टत्वात् । अन्यथाऽत्राऽपि युष्मदर्थस्य अस्मदर्थस्य चौदनेन सम्बन्धात् पच्यर्थस्य तेन सह सामर्थ्याद् युष्मदस्मदादेशापत्तिः दुर्वारा स्यात् । समानवाक्ये च तदादेशस्वीकारान्न काचिद् अनुपपत्तिः । आवश्यकः खलु समानवाक्ये तदवगमः । अन्यथा समर्थनिघाते स्वीकृते 'नद्याः तिष्ठति कूले, वृक्षस्य लम्बते शाखा' इत्यत्रेष्टो निघातो न स्यात् । 'नद्यास्तिष्ठति' इत्यस्य 'वृक्षस्य लम्बते' इत्यस्य च सम्बन्धाऽनुपपत्तेः सामर्थ्याऽभावात् । किञ्च 'शालीनां ते ओदनं दास्यामी' त्यत्र शालीनां युष्मदश्च सामर्थ्याभावात् 'तेमयावेकवचनस्ये'त्यादेशोऽपि न स्यात् । समानवाक्ये च तत्स्वीकृते तत्सर्वं सिद्धं भवति । तत्सर्वं समालोच्य वार्तिककारो निघातादिव्यवस्थार्थम् 'समानवाक्ये निघातयुष्मदस्मदादेशाः',[5] इति समाचष्ट ।

'तिङ्ङतिङः' इतिसूत्रस्थमतिङ्ग्रहणं कात्यायनकृतं वाक्यलक्षणं पुष्णाति । तत्र तिङ्ग्रहणेनाख्यातं लक्ष्यते । अतिङ्ग्रहणेन च साव्ययादि । साव्ययमा-

---

१. समानवाक्ये निघातयुष्मदस्मदादेशाः । अष्टा० २।१।१, वा० ११ ।
२. अष्टा०, ८।१।२८ ।
३. अष्टा०, २।१।१, वा० ९ ।
४. अष्टा०, ८।१।२२ ।
५. अष्टा०, २।१।१, वा० ११ ।

ख्यातस्य उदाहरणम्—'उच्चैः पठति, नीचैः पठतीत्यादि' वाक्यम्। सकारकमिति आख्यातस्योदाहरणम्—'ओदनं पचतीत्यादि' वाक्यम्। सकारकविशेषणस्याख्यातस्योदाहरणम्—'ओदनं मृदुविशदं पचतीत्यादि' वाक्यम्। कात्यायनवाक्यस्वरूपं व्याचक्षाणः पतञ्जलिः सक्रियाविशेषणस्याऽप्याख्यातस्य वाक्यत्वं समाचष्ट[1]। तेन 'सुष्ठु पचति, दुष्ठु पचतीत्यादीनां वाक्यत्वं सिद्धयति। आख्यातपदेनाऽत्र क्रियाप्रधानत्वं लक्ष्यते। तेन 'देवदत्तेन शयितव्यमित्यादिषु अतिङन्तेष्वपि वाक्यत्वं सिद्धयति। अपरे आचार्याः कात्यायनकृतवाक्यलक्षणस्य स्थाने 'आख्यातं सविशेषणं[2] वाक्यमि'त्येव ब्रुवते। साव्ययकारक-विशेषणानां क्रियाविशेषणत्वस्वीकारादेव सिद्धे पृथगुच्चारणस्याऽनावश्यकत्वात्। समानतिङोऽपि[3] वाक्यत्वमभिमतं कात्यायनस्य। तेन 'ब्रूहि ब्रूहि' इत्यस्यापि वाक्यसंज्ञा स्वीक्रियते।

'अजानि देवदत्त' इति वाक्ये देवदत्तेति पदं नाव्ययम् नाऽपि कारकम् नैव च कारकविशेषणमेव। एवञ्चैतद् वाक्यम्, 'आख्यातं साव्ययकारकविशेषणं वाक्य'मिति कात्यायनकृतवाक्यलक्षणेनाऽसंगृहीतमिव प्रतिभाति। सत्यम्, सक्रियाविशेषणस्याऽप्याख्यातस्य वाक्यत्वस्वीकारेण तस्यापि संगृहीतत्वात्। क्रियाया विशेषणं कदाचित् सामानाधिकरण्येन भवति, कदाचिच्च वैयधिकरण्येन[4]। सामानाधिकरण्येन क्रियाविशेषणं यथा—'मृदु पचति, इत्यादि। अत्र पचत्यर्थस्य मृद्वित्यादिविशेषणविशिष्टस्यैव प्रतीतेः मृद्वित्यादीनां पचत्यादिक्रियया सह सामानाधिकरण्यम्। सामानाधिकरण्येन प्रयुक्तमिदं क्रियाविशेषणम् असत्त्वभूतमुच्यते। असत्त्वभूतायाः क्रियाया विशेषणत्वात् तस्या अपि असत्त्वभूतत्वमुचितम्। अत एव तत्र नपुंसकेन लिङ्गेन निर्देशो भवति। क्रियायाश्च निर्वर्त्यत्वात् सामानाधिकरण्येन प्रयुक्तस्य क्रियाविशेषणस्य कर्मत्वमपि न्यायसिद्धमेव। अतः सामानाधिकरणभूतस्याऽसत्त्ववाचकस्य क्रियाविशेषणस्य। क्रुते कर्मत्वं नपुंसकलिङ्गता चेति[5] स्वाभाविक

---

१. अपर आह—'आख्यातं सविशेषणमित्येव। सर्वाणि ह्येतानि क्रियाविशेषणानि। अष्टा०, २।१।१, महाभा०।

२. सक्रियाविशेषणञ्चेति वक्तव्यम्। अष्टा०, २।१।१, महाभा०।

३. एकतिङ्०। अष्टा०, २।१।१, वा० १०।

४ क्रियायाश्च विशेषणं कदाचित् सामानाधिकरण्येन भवति। ···वैयधिकरण्येनापि विशेषणं भवति···। वा० प०, २।५, पुण्य०।

५. क्रियाविशेषणानाञ्च क्लीबतेष्यते। अष्टा०, २।४।१८, का० वा०। 'क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च, इत्यपि वचनस्वरूपं क्वचिदुपलभ्यते। (ले०) वा० प०, २।५, पुण्य०।

एव वाचनिको नियम आविष्क्रियते।

वैयधिकरण्येनाऽपि क्रियाविशेषणं स्वीक्रियते। 'व्रजानि देवदत्त !' इति पूर्वोद्धृतवाक्ये सम्बोधनभूतं देवदत्तपदं वैयधिकरण्येन क्रिया विशेषणस्योदाहरणम्। अत्र वाक्ये 'देवदत्त व्रजानी'ति देवदत्तस्य व्रजतेश्च क्रियायाः सामानाधिकरण्यं नास्ति। अत्र वाक्ये केवलमामन्त्र्य देवदत्तं व्रजत्यसौ इति देवदत्तामन्त्रणविशेषिता विलक्षणा व्रजिक्रिया विवक्षितेति 'आख्यातं सविशेषणं[1] वाक्यमि'ति वाक्यलक्षणेन तत्संग्रहो भवति। 'व्रजानि देवदत्त' इति वाक्ये असम्बोध्यमानदेवदत्तविषयायाः सम्बोध्यमानयज्ञदत्तविषयाया वा क्रियायाः पृथगेव संबोध्यमानदेवदत्तविषया विशिष्टा व्रजतिक्रिया प्रतिपाद्यते। अतो देवदत्तपदस्य क्रियाविशेषणत्वादेव 'सक्रियाविशेषणमाख्यातं वाक्यम्' इति लक्षणेन आहोस्विद् 'आख्यातं सविशेषणं वाक्यमि'ति लक्षणेन तस्य पदचयस्य वाक्यत्वं सिद्ध्यति। तत एव समानवाक्याधिकारस्थो निघातादिरत्र प्रवर्तते[2]।

अनेकतिङन्तस्थलेऽपि परस्परं विशेष्यविशेषणभावेन एकवाक्यत्वं भवति। 'रुद्रदत्तः पूर्वं स्नाति, भुङ्क्ते ततो व्रजति' इत्यादिवाक्येषु समानवाक्यत्वमेव। अत्र वाक्ये व्रजतीत्येतत् तिङन्तं क्रियापदं प्राधान्येन संस्थितम्, अन्यानि क्रियापदानि तद्विशेषणानि। यथा स्नानभोजनपानादिभिर्घञन्तैः क्त्वान्तैर्वा कृदन्तक्रियापदैः व्रजतिक्रिया विशेष्यते तथा स्नातिप्रभृतिभिस्तिङन्तैः क्रियापदैरपि व्रजतिक्रियैव विशेष्यते[3]। अतोऽत्र वाक्ये एकैव सविशेषणं व्रजतिक्रिया, आख्यातं सविशेषणं वाक्यमिति लक्षणेन च एकवाक्यत्वम्। पतञ्जलिरपि अनेकतिङन्तस्थले एकवाक्यत्वप्रसाधनाय परस्परं तेषां क्रियाकारकभावं प्रत्यपादयत्[4]। 'पचति भवती'ति वाक्ये पतञ्जलिमते पचिक्रिया भवतिक्रियायाः कर्त्री विद्यते। एवंविधस्थले गौणभूतस्य भावस्य प्रधानभूतस्य च भावस्य परस्परं साध्यसाधनभावः सम्बन्धो भवति। पतञ्जलेराशयं स्पष्टयन् कैयटः समाचष्ट यदेवंविधस्थले आख्यातवाच्या क्रिया आख्यातवाच्यक्रियया सह कर्तृकर्मभावेनैव सम्बध्यते। 'पश्य मृगो धावति, पचति भवति' इत्यादिषु अनेकतिङन्तघटितेषु

१. अष्टा०, २।१।१, महाभा०।

२. सम्बोधनं पदं यच्च तत् क्रियाया विशेषकम्।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति॥ वा० प०, २।५।

३. यथाऽनेकमपि क्त्वान्तं तिङन्तस्य विशेषकम्।
तथा तिङन्तं तत्राऽहुस्तिङन्तस्य विशेषकम्॥ वा० प० २।६।

४. का तर्हीयं वाचो युक्तिः,—'पचति भवति, भवति पक्ष्यति, भवत्यपाक्षीदिति' एषैषा वाचो युक्तिः, पचादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्तीति।
(अष्टा०, १।३।१ महाभा०)

वाक्येषु तिङन्तयोः क्रियापदयोः स एव सम्बन्धः। करणादिभावेन तथा प्रयोगाऽदर्शनात् तिङन्तद्वयं करणादिभावेन न सम्बध्यते[1]।

जैमिनेरभिमतं वाक्यस्वरूपं कात्यायनस्य वाक्यस्वरूपेण सह यद्यपि सर्वथा तुल्यलक्षणं नास्ति तथापि किञ्चिदंशेन उभयोर्लक्षणं संवादि विद्यते। जैमिनिराचार्यो मीमांसादर्शने स्वाऽभिमतं वाक्यस्वरूपमित्थमलक्षयत् —

'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्।'[2]

यावत्सु पदेषु अर्थैकत्वं सम्भवति तावत्सु पदेषु वाक्यत्वम् इति जैमिनेरभिप्रायो विद्यते। तस्मिन्नेव चैकस्मिन् वाक्ये यजुष्ट्वं स्वीक्रियते मीमांसकैः, न तु वाक्यसमूहे। वाक्यसमूहस्य विनियोगानर्हत्वात्[3]। वाक्यविषयकं जैमिनिमतं व्याचक्षाणो भर्तृहरिः भेदे साकाङ्क्षाऽवयवमभेदे च परानाकाङ्क्षशब्दकं क्रियाप्रधानं विशेषणपदयुक्तमेकार्थवद् वाक्यमित्यन्ववदत्[4]। जैमिनिमतेन वाक्ये विभागजिज्ञासायां पदानि साकाङ्क्षाणि भवन्ति। अविभागजिज्ञासायान्तु पदानि परानाकाङ्क्षाणि भवन्ति। तत्र क्रियापदस्य प्राधान्यं भवति। सर्वाण्यपि पदानि एकार्थस्य प्रतिपादकानि। अर्थैकत्वेनात्र नहि पदार्थैकत्वं विवक्षितम्, वाक्ये पदानामनेकत्वात्, अपि त्वत्राऽर्थैकत्वेन भिन्नप्रतीतिविषयस्य अनेकमुख्यविशेष्यस्य राहित्यमेव। यथा—'आयुर्यज्ञेन कल्पताम्, प्राणो यज्ञेन कल्पताम्[5]'त्यादि। भाट्टदीपिकायां खण्डदेवः अन्यस्याऽर्थैकत्वस्य दुर्वचत्वादुक्तमेवाऽर्थैकत्वं समाचष्ट[6]। एतत् समं संलक्ष्य शबरस्वामी मीमांसासूत्रं भाषमाण एकार्थस्य पदसमूहस्य वाक्यत्वं व्याचष्ट[7]।

निघातादिव्यवस्थार्थं कात्यायनेन वाक्यं यत्परिभाषितं तेन जैमिनिना

---

१. कर्तृकर्मभावेन क्रिया आख्यातवाच्यक्रियया सम्बध्यत एव, पचति भवति, पश्य मृगो धावतीति। करणादिभावेन तु न सम्बध्यते, तथा प्रयोगाऽदर्शनात्।
अष्टा०, १।३।१, महाभा०, प्र०।

२. यजुष्ट्वं यावत्सु पदेषु वाक्यत्वं पर्याप्तं तावत्सु पर्याप्तम् न तु वाक्यसमूहे, तस्य विनियोगाऽनर्हत्वात्। (भा० दी०, अ० २। पा० १, अधि० १५)

३. मी० द०, २।१।४६।

४. साकाङ्क्षाऽवयवं भेदे परानाकाङ्क्षशब्दकम्।
कर्मप्रधाने गुणवदेकार्थं वाक्यमिष्यते॥ वा० प०, २।४।

५. य० वे०, ९।२१।

६. अर्थैकत्वञ्च भिन्नप्रतीतिविषयाऽनेकमुख्यविशेष्यराहित्यम्, अन्यस्य दुर्वचत्वात्।
(भा० दी० अ० २, पा० १, अधि० १५)

७. एकार्थः पदसमूहो वाक्यम्। मी० द०, २।१।४६, शा० भा०।

स्वीकृतं वाक्यलक्षणं कृत्स्नं तुल्यलक्षणं नास्ति। तत्र क्वचिदेते वाक्यलक्षणे समाविशतः, क्वचिच्च नैव समाविशतः। यथा 'गामानय' इत्यत्र वाक्ये आख्यातस्य सकारकत्वात् कात्यायनस्य वाक्यलक्षणं सङ्गच्छते। मुख्यविशेष्य-भूताया भावनाया एकत्वेन अर्थैकत्वाज्जैमिनेरपि वाक्यलक्षणमत्र सङ्गच्छते। 'नद्यास्तिष्ठति कूले शालीनां त ओदनं दास्यामि' इत्यत्राऽपि वाक्ये उभे अपि वाक्यलक्षणे सङ्गच्छाते। जैमिनि-कात्यायनयोरुभयोरपि मतेऽत्र समानवाक्य-त्वमस्ति। क्वचिच्चाऽनयोर्विवादोऽप्यस्ति। यथा 'अयं दण्डो हरानेन' इत्यस्मिन् वाक्ये विवदते लक्षणद्वयम्। कात्यायनमतेनात्र वाक्यद्वयमस्ति। 'अयं दण्डः' इत्यत्र हरतिना सत्यपि सामर्थ्ये तदेकवाक्यं नास्ति, अवध्यवधिमतोः भिन्न-वाक्यतयाऽवस्थानात्। तत्र 'अस्ति' इत्यध्याहारेण एकं वाक्यम्, 'हराऽनेन', चेत्यपरं वाक्यं विद्यते। जैमिनिवाक्यलक्षणदृष्ट्या तु 'अयं दण्डो हराऽनेनेति' एकमेव वाक्यं सम्भवति। मुख्यविशेष्यभूताया हरतिक्रियाया एकत्वेन अर्थै-कत्वात्। लक्षणद्वयं तोलयता भर्तृहरिणा परिणामभेदोऽयं निर्दशितः[१]।

जैमिनिना स्वीकृतस्य वाक्यस्वरूपस्याऽयमस्ति आधारः। यावता पद-समूहेनेज्यते, तावान् पदसमूहो मीमांसाशास्त्र एकं यजुः[२] स्वीक्रियते। तदेव च वाक्यं भवति। यजुः वाक्यं वा नाम क्रियोपकारकं भवति। यावता पदसमूहेन क्रियाया उपकारप्रकाशनं सम्भवति, तावद् वक्तव्यत्वात्, तावतः पदसमूहस्य वाक्यत्वम्[3]। यथा—

> "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। सं वपामि समाप ओषधीभिः समोषधयो रसेन। सं रेवतीर्जगतीभिः पृच्यन्तां सं मधुमतीर्मधुमतीभिः पृच्यन्ताम्[४]।"

इत्यत्र यजुषि एतावता पदसमूहेन निर्वापक्रिया प्रकाश्यते। अतस्तावतः पदसमूहस्य यजुष्ट्वं वाक्यत्वञ्चाऽभ्युपगम्यते। एतदेव संलक्ष्य जैमिनिरा-चार्यो वाक्यं परिभाषमाणः 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे[५] स्यादि'ति सूत्रं प्रणिनाय। सूत्रमिदं व्याचक्षाणः शबरस्वामी अर्थैकत्वस्य अभिप्रायं प्रयो-

१. निघातादिव्यवस्थार्थं शास्त्रे यत्परिभाषितम्।
साकाङ्क्षाऽवयवं तेन न सर्वं तुल्यलक्षणम्॥ वा० प०, २।३।

२. यावता पदसमूहेनेज्यते तावान् पदसमूह एकं यजुः। मी० द० २।१,४६ शा० भा०।

३. यावता क्रियाया उपकारः प्रकाश्यते, तावद् वक्तव्यत्वाद् वाक्यम्।
मी० द०, २।१।४६, शा० भा०।

४. य० वे० १।२१।

५. मी० द०, २।१।४६।

जनैकत्वं तात्पर्यैकत्वं वा समाचष्ट[1]। एक प्रयोजनत्वादेव 'देवस्य त्वे'त्यादिपदसमूहस्य एकवाक्यत्वं सिद्ध्यति।

शब्दशास्त्रीयप्रक्रियानिर्वाहोपकारकत्वेन कात्यायनकृतस्य वाक्यलक्षणस्य ज्यायस्त्वं[2] पुण्यराजः प्रत्यपादयत्। कात्यायनेन जैमिनिना च स्वीकृतं वाक्यस्य लक्षणद्वयमपि सङ्घातवाक्यपक्षे सन्निविशते[3]।

## २. पदम्

अन्वाख्येयशब्देषु वाक्यानन्तरं पदस्य द्वितीयं स्थानमस्ति। वाचोऽभिन्नताऽस्माभिरनेकत्र चर्चिता प्रतिपादिता च। काचाद्युपहतचक्षुषां यथैकाकारमपि वस्तु नानारूपतया प्रविभक्तमवभासते तथा संहितावशादेकाऽभिन्नाऽनवयवाऽपि वागनुशासनकाले अन्वयव्यतिरेककल्पनया शाब्दिकैः प्रविभज्यते[4]। वाक्यात्मिका वाक् पदेषु प्रविभज्यते, पदञ्च वर्णेषु। एकैव संहिता वाङ् नानारूपेण प्रविभज्यते। एक एव शब्दः शक्त्यन्तरपरिग्रहात् संहिताविषयेऽन्यथा प्रतिभासते[5]। 'श्वेतो धावति' इत्यत्र संहितयोच्चारित एक एव श्वेतशब्दो नानाशक्तिपरिग्रहादुभयार्थप्रतिपादको जायते। 'श्वा+इतो धावति' इत्यपि प्रतीयते। श्वेतरूपवान् कश्चिद् धावतीत्यपि ज्ञायते। एक एव ध्वनिर्यथाप्राणवाताहतनालिकादि-परिग्रहोपधानवशाद् नानाविधषड्ज-ऋषभादि-रूपभेदवान् सञ्जायते तथेयमेका संहिता वाक् स्वीकृतसङ्केतादिवशात् पदेषु खण्ड्यते[6]। एकैव ऋग् गीतिषु सामाख्या[7] भवति। विशेषेणोदीरणकौशलविशेष[8] एव नाम साम कथ्यते। न हि तयोः तत्त्वतः कश्चिद् भेदो भव-

---

१. एक-प्रयोजनत्वादुपपन्नम्, यथा तावत्—'देवस्य त्वा' इति निर्वापप्रकाशनम्, तस्य विशिष्टस्य वाचक एतावान् पदसमूहः, तद् वाक्यम्। (मी० द० २।१।४६, शा० भा०)

२. तस्माद् वार्तिककारीयमेव वाक्यलक्षणं ज्यायः। वा० प०, २।३, पुण्य०।

३. अन्यदपि वार्तिककारीयं पारिभाषिकं शास्त्रे वाक्यलक्षणमस्ति।
'आख्यातं साव्ययकारकविशेषणं वाक्यमेकतिङ् च।' जरन्मीमांसकोक्तं लौकिकमप्यस्ति।
'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादिति।' अनयोः सङ्घातपक्षेऽन्तर्भावः।
वा० प०, २।१-२, पुण्य०।

४. इन्द्रियादिविकारेण दृष्टं ग्राह्येषु वस्तुषु।
आत्मत्यागादृते भिन्नं ग्रहणं स क्रमः श्रुतौ॥ (व.० प० २।१०७)

५. संहिताविषये वर्णाः स्वरूपेणाऽविकारिणः।
शब्दान्तरत्वं यान्तीव शक्त्यन्तरपरिग्रहात्॥ (वा० प०, २।१०६)

६. एकस्यानेकरूपत्वं नालिकादिपरिग्रहात्।
यथा तथैव तत्र स्याद् बहूनामेकरूपता॥ (वा० प०, २।११३)

७. गीतिषु सामाख्या। (मी० द०, २।१।३६)

८. प्रगीते हि मन्त्रवाक्ये सामशब्दमभियुक्ता उपदिशन्ति। मी० द०, २।१।३६। (शा० भा०)

तीति[1] भर्तृहरिः समाचष्ट । अत्राऽपि अन्वाख्येयशब्देषु एकैव वाक्यात्मिका वाक् स्वीकृतसङ्केतपद्धत्या अन्वयव्यतिरेकाभ्यां पदात्मिका स्वीक्रियते । अन्वाख्येय-पदशब्देनाऽत्र तान्येव वाक्याद् विगृहीतानि पदानि अभिमतानि । तस्मादत्र पदपरिचयः प्रदीयते ।

**पदभेदः—**

पदभेदविषये विदुषामनिर्णीतो विवादोऽवलोक्यते । कैश्चिदाचार्यैः पदं द्विधा समाख्यातम् । अन्यैश्चतुर्धा पदं स्वीकृतम् । अपरैश्च पञ्चधापदमभ्यु-पगतम् । एवञ्च वाक्येभ्योऽपोद्धृते पदविषये आचार्याणां मतत्रयं विलोक्यते । भर्तृहरिणा मतभेदोऽयं कारिकयाऽनयेत्थं समुपस्थापितः—

द्विधा कैश्चित् पदं भिन्नं चतुर्धा पञ्चधाऽपि वा ।
अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत्[2] ॥

एकैकमत्र विविच्यते ।

**द्विधा पदम्—**

द्विधा कैश्चित् पदं भिन्नमित्यादिकारिकां वाक्यपदीयस्य व्याचक्षाणः हेलाराजो वाक्यात् पदानामपोद्धारं द्विविधं प्रत्यपादयत्[3] । १. नामरूपं पदम्, २. आख्यातरूपञ्च पदम् । द्विधापदवादिनाम् एतदेव पदद्वयमभिप्रेतम् । अनयोरेव नामाख्यातयोरन्येषां स्वीकृतानां पदानामन्तर्भावः सम्भवति । पाणिने-राचार्यस्य पदद्वैविध्यमेवाऽभिप्रेतमिति पुरस्तात् पाणिन्यभिमतपदनिरूपणाऽवसरेऽस्माभिः सम्यक् प्रतिपादयिष्यते । नामपदेनाऽत्र सुपां प्रकृतिः प्रातिपदिकं विवक्षितम्, आख्यातपदेन च क्रियाप्रधानं पदमभिप्रेतम् ।

**चतुर्धा पदम्—**

तात्त्विकदृष्ट्या पदानां द्वैविध्येऽपि आन्तरिकं भेदमादाय व्यावहारिक-

---

१. ऋचो वा गीतिमात्रं वा साम द्रव्यान्तरं न तु ।
गीतिभेदाद् विगृह्यन्ते ता एव विकृता ऋचः ॥ वा० प०, २।१०९ ।

२. वा० प०, ३।१।१ ।

३. पदापोद्धारो द्विविधः—नामाख्यातरूपः प्राथमकल्पिकः ।
शक्तिशक्तिमतोरभेदात् कारकात्मा सिद्धरूपोंऽशः ॥ वा० प०, ३।१।१, हेला० ।

दृष्ट्या कैश्चिद् विद्वद्भिः पदचातुर्विध्यं परिकल्पितम् । सर्वाद्यं पदचातुर्विध्यस्योल्लेख ऋक्[1]संहितायां दृश्यते । समाम्नायं व्याचक्षाणो यास्कः पदचतुष्टयम् अमन्यत[2] । यास्केन शब्दसङ्कलनरूपो निघण्टुग्रन्थः सामाम्नायपदेन समाख्यातः[3] । दुर्गोऽपि यास्कस्याऽभिप्रेतमिदं व्याचष्ट[4] । यास्कमते सर्वाण्यपि पदजातानि चतुःषु पदभेदेषु प्रविभक्ताः सन्ति । तानि च पदजातानि, १. नाम, २. अख्यातम्, ३. उपसर्गः, ४. निपाताश्चेति विद्यन्ते ।

'चत्वारि वाक्परिमिता पदानी'ति ऋचं व्याचक्षाणो यास्काचार्यः पदचतुष्ट्वमतं वैयाकरणाऽभिमतमिति समसूचयत्[5] । पाणिनीयं तन्त्रं भाषमाणः पतञ्जलिराचार्योऽपि व्याकरणाऽध्ययनप्रयोजनप्रतिपादनाप्रसङ्गे उद्धृतामृचं व्याचक्षाणः नामाख्यातोपसर्गनिपातरूपाणि चत्वारि पदजातानि पर्यगणयत् ।[6] पतञ्जलिर्यास्कातिरिक्तम् अन्यत्राऽपि अनेकत्र स्थलेषु पदचातुर्विध्यस्योल्लेखो दृश्यते । ऋक्प्रातिशाख्ये[7] शुक्लयजुःप्रातिशाख्ये[8] च नामतः उक्तपदचतुष्ट्वमुपलभ्यते । ऋक्प्रातिशाख्यं भाषमाण उव्वटः[9] पदानां विभागचतुष्टयं व्याचष्ट । सर्वदर्शनसङ्ग्रहे माधवेन[10] पतञ्जल्युक्तस्य पदचातुर्विध्यस्य युक्तता प्रतिपादिता ।

ऋक्संहिताभाष्ये सायणाचार्यः[11] स्वामी दयानन्दश्च[12] नामाख्यातोपसर्ग-

---

१. चत्वारि वाक् परिमिता पदानि, तानि विदुर्ब्राह्मणा ये मनीषिणः ।
त्रीणि गुहा निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ।।
ऋक्सं०, १।१६४, ४५ ।

२. यद्वा समाहृता भवन्ति तद्यानि एतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च, तानीमानि भवन्ति । निरु० १।१।१ ।

३. समाम्नायः समाम्नातः, स व्याख्यातव्यः, तमिमं समाम्नायं निघण्टव इत्याचक्षते । निरु०, १।१।१ ।

४. गवादिर्देवपरन्यन्तः शब्दसंमुदायः समाम्नायः उच्यते । निरु० १।१।१। ऋज्वर्थो नि० वृ० ।

५. नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः । निरु० १३।९ ।

६. चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च । अष्टा० महाभा०, पस्प० ।

७. नामाख्यातोपसर्गनिपातश्चत्वार्याहुः पदजातानि शब्दाः । (ऋक्प्राति०, प० १२, सू० १७)

८. नामाख्यातोपसर्गनिपाताः । (शु० य० प्राति० ८।४९)

९. नाम, आख्यातम्, उपसर्गः, निपात इति चत्वारि पदजातानि—शब्दविद आहुः ।
(ऋक्प्राति०, १२।१७ उ० भा०)

१०. पदचातुर्विध्यं भाष्यकारोक्तं युक्तमिति विवेक्तव्यम् । सर्वद० सं० पा० द०)

११. अपरे व्याकरणमताऽनुसारिणो नामाख्यातोपसर्गनिपातभेदेन…।
ऋक्सं० १।१६४।४५ । सायणभा० ।

१२. ये विद्वांसः सन्ति ते नामाख्यातोपसर्गनिपातान् चतुरो जानन्ति ।
ऋक्सं० १।१६४।४५ दयानन्द भा०

निपातभेदेन चतुर्धापदं समुपास्थापयताम् । वर्णसङ्घातं पदं मन्वानश्चाणक्यः[1] चतुर्धापदं व्याचकार । तदेवं पदचतुष्ट्वपक्षः शाब्दिकेषु अन्यत्र च ख्यातो दृश्यते ।

**पञ्चधा पदम्–**

कर्मप्रवचनीयमपि पदं भवतीति स्वीकृत्य उक्तैश्चतुर्भिः पदैः सहाऽस्य योगेन पञ्चधा पदमिति पक्षं केचन मन्यन्ते । भर्तृहरिः पदविषयकमतभेद-निरूपणासन्दर्भे एतन्मतमपि निर्दिदेश । एवञ्चैकेषां मते पञ्चपदजातानि भवन्ति । १. नाम, २. आख्यातम्, ३. उपसर्गः, ४. निपातः, ५. कर्म-प्रवचनीय इति च ।

**वार्ताक्षौदुम्बरायणयोः पदचतुष्ट्वे वैमत्यम्—**

भर्तृहरिः पदविषयकं वार्ताक्षमतम् औदुम्बरायणमतञ्चोदलिखत् । वाक्य-स्य नित्यत्वं स्वीकृत्य वार्ताक्षोदुम्बरायणौ[2] पदभेदकल्पनाया अनौचित्यं स्वी-कुर्वाते । नाम्नां सत्त्वप्रधानता आख्यातस्य च क्रिया प्रधानताऽपि ताभ्यां प्रत्याख्याता । वस्तुतो बुद्धिस्थो वाक्यात्मकः शब्दो नित्यः अखण्डश्चैव । शब्दे-नार्थस्य योगश्चाऽपि लौकिक एवाऽस्ति । पदाश्रयं व्यवहारं स्वीकृत्य लोके शास्त्रे च कार्यार्थं वाक्ये पदानि परिकल्प्यन्ते ।[3] यास्केन मतमिदम् औदुम्बरा-यणनाम्नैवोपस्थापितम्[4] । अत्र प्रकरणे यास्केन वार्ताक्षो न चर्चितः । औदुम्ब-रायणमते उच्चरितानां शब्दानां तावदेव नित्यत्वं यावच्छ्रुतौ शब्दाः सन्नि-धीयन्ते । अयुगपदुत्पन्नानां शब्दानां चतुष्ट्वं वक्तुं न शक्यते ।

**पदभेदानां स्वरूपपरिचयः—**

शब्दानुशासनस्य प्रमाणभूतस्य पाणिनेराचार्यस्य पदभेदविषये मतमवगन्तुं

१. वर्णसङ्घातः पदम् । तच्चतुर्विधम्—नामाख्यातोपसर्गनिपाताश्च ।
कौ० शा० २।१०।२८ ।

२. क्रियाप्रधानमाख्यातं नाम्नां सत्त्वप्रधानता ।
चत्वारि पदजातानि सर्वमेतद्विरुध्यते ॥ वा० प०, २।३४२ ।
वाक्यस्य बुद्धौ नित्यत्वमर्थयोश्च लौकिकम् ।
दृष्ट्वा चतुष्ट्वं नास्तीति वार्ताक्षोदुम्बरायणौ ॥ वा० प०, २।३४३ ।

३. व्याप्तिमांश्च लघुश्च व्यवहारः पदाश्रयः ।
लोके शास्त्रे च कार्यार्थं विभागेनैव कल्पितः ॥ वा० प०, २।३४४ ।

४. इन्द्रियनित्यं वचनमौदुम्बरायणः । तत्र चतुष्ट्वं नोपपद्यते ।
अयुगपदुत्पन्नानां वा शब्दानामितरेतरोपदेशः । शास्त्रकृतो योगश्च । निरु०, १।१।१ ।

प्रागेतेषां पदजातानां स्वरूपपरिचयः आवश्यकः प्रतीयते । अतोऽत्र आचार्यैः स्वीकृतं तेषां पदजातानां स्वरूपं निरुच्यते ।

**(अ+इ) नामाख्यातञ्च—**

व्याकरणनिकाये नामाख्यातयोः महत्त्वपूर्णं स्थानं विद्यते । वाक्यस्य प्राथमकल्पिको विभागो नामाख्यातरूपेणैव क्रियते । यास्को नामाख्यातयोः स्वरूपमित्थं समाचष्ट ।

'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि'[1] इति धातोरर्थद्वयं स्वीकृतं वैयाकरणैः । १. फलम्, २. व्यापारश्च । तत्र फलं प्रति व्यापारस्य प्राधान्यं भवति ।[2] व्यापार एवाऽत्र भावपदेन यास्कस्याऽभिप्रेतोऽस्ति । सर्वत्रैव धातु-प्रयोगस्थले अर्थद्वयमेतत् सुस्पष्टं प्रतीयते । 'पचती'त्युक्ते दर्विसंघट्टनफूत्का-रादिरूपः कर्तृनिष्ठो व्यापारः प्रतीयते, स्थाल्यां प्रस्तारितम् पक्वौदनरूपं तण्डुलनिष्ठं फलमपि ज्ञायते । अतएव व्यापाराश्रयः कर्ता, फलाश्रयञ्च कर्मेति व्यवह्रियते ।

धातुश्च कृत्यप्रत्ययेन युक्तो 'नाम' इत्युच्यते । पाणिनिना प्रातिपदिक-शब्देन नामपदं व्यवहृतम् ।[3] अन्तर्लीनक्रियान् परोक्षवृत्तीन् शब्दान्, निर्वचन-मात्राऽभ्युपगतक्रियांश्चाऽतिपरोक्षवृत्तीन् शब्दानपि पाणिनिः प्रातिपदिकमेव स्वीचकार[4] । तदपि नामपदमेव । कृदन्तेनोक्तोऽयं भावाऽपरपर्यायो धात्वर्थो व्यापारो द्रव्यवत् प्रकाशत[5] इति पतञ्जलिः समाचष्ट । यास्को द्रव्यं सत्त्वपदेन स्मरन् सत्त्वप्रधानार्थकं नामपदमभाषत । भर्तृहरिणा आख्यातं नाम च तात्त्विकदृष्ट्या विचारितम्[6] । भर्तृहरिमते वाग्रूपा महासत्ता प्राप्तक्रमा सती क्रिया भवति । या च अस्माभिराख्यातपदेन व्यवह्रियते । प्राप्तक्रमा चेयं महासत्ता क्वचित् संहृता सती सत्त्वपदाऽभिधानं लभते । क्रियासामान्यमेव गतौ प्राप्तक्रमं सद् गच्छतिरुच्यते, पचौ च पचतिरुच्यते । प्राप्तक्रमं क्रिया-

---

१. निरु०, १।१।१।

२. फलव्यापारयोः धातुराश्रये तु तिङः स्मृताः ।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ वै० भू० का० । धात्व० २ ।

३. कृत्तद्धितसमासाश्च । (अष्टा० १।२।४६)

४. अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । अष्टा० १।२।४५ ।

५. कृदभिहितो भावो द्रव्यवद् भवतीति । अष्टा० २।२।१९, महाभा० ।

६. प्राप्तक्रमा विशेषेषु क्रिया सैवाऽभिधीयते ।
क्रमरूपस्य संहारे तत् सत्त्वमभिधीयते ॥ वा० प०, ३।१।३५ ।

सामान्यमेव क्वचित् संहृतं सन्नामपदेनोच्यते। यथा—गौः पाचक इत्यादयः। नामाख्यातयोः तात्त्विकोऽयं भेदो भर्तृहरिणेत्थं प्रादर्शि—

आख्यातशब्दैरर्थोऽसावेवंभूतोऽभिधीयते ।
नामशब्दाः प्रवर्तन्ते संहरन्त इव क्रमाः[1] ॥

हेलाराजो भर्तृहरेरिममेव सिद्धान्तमाधृत्य समाचष्ट यत् क्रियावाची धातुरेव प्रत्ययविशेषयोगेन सत्त्वाभिधायी समापद्यते[2]।

जैमिनिना नामाख्यातयोः स्वरूपोपलब्धये सुगमा पद्धतिः समाश्रिता। 'सोमेन यजेत' इत्यादीनामुच्चारणकाले येन शब्देन द्रव्यगुणात्मकस्य। वस्तुजातस्य स्वरूपोपलब्धिः भवति, स शब्दो नामपदेनोच्यते[3]। यथा उद्धृतवाक्ये 'सोमेन' इति पदे सोमपदं नामपदमस्ति। सोमनामकस्य वस्तुनो द्रव्यगुणात्मकरूपेणोपलब्धिर्दृश्यते। यजि प्रति साकाङ्क्षञ्चेदं 'सोम' इति नामपदमस्ति। सर्वेऽपि सत्त्वाऽभिधायिनो वृक्षादयः शब्दा नामपदान्येव विद्यन्ते। 'सोमेन यजेत' इत्यादीनामुच्चारणकाले येन च शब्देन कस्यचनापि सत्त्वभूतस्य उपलब्धिर्न भवति, यस्य च स्वातन्त्र्येण प्रयोगोऽपि न भवति स आख्यातपदम् उच्यते[4]। यथा उद्धृतवाक्ये 'यजेत' इति पदे 'त' इति आख्यातमस्ति। 'यजेत' इति कृत्स्नमपि आख्यातपदम् अभिधीयते। नहि 'यजेत' इति आख्यातपदोच्चारणकाले कस्यचन सत्त्वभूतस्याऽर्थस्योपलब्धिर्दृश्यते। सर्वेऽपि असत्त्वभूतस्य भावनापदवाच्यस्याऽर्थस्याऽभिधायिनः पचत्यादयः शब्दा आख्यातपदान्येव विद्यन्ते।

ऋक्प्रातिशाख्ये सत्त्वाऽभिधायकं नाम भावाभिधायकमेव चाऽऽख्यातं व्याख्यातम्[5]। ऋक्संहिताभाष्ये सायणः,[6] वाजसनेयप्रातिशाख्यं भाषमाण उव्वटः अनन्तभट्टश्च[7] यास्कमतम् अन्वसरताम्। कौटिलीयाऽर्थशास्त्रे

---

१. वा० प०, ३।८।२९।

२. क्रियावाची धातुः सत्त्ववाचितामेति। वा० प०, ३।१।३५, हेला०।

३. येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात्तेभ्यः पराकाङ्क्षामतत्वात्, स्वप्रयोगे। मी० द०, २।१।३।

४. येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि।
तस्मात्तेभ्यः प्रतीयेताश्रितत्वात् प्रयोगस्य ॥ मी० द०, २।१।४।

५. तदाख्यातं येन भावं स धातु। ऋक्प्राति०, १२।१९।
तन्नाम येनाऽभिदधाति सत्त्वम् ॥ ऋक्प्राति०, १२।१८।

६. क्रियाप्रधानमाख्यातम्, द्रव्यप्रधानं नाम। ऋक्सं०, १।१६४,४५। सा० भा०।

७. क्रियावाचकमाख्यातमुपसर्गो विशेषकृत्।
सत्त्वाभिधायकं नाम निपातः पादपूरणः ॥
(उव्वटभाष्ये अनन्तभट्टभाष्ये चोद्धृतः, वाज० प्रा०, ८,४९)
निरुक्तं व्याचक्षाणो दुर्गश्चापि श्लोकमिमं समुदाहरत् निरुक्ते ॥ १।३।५ ॥

चाणक्य[1] उक्तं नामाख्यातविषयकं मतं समर्थयत्। पतञ्जलिनाऽपि यास्कमतमनुमोदितम्[2]। आख्यातगता विभक्तय आख्यातिक्य उच्यन्ते, नामगता च विभक्तयो नामिक्यो भवन्ति। क्रियापदविचारोऽस्माभिरग्रे शब्दभेदनिरूपणायां प्रकाशयिष्यते।

### (उ) उपसर्गाः—

आख्यातात् प्रागुपसृज्यन्त इति व्युत्पत्त्या[3] द्वाविंशतिसंख्याकाः प्रादय[4] उपसर्गपदेन पाणिनीये तन्त्रे व्यवह्रियन्ते। निरुक्ते ऋक्प्रातिशाख्ये[5] च विंशतिरेव[6] संख्या समाख्याता उपसर्गाणाम्। क्रियायोगे प्रादीनामुपसर्गसंज्ञा[7] पाणिनिना व्यवहृता। उपसर्गा हि क्रियाविशेषका[8] भवन्ति परिगणितप्राद्यतिरिक्ता अन्येऽपि शब्दाः पाणिनिना क्रियाविशेषकत्वेन समाख्याताः[9]। परं ते प्राद्यतिरिक्ताः शब्दा गतिसंज्ञामेव लभन्ते।

### (ऋ) निपाताः—

नामाख्यातोपसर्गेभ्योऽन्ये[10] शब्दा निपाता उच्यन्ते। पाणिनिना नामतो निपाताः पठिताः। 'चादयोऽसत्त्वे'[11] इति सूत्रादारभ्य 'अधिरीश्वरे'[12] इति सूत्रात् प्राक्तनेषु सूत्रेषु पठिताः असत्त्ववाचकाश्चादयः, प्रादयः, अन्ये चोर्यादयः शब्दाः पाणिनीये निपातसंज्ञां[13] लभन्ते। निपातानां बहुप्रकारकेषु अर्थेषु

---

१. तत्र नाम सत्त्वाऽभिधायि, आविष्टलिङ्गमाख्यातं क्रियावाचि। कौ० शा०, २।१०।२८।

२. क्रियाप्रधानमाख्यातम्…। द्रव्यप्रधानं नाम। अष्टा० ५।३।६६, महाभा०।

३. प्रागुपसृज्यत आख्यातपदस्येत्युपसर्गः प्रादिः। ऋक्सं०, १।१६४, ४५, सा० भा०।

४. प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप इति प्रादयः। अष्टा०, १।४।५८ ग० पा०।

५. द्रष्टव्यं निरुक्तस्य १।१।५, स्थलम्। तत्र 'दुस् निस्' इति उपसर्गद्वयं न पठ्यते। शेषं पाणिनीयवत्। (ले०)

६. उपसर्गा विंशतिरर्थवाचकाः। (ऋक्प्राति० १२।२०)

७. उपसर्गाः क्रियायोगे। (अष्टा०, १।४।५९)

८. क्रियाविशेषक उपसर्गः। अष्टा० १।३।१ महाभा०।

९. ऊर्यादिच्विडाचश्च। (अष्टा०, १।४।६१) इत्यारभ्य, 'जीविकोपनिषदावौपम्ये। (अष्टा० १।४।७९) इतिसूत्रं यावत् पठिताः शब्दाः।

१०. इतरे निपाताः। (ऋक्प्राति० १२।२१)

११. अष्टा०, १।४।५७।

१२. अष्टा० १।४।९७।

१३. प्राग्रीश्वरान्निपाताः। अष्टा० १।४।५६)

निपतनाद् 'निपात' इति अन्वर्था संज्ञा[1] विधीयते। पादपूरणार्था अपि निपाताः प्रयुज्यन्ते । उव्वटेन अनन्तभट्टेन च श्लोकैकेन एषां चतुर्णां नामाख्यातोपसर्गनिपातानां स्वरूपोल्लेख इत्थं व्यधायि—

क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् ।
सत्त्वाऽभिधायकं नाम निपातः पादपूरणः ॥[2]

**(लृ) कर्मप्रवचनीयाः—**

सम्बन्धाऽवच्छेदहेतवः कर्मप्रवचनीयाः स्वीक्रियन्ते ।[3] 'अनु, उप, अप, परि, आङ्, प्रति, अभि, अधि, सु, अति, अपि' इति प्रादिषु एकादश निपाताः कर्मप्रवचनीयसंज्ञया[4] परिगणिताः पाणिनिना ।[5] प्रयुज्यमाने क्रियापदे क्रियाविशेषस्य द्योतकाः कर्मप्रवचनीया भवन्ति इति[6] पतञ्जलिरभ्यधात् ।

शब्दशास्त्रे क्रियाकारकपूर्वकः सम्बन्धः स्वीक्रियते । क्रिया क्वचित् सम्बन्धं जनयित्वा विनिवर्तते, क्वचिच्च श्रूयमाणैव सा सम्बन्धं जनयति । यथा 'राजपुरुषोऽयम्' इत्यत्र भरणलक्षणा क्रिया स्वस्वामिभावलक्षणम् आश्रयाश्रयिभावलक्षणं वा सम्बन्धं जनयित्वा विनिवृत्ता । अत्र हि 'राज्ञः पुरुषोऽयमि'ति विच्छिद्यते । यतः स राजा पुरुषमिमं बिभर्ति । अतो विनिवृत्ता भरणलक्षणा क्रिया तस्य सम्बन्धस्य जनिका विद्यते । श्रूयमाणाऽपि क्रिया सम्बन्धस्योपजनिका भवति । यथा 'मातुः स्मरती'त्यत्र क्रियापदं श्रूयमाणं सम्बन्धमुपजनयति । अत्र निमित्तनिमित्तिभावलक्षणः सम्बन्धः श्रूयमाणया स्मरतिक्रियया जन्यते[7] ।

एवञ्च क्रिययोपजनिते तस्मिन् सम्बन्धे यदा क्वचित् क्रियापदं विनिवर्तते तदा प्रतिपत्तुः सन्देहो भवति, क्रियाजनितोऽयं न वेति, तदा तत्र कर्मप्रवचनीयेन

---

१. अथ निपाता उच्चावचेष्वर्थेषु निपतन्ति, उपमार्थेऽपि कर्मोपसंग्रहार्थेऽपि पादपूरणाः । निरु०, १।२।१ ।
सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः ।
श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते ॥ (वा० प०,३।७।१५६)
२. उव्वटभाष्ये अनन्तभट्टभाष्ये च । वाज० प्राति०, ८।४९ ।
३. सम्बन्धाऽवच्छेदहेतवः कर्मप्रवचनीया इष्यन्ते । वा० प०, २।१९९ पुण्य० ।
४. कर्मप्रवचनीयाः । अष्टा०, १।४।८३ ।
५. अनुर्लक्षणे, अष्टा० १।४।८४, इति सूत्रादारभ्य अधिरीश्वरे । अष्टा० १।४।९७, इति सूत्रं यावदुक्ताः प्रादयः कर्मप्रवचनीयसंज्ञया पठिताः । (ले०)
६. कर्म प्रोक्तवन्तः कर्मप्रवचनीयाः । (अष्टा० १।४।८३) महाभा० ।
७. जनयित्वा क्रियां कांचित्सम्बन्धो विनिवर्तते ।
श्रूयमाणे क्रियाशब्दे सम्बन्धो जायते क्वचित् ॥ वा० प०, २।१९९ ।

तस्यां क्रियायां नियम्यते[1] । तत्र कर्मप्रवचनीयेन सम्बन्धविशेषः प्रत्याय्यते । अत एव क्रियाकृतं सम्बन्धविशेषं द्योतयन्तीति कर्मप्रवचनीया इति प्रामाणिका अभिदधते[2] । यथा—'शाकल्यस्य संहिताम् अनु प्रावर्षदि'त्यत्र लक्ष्यलक्षणभावं सम्बन्धं जनयित्वा निशमिक्रिया विनिवृत्ता । एवञ्च 'शाकल्यस्य संहिताम् अनुनिशम्य देवः प्रावर्षदिति' प्रयोक्तव्ये 'शाकल्यस्य संहितामनु प्रावर्षदि'ति प्रयुक्ते विनिवृत्तया क्रियया उपजातस्य सम्बन्धस्य द्योतनार्थमनुः कर्मप्रवचनीयः प्रयुज्यते ।

कर्मप्रवचनीयेन विनिवृत्ताया क्रियाया आक्षेपो न क्रियते । अन्यथा कर्मप्रवचनीयस्थले आक्षिप्तक्रियायोगात् कारकविभक्त्यैव द्वितीयासिद्धेः 'कर्मप्रवचनीययुक्ते द्वितीया'[3] इति विभक्तिविधायकं सूत्रं नारभ्येत । यथा 'प्रादेशं विपरिलिखती'त्यत्र विशब्देन विमानक्रिया आक्षिप्यते । तदाक्षिप्त-क्रियायोगे च कर्मणि द्वितीया[4] विधीयते । न तदर्थं किञ्चिदन्यत्, सूत्रमारभ्यते । तत्र 'प्रादेशं विमाय परिलिखती'ति प्रयोक्तव्ये 'प्रादेशं विपरिलिखती'ति प्रयुज्यते । अतोऽत्राऽपि कर्मप्रवचनीयस्थले यदि क्रियाया आक्षेपोऽभिमतः स्यात्तदा कर्मण्येव द्वितीयासिद्धेः, तदर्थमन्यत् सूत्रं नारभ्येत[5] । क्रियायोगे कर्मप्रवचनीयत्व विधीयते । तत्र कर्मप्रवचनीयेन गत्युपसर्गयोः बाधात् षत्वादिकार्यं न जायते[6] । 'सर्पिषोऽपि स्यादि'त्यत्र अपेः कर्मप्रवचनीयत्वेन उपसर्गनिमित्तकं षत्वं प्रबाध्यते । 'वृक्षमनु विद्योतते विद्युदि'त्यत्र 'गतिर्गताविति'[7] ति विघातो न भवति । 'सामान्यपरिहीनास्तु'[8] इत्यत्र परेः कर्मप्रवचनीयत्वेन उपसर्गत्वबाधाण्णत्वं न भवति । एवञ्च पाणिनीयेऽत्र तन्त्रे कर्मप्रवचनीयः क्रियाया द्योतको न स्वीकृतः, नाऽपि सम्बन्धस्यैव वाचकः, विनिवृत्तक्रियापदा-क्षेपकोऽपि न स्मर्यते । केवलमसौ सम्बन्धस्य भेदकोऽभ्युपगम्यते । यथा

---

१. स चोपजातः सम्बन्धो विनिवृत्ते क्रियापदे ।
कर्मप्रवचनीयेन तत्र तत्र नियम्यते ॥ वा० प०, २।२०१ ।

२. अत एव कर्म प्रोक्तवन्तः, क्रियाकृतं विशेषसम्बन्धं द्योतयन्तीति कर्मप्रवचनीया उच्यन्ते ।
वा० प०, २।१९९, पुण्य० ।

३. अष्टा०, २।३।८ ।

४. कर्मणि द्वितीया । अष्टा० २।३।२ ।

५. येन क्रियापदाक्षेपः स कारकविभक्तिभिः ।
युज्यते विपर्यथा तस्य लिखावनुपसर्गता ॥ वा० प० २।२०२ ।

६. कर्मप्रवचनीयत्वं क्रियायोगे विधीयते ।
षत्वादिविनिवृत्त्यर्थं स्वत्यादीनां विधर्मणाम् ॥ वा० प०, २।२०४ ।

७. अष्टा०, ८।१।७० ।

८. भाषापरि०, प्रत्यक्षखं० १५ ।

'शाकल्यस्य संहितामनुप्रावर्षदि'त्यत्र कर्मप्रवचनीयः अनुः संहितामिति द्वितीययाऽभिहितं सम्बन्धम् अवच्छिनत्ति ।

क्रियाया द्योतको नाऽयं सम्बन्धस्य न वाचकः ।
नाऽपि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः[1] ॥

वस्तुतस्तु पदे प्रयोक्तव्ये पदैकदेशप्रयोगस्य स्वाभाविकी जनप्रवृत्तिः दृश्यते । यथा 'देवदत्त' इति प्रयोक्तव्ये देवमात्रं दत्तमात्रं वा प्रयुज्यते, तथा वाक्यस्थलेऽपि वाक्ये प्रयोक्तव्ये वाक्यैकदेशप्रयोगप्रवृत्तिरपि जायते[2] । अतएव 'गृहं प्रविश' इति प्रयोक्तव्ये गृहमात्रं प्रविशमात्रं वा प्रयुज्यते । कर्मप्रवचनीयादिस्थलेष्वपि इयमेव लाघवप्रवृत्तिः संल्लक्ष्यते । 'प्रादेशं प्रादेशं विमाय परिलिखति' इति प्रयोक्तव्ये लाघवाऽनुरोधात् 'प्रादेशं विपरिलिखती'ति प्रयुज्यते । तथैव 'शाकल्यस्य संहितामनु निशम्य देवः प्रावर्षदि'ति गुरुवाक्ये प्रयोक्तव्ये लाघवानुरोधादेव 'शाकल्यस्य संहितामनु प्रावर्षदि'ति-लघुवाक्यं प्रयुज्यते । कर्मप्रवचनीयादिकल्पनन्तु अनुशासनपद्धतिवैचित्र्यमेव ।

## पदविभागविषये पाणिनीयं मतम्

पदविभागविषये प्रवृत्तं मतत्रयं सम्यगस्माभिः प्रत्यपादि । तेषां पदजातानां स्वरूपनिर्वचनम् अपि सम्यगकारि । तेषु पाणिनेराचार्यस्य किमभिप्रेतमिति विचारणीयमत्र । पाणिनिः द्विधापदवादी चतुर्द्धापदवादी वा, आहोस्वित् पञ्चधापदवादीति विचारो भाषातत्त्वदृष्ट्या महत्त्वपूर्णो विद्यते ।

पाणिनिना सर्वमपि पदजातं विभागद्वये प्रविभक्तम् । १. सुवन्तम्, २. तिङन्तञ्च[3] । सुपां प्रकृतिः नामपदं[4] भवति, तिङां च प्रकृतिः धातुरुच्यते[5] । तिङन्तमेव पदम् आख्यातपदेनोच्यते । पाणिनिना स्वीकृतोऽयं पदभेदः पूर्णतो मौलिको वैज्ञानिकश्च विद्यते । प्रत्ययानामनेकत्वेऽपि प्रायोगिकदृष्ट्या पाणिनिमते द्वावेव प्रत्ययौ मुख्यतमौ । तयोः प्रकृतिरपि द्विधेति पद-

---

१. वा० प०, २।२०६ ।

२. दृश्यन्ते हि वाक्येषु वाक्यैकदेशान् प्रयुञ्जानाः, पदेषु च पदैकदेशान् ।
अष्टा०, १।१।७५ । महाभा० ।

३. सुप्तिङन्तं पदम् । अष्टा० १।४।१४ ।

४. ङ्याप्प्रातिपदिकात् । अष्टा०, ४।१।१ ।

५. धातोः । अष्टा० ३।१।९१ ।

द्वैविध्यमुचितं विद्यते। सुबन्ततिङन्ताऽतिरिक्तमन्यत् किञ्चिदपि पदं नाऽवलोक्यते। सर्वविधानां पदानां सुबन्ते तिङन्ते चाऽन्तर्भावाद् नामाख्यातरूपो द्विधापदपक्षो भाषातात्त्विको विद्यते। पदचतुष्ट्वपक्षः पञ्चधापदपक्षो वा शब्दार्थदृष्ट्या यदि कथञ्चिदुपयुक्तः स्यादपि, तथाऽपि शब्दाऽनुशासनदृष्ट्या तस्य कश्चिद् विशेषो नाऽवलोक्यते। शब्दशास्त्रस्य प्रमाणभूतः खलु पाणिनिराचार्यः। स शब्दानुशासनदृष्ट्यैव पदविभागं कुरुते। अत एव पाणिनिः प्राक्तनं सर्वमपि मतमुपेक्ष्य 'सुप्तिङन्तं पदमि'ति स्वीचकार।

पाणिनीये तन्त्रे उपसर्गाः[1] निपाताः,[2] कर्मप्रवचनीयाश्च[3] शब्दाऽनुशासनसौविध्यार्थं परिभाष्यन्ते उपयुज्यन्ते च परमेतदत्र सुस्पष्टमवधेयं यत्तेषां पृथक्पदभेदो नाऽभिमतः। यद्येषां नामोल्लेखं स्वरूपनिर्वचनं वाऽधृत्य पदचतुष्ट्वपक्षः पञ्चधापदपक्षो वा पाणिनीये तन्त्रे समाश्रीयेत तदा अव्यय-गति- आत्मनेपद-परस्मैपदानामपि परिभाषणाद् व्यपदेशाच्च पृथक्पदत्वमापद्येत। असर्वविभक्तिकस्य तद्धितस्याऽपि पदपार्थक्यं दुर्वारं स्यात्। एवञ्च एतेषामपि परिगणनासम्भवात् किं कृतं चतुर्धापदेन पञ्चधा वा पदेन।

वाचामनुशासनार्थं हि पदान्वाख्यानं प्रवर्तते। नामाख्यातयोः वाक् साधु प्रविभज्यते, अनुशिष्यते च। वाग् वाक्यात्मिका भवति। वाक्यञ्चाऽखण्डं निरंशं स्थितलक्षणञ्च भवति। अयञ्चाऽभिन्नत्वव्यपदेशो मध्यमान्तायां वाचि सुस्पष्टमवगन्तुं शक्यते। वैखर्यां समुपलब्धं वाक्यं कारकोत्कलितक्रियास्वभावं भवति। तत्र अंशांशिकल्पनया कारकरूपं क्रियारूपञ्च विभागद्वयं सम्भवति। अयं नामाख्यातरूपो विभाग एव वाचां प्राथमकल्पिको विभागो विद्यते। 'आख्यातं साऽव्ययकारकविशेषणं वाक्यम् आहोस्विद् 'आख्यातं सविशेषणं वाक्य-[4]मि'त्येवं वाक्यं परिभाषमाणस्य कात्यायनस्याऽपि नामाऽऽख्यातरूपो द्विविध एव वाक्यात् पदापोद्धारः प्रतीयते। सिद्धलक्षणं नामपदम्, साध्यलक्षणञ्चाख्यातपदमस्ति। एवञ्च सिद्धसाध्यलक्षणांशद्वयविषयो नामाख्यातरूपः पदापोद्धारः। उद्देश्यविधेयलक्षणेनाऽपि पदापोद्धारोऽयं साधयितुं शक्यते। वाक्ये नामपदमुद्देश्यभूतम्, आख्यातपदञ्च विधेयभूतं जायते। एवं रीत्या वाक्ये आख्यातपदस्यैव नामपदानि विशेषणानि भवन्ति। विशेषणानि च क्वचित् सामानाधिकरण्येन, क्वचिच्च वैयधिकरण्येन भवन्तीति वाक्यस्वरूपनिरूपणायामस्माभिः सम्यक् प्रतिपादितम्। अतः 'आख्यातं सविशेषणं वाक्यम्' इति

१. अष्टा०, १।४।५९।
२. अष्टा०, १।४।५६।
३. अष्टा०, १।४।८३।
४. अष्टा० २।१।१ महाभाष्य।

वाक्यलक्षणं द्विधापक्षदृष्ट्या एवाऽभ्युपगम्यते ।

निपातानामुपसर्गाणां कर्मप्रवचनीयानाञ्चाऽत्रैव नामाख्यातयोः समावेशो दृश्यते । निपाता नामपदेषु एवाऽन्तर्भवन्ति । सत्त्वार्थाऽभिधायि सिद्धार्थवाचि-उद्देश्यलक्षणं वा नामपदं भवतीति प्रागतोऽस्माभिः प्रत्यपादि । निपाता अपि नामपदगतं विशेषमर्थं द्योतयन्तो नामपदेष्वेवाऽन्तर्भवन्ति । सिद्धं ह्यर्थं निपाताः साक्षादभिदधतु, नामार्थगतं विशेषं वा द्योतयन्तु, नाऽनेन काकदन्त-परीक्षणेन नामनिपातयोः कश्चिद् भेदो दृश्यते । स्वरादिषु ये सत्त्वप्रधानाः शब्दाः तेऽपि नामपदान्येव । ये च हिरुगादयः क्रियार्थप्रधानाः शब्दाः, ते आख्यातपदेष्वन्तर्भवन्ति । अत्रेदमप्यवधेयम्—अत्र न केवलं तिङन्तमेव आख्यात-पदमुच्यते । क्रियाप्रधानं सर्वमपि पदमाख्यातपदं स्वीक्रियते[1] । अत एव साध्यार्थगतविशेषद्योतनाद् विधेयार्थगतविशेषप्रतिपादनाद्वा उपसर्गकर्म-प्रवचनीयपदान्यपि आख्यातपदानि अभ्युपगम्यन्ते । क्रियाविशेषोपजनित-सम्बन्धस्य अवच्छेदहेतवः कर्मप्रवचनीया भवन्तीति कर्मप्रवचनीयविवेचनायां सुस्पष्टं विचारितमस्माभिः । एवञ्च सम्बन्धविशेषद्योतनद्वारेण क्रिया-विशेषस्य प्रकाशनात् कर्मप्रवचनीया उपसर्गेष्वेव समाविष्टा भवन्ति । एवं नाम आख्यातञ्चेति पदद्वयमेवाऽवशिष्यते ।

पस्पशायां पतञ्जलेः नामाख्यातोपसर्गनिपातकथनेन पदचतुष्ट्वेनाऽभि-प्रायः । तत्र तु यास्कोक्तं पतञ्जलिना अनूदितम् । तत्र तु व्याकरणाऽध्ययन-वैशिष्ट्यप्रतिपादनमेव पतञ्जलेरभिप्रेतम् । अत्र विषये विस्तृतो विचारोऽस्माभिः शब्दस्वरूपनिरूपणायां परादिवाचां स्वरूपव्याख्याप्रसङ्गे समुप-स्थापितः ।

## (३, ४) प्रकृतिप्रत्ययौ

अनुशासनीयेषु शब्देषु प्रकृतेः प्रत्ययस्य च विशिष्टं स्थानं परिगण्यते । पदान्वाख्यानस्य इमावेव आधारौ । प्रकृतिप्रत्ययविभागेन शब्दानामविकलं स्वरूपं ज्ञायते । एष एव च शाब्दिकानां परमः पुरुषार्थः । शब्दानाम् अविकलं स्वरूपं परिज्ञातुं व्याकरणादृते अन्यत् किञ्चिल्लघीय उपायान्तरं न दृश्यते । पदेषु प्रकृतिप्रत्ययौ कल्प्येते ।

---

१. नहि तिङन्तमेवाख्यातम्, क्रियाप्रधानस्य सर्वस्यैव तल्लक्षणत्वात् । अत एवोपसर्गकर्मप्रवचनीयपदान्यपि आख्यातपदमेव, साध्यार्थगतविशेषद्योतनात् ।

वा० प०, ३।१।१, हेला० ।

इह पाणिनीये तन्त्रे प्रकृतिशब्दस्यार्थेऽङ्गशब्दोऽपि प्रयुज्यते । यस्माच्छब्दस्वरूपात् प्रत्ययो विधीयते, तस्मिन् प्रत्यये परे पूर्वं यच्छब्दस्वरूपं भवति तदङ्गसंज्ञकमिति व्यवह्रियते[१] । किन्तु अङ्गप्रकृत्योः कश्चिद् भेदोऽपि स्वीकृतः । 'भवामी'त्यत्र मिपः प्रकृतिः 'भू' इति अस्ति । परं भवामौ अङ्गम् 'भव' इत्यस्ति । यत्र तु अङ्गप्रकृत्योरेकरूपत्वम्, तत्रैकस्मिन्नेव शब्दस्वरूपे द्वयोर्व्यपदेशः । यथा —'वृक्षाय' इत्यत्र वृक्षशब्द एव प्रकृतिः वृक्षशब्दस्यैव चाऽङ्गसंज्ञाऽपि भवति ।

अनुत्पन्नप्रत्यया प्रकृतिः स्वार्थमात्रमपि नाऽभिधत्ते । कर्तृकर्माद्यर्थन्तु कथमप्यभिधातुं न क्षमा । लौकिकव्यवहारेषु प्रकृतिप्रत्ययसमुदाये प्रयुज्यमानेऽन्वयव्यतिरेकाभ्यां प्रकृत्यर्थे प्रकृतेः प्रत्ययार्थे च प्रत्ययस्य शक्तिः कल्प्यते । प्रकृत्यर्थस्य प्रकर्षाऽपकर्षे प्रत्ययाः विधीयन्ते[२] । प्रत्ययानां शब्देभ्य एव विधानाद् यद्यपि शब्दानामेव प्रकर्षादिनिमित्ताय प्रत्ययैः भाव्यं न तु तदर्थस्य प्रकर्षादि-निमित्ताय, तथापि शब्दानां प्रकर्षाऽपकर्षाऽभावाद् अर्थप्रकर्षाऽपकर्षयोः प्रत्यया विधीयन्त इति सिद्धान्तः कल्प्यते । प्रकृतिप्रत्ययसमुदायस्यैव अर्थप्रत्यायकत्वं स्वीकृतम् । अतएव प्रकृत्यर्थस्य प्रत्ययार्थस्य वाऽवयवार्थस्याऽप्रसिद्धिः प्रयोगे दृश्यते[३] । प्रत्ययं विना प्रकृतेः प्रयोगो न भवति । पतञ्जलिना प्रयोगनियम एष स्वीकृतः—

'न केवला प्रकृतिः प्रयोक्तव्या नाऽपि केवलः प्रत्ययः[४] ।'

द्विविधोऽयं नियमः स्वीक्रियते । १. प्रत्ययपरैव प्रकृतिः प्रयोक्तव्या । २. प्रकृतिपरश्चैव प्रत्ययः प्रयोक्तव्यः[५] । अन्वर्था हि 'प्रत्ययः' इतीयं संज्ञा । प्रतीयते येनार्थः स प्रत्ययः । प्रकृतिप्रत्यययोरस्ति नित्यसम्बन्धः[६] नित्यसम्बन्धत्वादुभयोः केवलस्य प्रयोगो न भवति । अनुत्पन्नप्रत्ययकेन वृक्षशब्देन कश्चिदर्थबोधो न भवति । न वा केवलेन सुप्रत्ययोच्चारणेन कश्चिद् अर्थाऽवगमो भवति ।

---

१. यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् । (अष्टा०, १।४।१३)

२. कस्य पुनः प्रकर्षे प्रत्यय उत्पद्यते ? ङ्याप्प्रातिपदिकादिति वर्तते । ङ्याप्प्रातिपदिकस्य प्रकर्षे ।···शब्देऽसम्भवादर्थे विज्ञास्यते । अष्टा०, ५।३।५५ महाभा० ।

३. समुदायस्याऽर्थे प्रयोगादवयवाऽर्थानामप्रसिद्धिः । अष्टा० १।२।४५ महाभा० ।

४. अष्टा०, ३।१।६७, महाभा० ।

५. उभयनियमोऽयम्—प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः, प्रत्ययपरैव च प्रकृतिरिति । अष्टा० ३।१।२, महाभा० ।

६. प्रत्ययेन नित्यसम्बन्धात् केवलस्याऽप्रयोगः । अष्टा०, १।२।४५ महाभा० ।

'वृक्षः' इति सप्रत्ययके शब्दोच्चारिते च 'मूलस्कन्धफलपलाशवान् एकत्वञ्चे'-ति समुदितमर्थमवगच्छन्ति जनाः ।

द्विप्रकारका हि प्रत्यया विद्यन्ते । धातोः विधीयमानाः, प्रातिपदिकाच्च । धातोः खलु द्वौ प्रत्ययौ विधीयेते । १. तिङ्, २. कृतश्च । अतोऽन्ये प्रत्ययाः प्रातिपदिकाद् विधीयन्ते । प्रत्ययमाश्रित्यैव धातुः प्रातिपदिकञ्च लोकेऽर्थ-प्रत्ययं जनयति । तदाह भर्तृहरिः—

अकृत्स्नविषयाभासं शब्दः प्रत्ययमाश्रितः ।
अर्थमाहात्म्यरूपेण स्वरूपेणाऽनिरूपितम्[1] ॥
कृत्तद्धितानामर्थश्च केवलानामलौकिकः ।
प्राग्विभक्तेस्तदन्तस्य तथैवाऽर्थो न विद्यते[2] ॥

## शब्दभेदाः

इतः प्राग् वाचां द्विप्रकारको विभागः प्रदर्शितः । परा-पश्यन्ती-मध्यमा-वैखरीभेदेन प्रथमो विभागः । नामाख्यातोपसर्गनिपातकर्मप्रवचनीयभेदेन च द्वितीयो विभागोऽभिप्रेतः । तत्र वाचां परादिभेद औत्पत्तिकोऽवस्थाभेद-निमित्तको भेदो विद्यते । नामादिभेदश्च वैखरीवाचामनुशासनसौविध्याय व्यवस्थानिमित्ताय च कल्प्यते ।

उपरि वर्णितस्य स्वरूपवतः शब्दस्य प्रवृत्तिनिमित्तभेदाच्चत्वारो भेदा जायन्ते । अत्र प्रकरणे शब्दभेदपदेन ते एव प्रवृत्तिनिमित्तभेदजन्याः शब्द-विभागा विवक्षिताः । स गुणः प्रवृत्तिनिमित्तमुच्यते, यस्य गुणस्य भावाद् द्रव्ये अभिधातव्ये घटादयः शब्दाः प्रयुज्यन्ते[3] । कम्बुग्रीवादिमन्तं गुणसामान्य-माश्रित्य तदर्थाऽभिधानाय घटशब्दः प्रयुज्यते ; अतो घटशब्दस्य कम्बु-ग्रीवादिमदर्थसामान्यं प्रवृत्तिनिमित्तम् । अत्रैतदवधेयं यत् प्रवृत्तिनिमित्तं कश्चिद् व्यक्तिविशेषो न भवति । अपि तु तद्वस्तुसामान्यं तस्य शब्दस्य प्रवृत्तिनिमित्तं भवति यथा घटशब्दस्य कम्बुग्रीवादिमद्वस्तुसामान्यमेव प्रवृत्तिनिमित्तमस्ति, न तु कश्चिद् रुद्रदत्तस्वामिकः कम्बुग्रीवादिमद्वस्तुविशेषः । प्रवृत्तिनिमित्तस्य स्वरूपमस्माभिरर्थकाण्डे विशदमुपस्थास्यते ।

प्रवृत्तिनिमित्तभेदः शब्दभेदहेतुरुच्यते । शब्दानामर्थेषु प्रयोक्तृणां या

---

१. वा० प०, ३।३।५४ ।

२. वा० प०, २।२१३ ।

३. यस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने—तद्गुणे वक्तव्ये प्रत्ययेन भवितव्यम् । अष्टा०, ५।३।४७, महाभा० ।

प्रवृत्तिरस्ति, प्रवृत्तिनिमित्तभेदात् सा प्रकारचतुष्टयवती[1] विद्यते—१. जातिः २. गुणः, ३. क्रिया, ४. यदृच्छा (अनुकरणम्) च। प्रवृत्तिचातुर्विध्या-च्छब्दानामपि चातुर्विध्यमस्ति—

१. जातिशब्दः, २. गुणशब्दः, ३. क्रियाशब्दः, ४. यदृच्छाशब्दश्च।[2]

शब्दानां त्रयीं प्रवृत्तिं स्वीकृत्य यदृच्छाशब्दाः पतञ्जलिना प्रत्याख्याताः।[3] तदत्र तेषां शब्दभेदानां स्वरूपनिरूपणा विधीयते।

## १, २. जातिशब्दा गुणशब्दाश्च—

गृहीतजातिसम्बन्धो हि शब्दोऽर्थं प्रत्याययति। व्यक्तीनामानन्त्यात्तत्र सम्बन्धग्रहणाऽसम्भवाज्जातौ सम्बन्धग्रहोऽभ्युपगम्यते। जातिपदेनाकृतिपदेन वा प्रवृत्तिनिमित्तरूपोऽर्थः प्रतीयते।[4] श्रुतैः शब्दैराद्यप्रत्ययः प्रवृत्तिनिमित्तरूप-स्यैवाऽर्थस्य भवति। शब्दाश्चक्षुरादिवज्जातिनिरपेक्षमर्थं न बोधयन्ति। चक्षुरादीनि तु जातिनिरपेक्षमपि वाहदोहादिकमाश्रियमर्थं गमयन्ति। तत्र जातिरुपलक्षणा भवति। 'अदो देवदत्तगृहं यत्राऽसौ काकः' इत्यत्र यथा उप-लक्षणरूपेण काकाऽभिसम्बन्धो गृह्यते तथा तत्राऽपि जातिनिरपेक्षस्थले सम्बन्धग्रहः। शाब्दप्रत्ययस्थले जातेरुपलक्षणत्वं स्वीकर्तुं न शक्यते। यतो हि उपलक्षणत्वं तत्र स्वीक्रियते यत्र सम्बन्धग्रहणोत्तरकालं प्रतीयमानोऽर्थः प्राति-स्विकेनाकारेण (अस्पष्टाकारेण) प्रतीयते न तु तदाकारेणैव। यथा 'अदो देवदत्तगृहं यत्राऽसौ काकः' इति श्रुते प्रतीयमानं देवदत्तगृहं न काकाधारमेव प्रतीयते, अपि तु प्रातिस्विकेनाकारेण। गौरिति कथिते सास्नालाङ्गूलककुद-खुरविषाणिरूपेण जात्यवच्छिन्ना व्यक्तय एव प्रतीयन्ते न तु खण्डादिरूपेण।

अत्रेदमवधेयम्—जातिवादिनां कृते कदाचिद् व्यक्तिरुपेक्षिता न भवति। जातिप्रतीतेरयं स्वभावो विद्यते यत्सा व्यक्तिमपि गोचरयति। केचनाचार्याः जातिशब्दवादम् इच्छन्ति, केचिच्च व्यक्तिशब्दवादम्। पाणिनीयेऽत्र तन्त्रे तु उभयवादः। पाणिनेः जातिपक्षोऽपि अभिप्रेतो व्यक्तिपक्षश्चापि अनुमत इति

---

१. शब्दानामर्थे या प्रवृत्तिरस्ति सा प्रवृत्तिनिमित्तभेदात् प्रकारचतुष्टयवतीत्यर्थः।
अष्टा०, प्रत्या० सू० २, महाभा०, प्र०, उद्द्यो०।

२. चतुष्टयी शब्दानां प्रवृत्तिः—जातिशब्दाः, गुणशब्दाः, क्रियाशब्दा, यदृच्छाशब्दाश्च।
अष्टा०, प्रत्या० सू० २, महाभा०।

३. त्रयी च शब्दानां प्रवृत्तिः—जातिशब्दाः, गुणशब्दा, क्रियाशब्दा इति न सन्ति यदृच्छा-शब्दाः। अष्टा०, प्रत्या० सू०, २ महाभा०।

४. आकृतिपदेन प्रवृत्तिनिमित्तमुच्यते। अष्टा०, २।१।१, महाभा०, प्र०, उद्द्यो०।

पतञ्जलिना प्रदर्शितम् ।[1] शब्दोच्चारिते शब्दमहिम्ना जातिः व्यक्तिश्चेति उभयं प्रतीयते । अत उभयं शब्दः उभयञ्च शब्दार्थ इति गम्यते । तत्र किञ्चिद् मुख्यतात्पर्येणोच्यते किञ्चिच्चान्तरीयकतया । 'गौरवध्या' इत्यत्र जातौ तात्पर्यम्, व्यक्तेश्चान्तरीयकत्वम् । 'गामभ्याज शुक्लां रुद्रदत्त' इत्यत्र गोव्यक्तौ तात्पर्यम्, जातेश्चान्तरीयकत्वम् । यदा च गवादिगता जातिः स्वातन्त्र्येणाऽभिधेया भवति तदा गोत्वादिशब्दैः साऽभिधीयते ॥

गुणशब्दा विशेषका भवन्ति । सम्भवे व्यभिचारे च सति प्रयुज्यन्ते । 'गौरयं शुक्लः' इत्यत्र गवि शुक्लत्वसम्भवाच्छुक्लरूपो गुणशब्दः प्रयुक्तः । गवि एकशफवत्त्वस्याऽसम्भवाद् गोशब्देन सह एकशफवद्गुणशब्दो न प्रयुज्यते । गुणशब्दस्य प्रयोगस्थले व्यभिचारोऽपि आवश्यको भवति । महति गोमण्डले असत्यां शुक्लायां गवि 'शुक्लां गामभ्याज' इत्यत्र गुणशब्दप्रयोगोऽयुक्त एव । तस्मिन् गोमण्डले शुक्लायां गवि सत्यामेव तस्या अभ्याजनं सम्भवति । यतोऽत्र शुक्लगवां व्यभिचारो नास्ति, अतोऽत्र शुक्लगुणशब्दो न प्रयोक्तव्यः ।

गुणशब्देन प्रवृत्तिनिमित्तमपि लक्ष्यते । 'याप्ये पाशप्'[2] इति सूत्रं भाषमाणः पतञ्जलिः शब्दानां प्रवृत्तिनिमित्तं गुणं व्याचष्टेति सद्य एवाऽस्माभिः प्रतिपादितम् । कदाचिद् गुणो गुणिविशेषको दृश्यते, कदाचिच्च गुणिना गुणो व्यपदिश्यते । गुणेन गुणिनि व्यपदिष्टे गुणगुणिनोः पदयोः सामानाधिकरण्यं भवति । यथा 'शुक्लः पटः' इति । गुणिना गुणे व्यपदिष्टे तु गुणगुणिनोः पदयोः वैयधिकरण्यं भवति । यथा 'पटस्य शुक्लः' इति ।

जातिविषये व्यक्तिविषये च पाणिनिराचार्य उभयवादीति चर्चितं प्राक् । तदनुरोधादेव कात्यायनः जातिशब्देन द्रव्यस्य जातेश्चाऽप्यभिधानं समाचष्ट ।[3] पतञ्जलिना आचार्यद्वयस्य प्रवृत्तिरियं व्याख्याता ।[4] नैष वाचनिकः सिद्धान्तः पाणिनेराचार्यस्य, अपि तु लोकव्यवहारसिद्ध एव । महति गोमण्डले समासीनं कञ्चन गोपालकं यदा कश्चिदेवं पृच्छति -- अस्त्यत्र 'काञ्चिद् गां पश्यसी'ति तस्य प्रयोक्तुः जातिवाचकेनाऽनेन गोशब्देन द्रव्यं विवक्षितम् । तद्यदा जातिवाचकेन शब्देन द्रव्यमभिधेयं भवति तदा बहुवचनमुच्यते, यदा च सामान्याऽभिधानमभिमतं तदैकवचनमुच्यते । जातिव्यक्तिविषये वाजप्यायनस्य व्याडे-

---

१. उभयमित्याह । उभयथा ह्याचार्येण सूत्राणि पठितानि । अष्टा०, महाभा०, पस्पशा० ।

२. अष्टा०, ५।३।४७ ।

३. जातिशब्देन द्रव्याभिधानम् । अष्टा०, १।२।५८, वा० ६ ।

४. जातिशब्देन द्रव्यमप्यभिधीयते जातिरपि । अष्टा०, १।२।५८, महाभा० ।

श्चाचार्यस्य परस्परं विवदमानं मतं विद्यते। तद्विषयेऽस्माभिरर्थकाण्डे जातिशब्दार्थनिरूपणायां सम्यग् विचारयिष्यते।

३. क्रियाशब्दा: —

नामाख्यातयो: स्वरूपस्य निरूपणाप्रसङ्गे क्रियापदं चर्चितमस्माभि:। कारकाणां प्रवृत्तिविशेष: खलु क्रिया कथ्यते।[1] कारुरन्यथा वृक्षच्छेदने प्रवर्तते अन्यथा च लताच्छेदने। यथा द्रव्यं द्रव्यस्य निवर्तकं भवति तथा क्रियाऽपि क्रियां निवर्तयति।[2] रुग्णे देवदत्ते कश्चित् कञ्चित् पृच्छति, 'किनवस्थो देवदत्तस्य व्याधि:'? स ब्रूते 'वर्द्धते' इति। अपर आह 'अपक्षीयते' इति। अपक्षयतिना वर्द्धतेर्निवृत्ति: भवति। अन्य: कश्चिद् ब्रूते, 'स्थित:' इति। तेनोभयस्याऽपि निवृत्ति: जायते। अत: क्रिया क्रियान्तरस्य निवर्तिका भवतीति स्वीक्रियते। यद्यपि क्रिया नाम पिण्डीभूता सती निदर्शयितुं न शक्यते तथाऽपि अनुमानेन गम्यते। केषुचन साधनेषु सन्निहितेषु 'पचती'त्येतत् प्रयुज्यते। केषुचन साधनेषु च सत्सु 'भुङ्क्ते' इति प्रयुज्यते। एवञ्च कदाचित् पचतीति प्रयुज्यते, कदाचिच्च न प्रयुज्यते। अतोऽनुमीयते यद् यस्मिन् साधने सन्निहिते 'पचति' इत्येतत् प्रयुज्यते सा खलु क्रिया। ततोऽतिरिक्तानि नामानि, तद्विशेषणानि वा सन्ति। अथवा यया देवदत्त इह भूत्वा पुन: कालान्तरे मुजफ्फरपुरादौ दृश्यते सा खलु क्रिया भवति। अतोऽनुमानगम्या क्रिया भवतीति स्वीक्रियते।[3]

येषां शब्दानां करोतिना सामानाधिकरण्यमस्ति ते क्रियाशब्दा इति विज्ञेयम्।[4] तद्यथा—

| | | |
|---|---|---|
| (क) | किं करोति ? | पचति। |
| (ख) | किं करिष्यति ? | पक्ष्यति। |
| (ग) | किमकार्षीत् ? | अपाक्षीत्। |
| (घ) | किमिदम् ? | पचनम्। |
| (ङ) | कोऽसौ ? | पाक:। |

१. कारकाणां प्रवृत्तिविशेष: क्रिया। अष्टा०, १।३।१, महाभा०।

२. क्रियाया: क्रिया निर्वर्तिका भवति। अष्टा०, १।३।१, महाभा०।

३. क्रिया नामेयम् अत्यन्ताऽपरिदृष्टा। अशक्या क्रिया पिण्डीभूता निदर्शयितुम्। यथा गर्भो निर्लुठित:। साऽसावनुमानगम्या। अष्टा०, १।३।१, महाभा०।

४. कथं पुनर्ज्ञायते क्रियावचना: पचादय: इति ? यदेतेषां करोतिना सामानाधिकरण्यम्। अष्टा० १।३।१, महाभा०।

एवञ्च क्रियावचनाः पचादयः क्रियाशब्दा सन्तीति सारः।

सामान्यतः 'धातोरर्थः क्रिया' स्वीक्रियत इति वैयाकरणसम्मतं क्रियालक्षणं पुरुषोत्तमदेवः स्वकीये कारकचक्राऽभिधे ग्रन्थे प्रत्यपादयत्।[1] तेन नशिप्रभृतिभिः धातुभिरभिधीयमानो भावोऽपि क्रियैव भवति।

४ यदृच्छाशब्दाः

वस्तुनिर्देशदृष्ट्या शब्दानां द्वैविध्यं व्याख्यातुं शक्यते। १. जातिवाचकाः, २. व्यक्तिवाचकाश्च। येन शब्देन अनेकव्यक्त्यनुगतमेकं तत्त्वमभिधीयते स जातिवाचकः शब्दः। यथा घटादिशब्दाः जातिवाचका विद्यन्ते। तत्र अनेकव्यक्तिसमवेतस्य घटत्वस्योपलम्भात्। येन शब्देन नियतवस्तुनोऽभिधानं भवति स व्यक्तिवाचकः शब्दः कथ्यते। अनुकरणशब्दानाम् अनुकार्य मात्रार्थकतया देवदत्तादिसंज्ञाशब्दानाञ्च तद्वस्तुमात्रनिर्देशमात्रपरतया व्यक्तिवाचकत्वं स्वीक्रियते।

इमे व्यक्तिवाचका अनुकरणशब्दाः संज्ञाशब्दाश्च यदृच्छाशब्दा[2] भवन्ति। 'गवित्ययमाह' इत्यत्र गोशब्दस्य सास्नालाङ्गूलादिमदर्थो नास्ति, अनुकार्यो गोशब्द एवाऽत्र गोशब्दस्यार्थो विद्यते। अशक्तिजाऽनुकरणजन्या अपशब्दा अपि यदृच्छाशब्दाः कथ्यन्ते। 'ऋतक' इति प्रयोक्तव्येऽसामर्थ्यात् कश्चिद् 'लृतक' इत्याह। तत्र अनुकृत-लृतकशब्दो यदृच्छाशब्दोऽस्ति। अनुकृतस्य लृतकशब्दस्याऽनुकार्य ऋतकशब्द एवार्थः। संख्याशब्दानाम् इव यदृच्छाशब्दा अपि अक्तपरिमाणकमर्थमाहुः जातिशब्दा गुणशब्दाश्च न तथा। ते तु कृत्स्ना अपि स्ववाच्यव्यक्तीः प्रत्याययन्ति। जातिशब्दानां गुणशब्दानाञ्च यावन्ति वाच्यवस्तूनि सम्भवन्ति तावन्ति वस्तूनि अभिधेयानि भवन्ति। यथा तैलं घृतमित्यादिजातिशब्दाः खार्यामपि प्रवर्तन्ते द्रोणेऽपि दृश्यन्ते। मणपरिमाणेऽपि सन्ति सेटकपरिमाणे अपि। शुक्लः, नीलः, कृष्णः इत्यादिगुणशब्दा महत्यपि प्रयुज्यन्ते वटकणिकामात्रेऽपि।

प्रायशो लौकिका व्यवहारा यदृच्छाशब्दैः सम्पाद्यन्ते। यदृच्छाशब्दा ऐच्छिका भवन्ति। ऐच्छिकानां शब्दानां स्वरूपद्वयं सम्भवि। तत्र १. स शब्दो यस्याऽभिधेयो व्यक्तिविशेषः स्यात्। यथा देवदत्तादयः संज्ञाशब्दाः अनुकरण-

१. धातोरर्थः क्रिया वैयाकरणानां क्रियालक्षणम्। तेनाऽभावोऽपि धातुना अभिधीयमानः क्रिया भवति। का० च०, पञ्चमीका।

२. देवदत्तशब्दो यदृच्छाशब्दः। अष्टा० १।२।५८, का० वृ०, न्या०।

शब्दाश्च । २. स शब्दो यस्याऽभिधेया जातिः स्यात् । यथा टि-घु-भादिशब्दाः पाणिनिकृताः संज्ञाशब्दाः । व्यक्तिविशेषाऽभिधायकाः शब्दाः यदृच्छाशब्दा विद्यन्ते ।

सूक्ष्मदृष्ट्या सर्वे शब्दा जातिवाचका एवेति प्रामाणिका अभ्युपगच्छन्ति । स्थूलदृष्ट्यैव लौकिकैः व्यक्तिवाचका यदृच्छाशब्दा व्यवह्रियन्ते । यदृच्छाशब्देष्वपि प्रशस्ताः क्रिया गुणा वा आरोप्यन्त एव । तत्क्रियां गुणं वाश्रित्यैव यदृच्छाशब्दः प्रवर्तते । यदा कदाचित् कश्चित् किञ्चिद् व्यक्तिविशेषवाचकं पदं प्रयुङ्क्ते तदा तत्र काञ्चित् क्रियां कञ्चन गुणं वाश्रयत्येव । यत्र च किञ्चिदपि व्युत्पत्तिनिमित्तं न सम्भवति तत्रापि शब्दस्वरूपमेव निमित्तमादाय शब्दाः प्रवर्तन्ते ।[1] पतञ्जलिः तात्त्विकदृष्ट्या यदृच्छाशब्दं न स्वीकुरुते । अतएव यदृच्छाशब्दं प्रतिपाद्याऽपि पतञ्जलिर्यदृच्छाशब्दं प्रत्याचष्ट ।[2] तन्मते त्रीण्येव प्रवृत्तिनिमित्तानि शब्दानाम्, १. जातिः, २. गुणः, ३. क्रिया च । यदृच्छाविषयकप्रवृत्तिनिमित्ताऽभावाद् यदृच्छाशब्दो नास्तीति पतञ्जलेराशयः ।

यद्यपि सिद्धान्तदृष्ट्या सर्वे शब्दाः स्वप्रवृत्तौ यत्किञ्चिन्निमित्तमादधते तथापि निर्धनस्य जनस्य 'लक्ष्मीपतिरि' ति नाम दृष्ट्वा अन्धस्य च 'नयनसुखः' इति च संज्ञादर्शनाद् यदृच्छाशब्दैश्च लौकिकव्यवहारस्य सम्पाद्यमानत्वात् तामुपेक्षितुं न शक्यते । अतो यदृच्छाशब्दोऽपि व्यवहारहेतुरिति सोऽपि शब्दभेदोऽभ्युपगन्तव्यः ।

१. यत्राऽप्यन्यनिमित्तं नाऽस्ति तत्राऽपि स्वरूपमेव निमित्तमादाय वाच्ये प्रवर्तन्ते । अष्टा॰ ६।३।३८, प्र॰ कौ॰ बहु॰ स॰, प्रसादटी॰ ।

२. त्रयी च शब्दानां प्रवृत्तिः, जातिशब्दाः, गुणशब्दाः, क्रियाशब्दा इति । न सन्ति यदृच्छाशब्दाः । अष्टा॰, प्रत्या॰ सू॰ २, महाभा॰ ।

# शब्दकाण्डे षष्ठः समुद्देशः

## साध्वसाधुशब्दविमर्शः

पाणिनीयसूत्राणां प्रामाणिकः प्रवक्ता पतञ्जलिः व्याकरणशास्त्रस्य साक्षात्प्रयोजनं शब्दानुशासनमभ्यधात् ।[1] काकवाशितादीनामव्यक्तवाचामपि शब्दपदवाच्यत्वेन तेषामपि अनुशासनप्रसङ्गेन पतञ्जलिः स्वयमेव अनुशासनीयस्य शब्दस्य सुस्पष्टं स्वरूपं निर्दिदेश । पतञ्जलिमते लौकिकानां वैदिकानाञ्च शब्दानामनुशासकं व्याकरणं विद्यते ।[2] लौकिकेभ्यः शब्देभ्यो वैदिकानां शब्दानां प्राधान्यं प्रख्यापयितुम् उभयोः पार्थक्येन निर्देशः पतञ्जलिनाऽभ्युपगतः । वैदिकानामपि शब्दानां लौकिकत्वेनोभयोः कश्चिद् भेदो नाऽस्ति । कैयटमते वैदिकशब्दानामपभ्रंशशब्दानाञ्च परस्परं साम्याऽतिशयाद् वैदिकशब्देभ्योऽपभ्रंशशब्दपरिहारः प्रयत्नसाध्यो भवति । लौकिकसंस्कृतस्याऽपभ्रंशस्य च परस्परं वैषम्येण तयोः भेदाऽवगतिः सारल्येनाऽपि जायते । एतावन्मात्रमेव वैदिकलौकिकशब्दानां परस्परं भेदः । अतोऽन्यो वैदिकलौकिकयोः शब्दयोः नास्ति कश्चिद् भेदः । उव्वटः,[3] अनन्तदेवः,[4] शबरस्वामी[4] च वैदिकशब्दानां लौकिकशब्दानां च ऐक्यमेव समाचष्ट ।

एतावति स्पष्टीकरणे सत्यपि अनुशासनीयस्य साधुशब्दस्य स्वरूपावगतिः सुस्पष्टं न भवति । यतो हि लोके सास्नादिमत्प्रवृत्तिं प्रख्यापयितुं गवादयो गाव्यादयश्च सममेव प्रयुज्यमाना अवलोक्यन्ते । अर्थाऽवगतिरपि उभयैः समानैव दृश्यते । बहूनाञ्च कृते गाव्यादिभिरेव साधीयानर्थसम्प्रत्ययो जायते । किम् उभयेऽपि अनुशासनीया अन्यतरो वेति जिज्ञासायां पतञ्जलिः साधिकारमभ्यधात्—यद् गवादय एव शब्दा अनुशासनविषया विद्यन्ते, न

---

१. अथ शब्दाऽनुशासनम् । महाभा०, पस्पशा० ।

२. केषां शब्दानाम् ? लौकिकानां वैदिकानाञ्च । अष्टा०, महाभा०, पस्पशा० ।

३. वैदिकानां लौकिकत्वेऽपि प्राधान्यख्यापनाय पृथगुपादानम् ।……तेषां तु प्राधान्यं यत्नेनाऽपभ्रंशपरिहारात् । अष्टा०, महाभा०, पस्पशा०, प्र० ।

४. य एव वैदिकास्त एव लौकिकाः, त एव तेषामर्थाः । वाज० प्रा० १।३, उ० भा० ।
(द्र०—वाज० प्रा० १।३, अ० भा०) (द्र०—मीमां० द० १।३।२०, शा०भा०)

गाव्यादयः। यतो गवादीनां शब्दानामनुशासनं लाघवमावहति। पतञ्जलिराचार्यः 'गवादयः साधवः शब्दाः' इति स्वीकुरुते, 'गाव्यादयश्चाऽसाधव' इति।[1]

तत्र साधवो गवादयोऽनादयः शब्दाः सन्ति, गाव्यादयश्च आदिमन्तोऽपभ्रंशा इति शब्दतत्त्वविदः स्वीकुर्वते। साधुशब्दं प्रयुयुक्षमाणो जनः करणवैकल्यादिनाऽपराधाद् अपशब्दं प्रयुङ्क्ते इति जैमिनिराचार्यो[2] मनुते। महता खलु यत्नेन शब्दा उच्चार्यन्ते। शब्दभावनासंस्कृतः प्राणवायुः नाभेरुत्थितः उरसि विस्तीर्णः कण्ठे पुञ्जीभूतः ऊर्ध्वं गच्छन् मूर्द्धानमाहत्य आस्यावयवेषु परावृत्तो वक्त्रे विचरन् विविधान् वर्णान् जनयति। तत्र करणवैकल्यादिना वक्तृत्वदौर्बल्याद् वक्ता साधुशब्दे प्रयोक्तव्ये असाधुशब्दोच्चारणेन अपराध्यति। यथा कश्चिच् चक्षुष्मान् शुष्के पतितुमिच्छुः अपि कर्दमे पतति। एवञ्चाऽपराधात् प्रवृत्तत्वेन गाव्यादिशब्दानामपभ्रंशानां सादित्वं कार्यत्वं वा सिद्धयति।

गवादिसाधुशब्दानान्तु अविच्छिन्नपारम्पर्यत्वेन अनादित्वम्। अपभ्रंशं परिभाषमाणस्य भर्तृहरेराचार्यस्याऽपि एवंविधमेवाऽपभ्रंशस्वरूपमभिमतं दृश्यते। तन्मते हि सास्नादिमदर्थाऽभिधानाय गौरिति साधुशब्दे प्रयुयुक्षिते, तदर्थे निविशमानो यः संस्कारहीनो गाव्यादिशब्द उच्चार्यते सोऽपभ्रंशः।[3] तत्र संस्कारसम्पन्नः शब्दः साधुः, संस्कारहीनः अपभ्रंशश्चाऽसाधुः स्वीक्रियते। साधूनां शब्दानां ज्ञापनार्थम् अपभ्रंशानाञ्च शब्दानां व्यावृत्त्यर्थं लक्षणमारब्धव्यम्।[4]

व्याडिनाऽपभ्रंशस्य प्रकृतिः साधुशब्दः प्रतिपादितः।[5] संस्कृतशब्दानां प्राकृतशब्देभ्यः प्राग्भवत्वम्, प्राकृतशब्दानां वा संस्कृतशब्देभ्य. प्राग्भवत्वमिति विषये आचार्याणां परस्परं वैमत्यं दृश्यते। केचन प्राकृतशब्दानामेव

---

१. एकैकस्य शब्दस्य बहवोऽपभ्रंशाः। तद्यथा—गौरित्यस्य शब्दस्य गावीगोणीगोतागोपोतलिकादयोऽपभ्रंशाः। अष्टा०, महाभा०, पस्प०।

२. शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम्। मीमां० द० १।३।२५।

३. शब्दः संस्कारहीनो यो गौरिति प्रयुयुक्षिते।
तमपभ्रंशमिच्छन्ति विशिष्टार्थनिवेशिनम्॥ वा० प० १।१३९।

४. साधूनां वाचः संस्काराणां ज्ञापनार्थमपभ्रंशानां चोपघातानां त्यागार्थं लक्षणमारब्धव्यम्। वा० प० १।१३८, स्वो० वृ०।

५. शब्दप्रकृतिरपभ्रंशः इति सङ्ग्रहकारः। वा० प० १।१३९, स्वो० वृ०।

प्राग्भवत्वं प्रतिपादयन्ति, प्रकृतौ भवः प्राकृत इति व्युत्पत्तेः। साधुशब्दानां प्रकृतित्वात् खलु प्राकृत इति नामकरणमिति तेषामाशयः प्रतीयते। केचिच्च संस्कृतशब्दानामेव प्राग्भवत्वं स्वीकृत्य प्राकृतानां शब्दानां मूलं संस्कृताः शब्दा इति व्याचक्षते। महाभाष्यं व्याचक्षाणो भर्तृहरिराचार्याणां वैमत्यमिदं निरदिशत्।[1]

'शब्दप्रकृतिरपभ्रंशः।' इति व्याडिमतं व्याचक्षाणः स्वोपज्ञकारः सर्वस्याऽप्यपभ्रंशस्य साधुशब्द एव प्रकृतिरिति प्रत्यपादयत्।[2] अपभ्रंशः शब्दः स्वतन्त्रोऽप्रकृतिर्वा न भवति। प्रसिद्धिवशाद् रूढितामापद्यमानाः केचनाऽपभ्रंशाः स्वातन्त्र्यम् अधिगच्छन्ति। तेषामपि अपभ्रंशानां कालान्तरे आलस्याद् वक्तृत्वदौर्बल्याद्वा कश्चिदन्योऽपभ्रंशविशेषो जायते। एतादृशानाम् अनुनिष्पादिनाम् अपभ्रंशानां प्रकृतिः ततः प्राक्तनोऽपभ्रंशो भवति। एवञ्च सामयिक एवाऽयं साध्वसाधुप्रविवेको भवति। कस्याऽपि शब्दस्य रूपमात्रप्रतिबद्धमसाधुत्वं वक्तुं न शक्यते।[3] साम्प्रतं कैश्चिद् असाधुत्वेनाभिमतानां शब्दानां कालान्तरे साधुत्वं सम्भवि, साधुत्वेन वाऽभिमतानां शब्दानाम् असाधुत्वमपि सम्भवि। अतोऽत्र विषये नहि कश्चिद् वाचनिको नियमः सम्भवति। सर्वथा स्वाभाविकः सामयिकश्च खल्वेष विषयः। येष्वभिधातृषु अपभ्रंशा एव प्रसिद्धिम् आगताः, तैरपभ्रंशैरेवार्थोऽभिधीयते, अवबोध्यते च।[4]

प्रवृत्तिनिमित्तभेदादेकस्यैव शब्दस्वरूपस्य साधुत्वम् असाधुत्वञ्चाऽपि सञ्जायते। गौरिति शब्दे प्रयोक्तव्येऽशक्त्या प्रमादादिभिर्वा प्रयोक्तारो गाव्यादीन् शब्दानुच्चारयन्ति। तत्र सास्नादिमदर्थाऽभिधाने एव गाव्यादयोऽपभ्रंशा असाधवो वा भवन्ति। ततोऽन्यत्रार्थे तेषां साधुत्वमपि सम्भवति।[5] यथा सास्नादिमदर्थे गोणीशब्दस्याऽसाधुत्वेऽपि आवपनपात्रविशेषे तस्य साधुत्वं स्वीक्रियते। ह्रेषितादिलिङ्गेऽस्वशब्दस्य अपभ्रंशत्वेऽपि निर्धनार्थे तस्य साधु-

---

१. केचिदेवं मन्यन्ते—य एवैते प्राकृताः शब्दाः, ते एवैते नित्याः, प्रकृतौ भवाः प्राकृताः। अन्ये मन्यन्ते—इयं दैवी वाक्, सा तु पुरुषाऽशक्तेरालस्याद्वा प्रकीर्णा।
अष्टा०, महाभा०, पस्पशा०, महाभा० टी०।

२. सर्वस्यैव हि साधुरेवाऽपभ्रंशस्य प्रकृतिः। वा० प० १।१३९, स्वो० वृ०।

३. न ह्येतेषां रूपमात्रप्रतिबद्धमसाधुत्वम्। वा० प० १।१३९, स्वो० वृ०।

४. पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु।
प्रसिद्धिमागता येषु तेषां साधुरवाचकाः॥ वा० प० १।१५४।

५. अर्थान्तरे तु प्रयुज्यमानाः साधव एव विज्ञायन्ते। वा० प० १।१३९, स्वो० वृ०।

त्वमभिमतम् ।[1] स्वप्रवृत्तिनिमित्तं विहाय अन्यप्रवृत्तिनिमित्तमभिधातुं प्रवृत्तस्य साधुशब्दस्याऽपि असाधुत्वं स्वीक्रियते शाब्दिकैः । वाजिनि अश्वशब्दः साधुरपि निर्धनार्थेऽसाधुरेव विद्यते ।[2]

साधुभिरेव शब्दैर्भाषितव्यं नाऽसाधुभिरिति पाणिनीयानामाचार्याणां सिद्धान्तो विद्यते ।[3] पाणिनेराचार्यस्य अष्टाध्यायी शिष्टज्ञानार्था[4] स्वीक्रियते । अष्टाध्याय्या निर्णीतसाधुशब्दानां प्रयोक्तारो हि नाम शिष्टाः सन्ति । साधुशब्दप्रयोगः समाजे शिष्टत्वख्यापनेन व्यावहारिकदृष्ट्याऽभ्युदयकारी भवति । 'एकः पूर्वपरयोः'[5] इति सूत्रं भाषमाणः पतञ्जलिः साधुशब्दप्रयोगस्य सर्वफलप्रदायकत्वं मनुते । तन्मते हि शास्त्रव्युत्पादनयाऽनुसंहितः साधुत्वेन ज्ञातः शिक्षोक्तरीत्या च प्रयुक्तः शब्दः शिष्टप्रयोगकोशव्याकरणाद्यनुमापकत्वेन इह जन्मनि जन्मान्तरे चाऽभ्युदयकारी भवति । एवं हि तत्रत्यं भाष्यम्––'एकः शब्दः सम्यग् ज्ञातः शास्त्राऽन्वितः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति ।'[6] साध्वसाधुशब्दप्रयोगे समानायामर्थावगतावपि साधुभिरेव भाषितव्यं नाऽसाधुभिरिति[7] पाणिनीयैराचार्यैः प्रतिपाद्यते ।

कायाश्रितस्य रोगस्य यथा चिकित्सया विश्रान्तिः भवति यद्वा बुद्ध्याश्रितस्य रागद्वेषादेः मनस्तापस्य वेदान्ताद्यध्यात्मशास्त्रेण शमो विधीयते तथा व्याकरणशास्त्रेणाऽपि वागाश्रितस्याऽपभ्रंशस्य वाङ्मलस्य विशुद्धिः[8] क्रियते । पाणिनीयमिदं व्याकरणं साधुशब्दानामेवाऽनुशासकमस्तीति पतञ्जल्यादीनामाशयो विद्यते । 'अथ शब्दानुशासनम्' इति भाष्यं टीकमानो नागेशो व्याकरणशास्त्रस्य शब्दाऽनुशासनमिति नामकरणेनैव एतत् स्वीकुरुते यदपभ्रंशो

---

१. अस्वगोण्यादयः शब्दाः साधवो विषयान्तरे ।
निमित्तभेदात्सर्वत्र साधुत्वञ्च व्यवस्थितम् ॥ वा० प० १।१४० ।

२. अस्वे अश्वशब्दस्याऽसाधुत्वमुक्तमन्यत्र । वै० सि० ल० मं०, शक्तिनि० ।

३. शब्देनैवाऽर्थोऽभिधेयः नापशब्देन ··। अष्टा०, महाभा०, पस्पशा० ।

४. शिष्टज्ञानार्थाऽष्टाध्यायी । अष्टा० ६।३।१०९, महाभा० ।

५. अष्टा० ६।१।८४ ।

६. अष्टा० ६।१।८४, महाभा० ।

७. शब्देनैवार्थोऽभिधेयोनापशब्देनेत्येवं क्रियमाणमभ्युदयकारि भवतीति ।
अष्टा०, महाभा०, पस्पशा० ।

८. कायवाग्बुद्धिविषया ये मलाः समवस्थिताः ।
चिकित्सालक्षणाऽध्यात्मशास्त्रैस्तेषां विशुद्धयः ॥ वा० प० १।१४७ ।

हि व्याकरणस्य विषयो नास्तीति ।[1] असाधुशब्देभ्यो विविच्य साधुशब्दा व्याकरणेन ज्ञायन्त इति नागेशस्याऽभिप्रायो विद्यते ।

भाषातत्त्वदृष्ट्या शब्दस्य द्वे रूपे भवतः । तत्र १. शब्दत्वम्, २. साधुत्वञ्च । तत्र शब्दत्वान्वितं शब्दरूपन्तु श्रवणेन्द्रियेण गृह्यते, परं शब्दगतं साधुत्वं व्याकरणेनैव अवगन्तुं शक्यते । अन्यथाऽनधीतव्याकरणाः सामान्या लौकिका अपि साधुत्वं प्रतिपद्येरन् । 'असन्देहार्थञ्चाऽध्येयं व्याकरणम्' इति पस्पशायां ब्रुवाणस्य पतञ्जलेरयमेवाऽभिप्रायो विद्यते, यद् व्याकरणेन खलु शब्दस्याऽसंदिग्धं साधुत्वमगवगतं भवति । भर्तृहरिरपि एतच्छब्दान्तरेण इत्थं प्रास्तावीत् -

अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् ।
तत्त्वाऽवबोधः शब्दानां नाऽस्ति व्याकरणादृते ।।[2]

शब्दगतं साधुत्वस्वरूपमत्र विचार्यते ।

**साधुत्वस्वरूपम्—**

शब्दगतं द्विविधं हि साधुत्वं सम्भवति । तत्र—

१. श्रुतिलक्षणं साधुत्वम्, २. प्रक्रियालक्षणञ्च साधुत्वम् इति ।

**१. श्रुतिलक्षणं साधुत्वम्—**

श्रवणजन्यो ज्ञातसाधुभावोऽनपभ्रंशः शब्दः श्रुतिलक्षणः साधुः । तत्र प्रकृतिप्रत्ययविभागावगमेन साधुत्वं व्यवस्थाप्यते । गौरिति प्रयोगे सुप्रत्ययविधौ गोशब्दस्य साधुत्वं विद्यते । प्रत्ययविधौ उद्देश्यत्वेन यस्याऽनपभ्रंशशब्दस्वरूपस्य प्रकृतित्वं कल्प्यते तस्य श्रुतिलक्षणं साधुत्वं[3] ज्ञेयम् । यथा खलु नागेशो व्याकरणव्यङ्ग्यमर्थविशिष्टं जातिविशेषं हि साधुत्वं मनुते[4] । व्याकरणव्यङ्ग्यः शब्दगतजातिविशेषः शिष्टत्वादिख्यापनरूपपुण्यजननसाधनं हि

---

१. अनुशिष्यन्ते साधुशब्देभ्यो विविच्य ज्ञायन्ते अनेनेति करणल्युडन्ततया शास्त्रपदेन सामानाधिकरण्यमिति भावः ।···अनेनैव अपभ्रंशानामविषयत्वं सूचितं ध्वनीनाञ्च ।
अष्टा०, महाभा०, पस्प०, प्र०, उद्द्यो० ।

२. वा० प० १।१३ ।

३. साधूनामेव हि प्रत्ययविधावुद्देश्यत्वेन प्रकृतित्वम् । वै०सि०ल०मं०, शक्तिनि० ।

४. साधुत्वञ्च व्याकरणव्यङ्ग्योऽर्थविशिष्टशब्दनिष्ठपुण्यजनकताऽवच्छेदको जातिविशेषः ।
वै०सि०ल०मं०, शक्तिनि० ।

नाम साधुत्वमिति नागेशस्याऽभिप्रायः। एवंविधानां विचारकाणां मते गावीत्याद्यपभ्रंशशब्दोत्तरं विभक्तिः न प्रयुज्यते। प्रत्ययविधौ उद्देश्यभूतप्रकृतेः साधुत्वस्वीकारात्। अन्ये शाब्दिकाः अपभ्रंशानामपि प्रत्ययविधौ उद्देश्यत्वं[1] मन्वते। अत एव पस्पशायां पतञ्जलिः 'यर्वाणः तर्वाणः' इति णान्तादपभ्रंशाद् विभक्तिं प्रायुङ्क्त। अर्थवच्छब्दस्वरूपात् प्रातिपदिकसञ्ज्ञकात् सुबुत्पत्तिरिति स्वीकारे च न काचिच्छास्त्रीया व्यवस्था व्याहन्यते। गावीत्यादिभिरपभ्रंशशब्दस्वरूपैरपि अर्थवत्त्वप्रतीतेः।

## २. प्रक्रियालक्षणं साधुत्वम्—

प्रक्रियालक्षणं साधुत्वमनुशासनपद्धतिसापेक्षं भवति। अनुशासनदृष्ट्या परिनिष्ठिता हि शब्दाः साधव उच्यन्ते। अपरिनिष्ठिताः शब्दाः न प्रयुज्यन्ते। कस्यचिन्नित्यस्य शब्दशास्त्रीयस्य नियमस्य विधेर्वा अनुद्देश्यभूत एव शब्दः परिनिष्ठितो[2] भवति, तस्यैव च प्रयोगः शाब्दिकैरभिमतः। विधिशास्त्रेण प्रयोगसाधनपुरःसरं साधुत्वव्यवस्था प्रयोगनियमश्च व्याकरणे विधीयते। तथा हि 'आद् गुणः'[3] इति विधिशास्त्रेण अवर्णादचि पूर्वपरयोः गुणो भवति, गुणवान् शब्दः साधुः भवति, स च प्रयोक्तव्य इति निर्णीयते। न ह्यकृतगुणसंस्कारः शब्दः साधुर्भवति न वा च स प्रयोक्तव्यः, तस्याऽपरिनिष्ठितत्वेनाऽसाधुत्वात्। यथा 'शब्देन' इत्ययमेव साधुः शब्दः, अयमेव च प्रयोक्तव्यः, न तु 'शब्द+टा' इति आहोस्वित् 'शब्द+इन' इत्यपि। अत्र इनविधेः गुणविधेश्च प्रवृत्तिसत्त्वेनाऽपरिनिष्ठितत्वात्।

कश्चिदपि शब्दः शब्दस्वरूपतः साधुरसाधुर्वा न भवति। प्रवृत्तिनिमित्तविशेषं संलक्ष्यैव शब्दानां साधुत्वमसाधुत्वञ्च व्यवस्थापयितुं शक्यते। यः शब्दो लोके यस्य प्रवृत्तिनिमित्तस्य तदाश्रयस्य वा अभिव्यक्तये जनैः स्वीकृतः, स एव शब्दः तदतिरिक्ते प्रवृत्तिनिमित्ते प्रयुक्तः असाधुर्भवति। गोणीशब्दस्य आवपनरूपे पात्रविशेषेऽर्थे साधुत्वं प्रागचर्चयम्। तस्यैव शब्दस्य सास्नालाङ्गूलादिमदर्थेऽसाधुत्वमपि शाब्दिकैः स्वीकृतम्। इत्थमेव अस्वादिशब्दोऽपि ज्ञेयः। एवञ्च प्रवृत्तिनिमित्तविभेद एव शब्दानां साधुत्वाऽसाधु-

---

१. नन्वपभ्रंशानां शक्तत्वेऽर्थवत्वादर्थवत्सूत्रेण प्रातिपदिकसञ्ज्ञापत्तिः इति चेत्। इष्टापत्तिः। वै०सि०ल०मं०, शक्तिनि०।

२. अप्रवृत्तनित्यविध्युद्देश्यताऽवच्छेदकानाक्रान्तत्वं हि परिनिष्ठितत्वम्। शब्दर०, प्रौ० मनो०, वै०सि०कौ०, स्वरसं०।

३. अष्टा० ६।१।८७।

त्वयोर्निर्णायको भवति ।

अस्वगोण्यादय: शब्दा: साधवो विषयान्तरे ।
निमित्तभेदात्सर्वत्र साधुत्वञ्च व्यवस्थितम्[1] ॥

'नाऽनृतं वदेदिति'[2] शिष्टानामाचारपद्धति: स्मर्यते । द्विविधं खल्वनृतं भवतीति मिश्रोपनामा हरदत्त: स्वीचकार[3] । तत्र--

१. अर्थाऽनृतम्, २. शब्दाऽनृतञ्चेति विद्यते ।

प्रतिपत्तृत्वदौर्बल्याद् यदाऽर्थस्याऽन्यथा प्रतिपत्तिर्भवति तदा अर्थाऽनृतं भवति । प्रयोक्तरि प्रतिपत्तरि चोभयत्रापि च अर्थाऽनृतं सम्भवि । यदा कश्चित् क्वचिज्जिगमिषु: परिधृतवेशो दण्डी पुरुषो लवणबुद्धया 'सैन्धवमानये'ति प्रयुङ्क्ते आहोस्वित् कश्चित् प्रतिपत्ता यदा प्रस्थातुकामेन अश्वबुद्धया प्रयुक्तस्य सैन्धवशब्दस्य लवणबुद्धिं विजानाति, तदा अर्थाऽनृतं जायते । शब्दस्याऽन्यथोच्चारणं शब्दाऽनृतम् उच्यते । तत्र साधौ शब्दे प्रयोक्तव्ये अपगतसंस्कारस्य अपभ्रंशस्य वाऽसाधुशब्दस्योच्चारणं शब्दाऽनृतं भवति । तदत्र 'नाऽनृतं वदेदि'ति निषेधवाक्येन द्विविधमपि अनृतं प्रतिषिध्यते । अपराधाद्धि असाधुशब्दोच्चारणप्रवृत्तिर्जनानामिति[4] जैमिनिमतमत: प्रागुपन्यस्तमस्माभि: । यथा अर्थाऽनृतं वदतो जनस्य प्रत्यवाय: स्मर्यते तथा शब्दाऽनृतं वदतोऽपि जनस्येति निष्कर्ष: ।

केवलां सौत्रीं प्राप्तिमेव संलक्ष्य शब्दानां साधुत्वाऽसाधुत्वे निर्णेतुं न शक्येते । आचार्याणामिष्टिरपि तत्र हेतुर्भवति । अष्टाध्यायीं भाषमाणेन पतञ्जलिना एतद् रुचिरमुदाहृतम् । तथा हि--

"एवं हि कश्चिद् वैयाकरण आह---कोऽस्य रथस्य प्रवेता इति ?
सूत आह---आयुष्मन्नहमस्य रथस्य प्राजिता इति ।
वैयाकरण आह ---अपशब्द इति ।
सूत आह---प्राप्तिज्ञो देवानां प्रियो न त्विष्टिज्ञ इष्यते एतद्रूपमिति ।
वैयाकरण आह---आहो खल्वनेन दुरुतेन बाध्यामहे इति ।

१. वा० प० १।१४८ ।
२. शत०ब्रा० २।२।२० ।
३. द्विविधं ह्यनृतम्---शब्दाऽनृतम्, अर्थानृतञ्च । का०वृ०, अनु०च०नि०, पदमं० ।
४. शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् । मीमां० द० १।३।२५ ।

सूत आह––न खलु वेञः, सूतः, सुवतेरेव सूतः । यदि सवतेः कुत्सा प्रयोक्तव्या दुःसूतेनेति वक्तव्यम्[1] ।"

यदर्थप्रतिपादनाय यस्मिन् शब्दे प्रयोक्तव्ये स्वरवर्णादिदोषात् ततोऽर्थान्तरं प्रतिपादयन् शब्दोऽपशब्दो भवति । स चाऽनिष्टजनक इति शिष्टैः प्रतिषिध्यते—

दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्[2] ॥

## पाणिनीये व्याकरणेऽपभ्रंशस्योपेक्षाकारणम्

पाणिनीयैराचार्यैः साधुशब्देष्विव असाधुशब्देष्वपि अर्थबोधकता शक्तिः स्वीकृता । कात्यायनः[3] पतञ्जलिश्च[4] शास्त्रं प्रयोगाणां नियामकमात्रं भवतीति प्रत्यपादयताम् । अर्थगत्यर्थः खलु शब्दः प्रयुज्यते । अर्थाऽवगतिश्च क्वचित् केषाञ्चित्कृते साधुशब्दापेक्षया असाधुशब्दैरेव सुस्पष्टं भवति । साधुशब्दप्रयोगे वा अर्थाऽवगतौ कश्चिद् भेदो न भवति ।

एवञ्चाऽर्थबोधने उभयोः साध्वसाध्वोः शब्दयोः समाने शक्तत्वे कथमनेन पाणिनीयेन शास्त्रेण साधव एव अनुशिष्यन्ते नाऽसाधवः ? कथं वा साधव एव प्रयोक्तव्या नाऽसाधवः ? इति जनैः स्वभावतो जिज्ञास्यते । अत्रैतत् समाधीयते पाणिनीयैराचार्यैः— वेदाङ्गेषु व्याकरणं मुखभूतं[5] परिगणितम् । षट्स्वङ्गेषु व्याकरणस्य प्राधान्यं[6] प्रतिपाद्यते । 'रक्षार्थं वेदानामध्येयं व्याकरणमि'ति[7] पतञ्जलिर्व्याचष्ट । पाणिनीयं व्याकरणं शब्दाऽनुशासकं विद्यते । शब्दाश्च वैदिकादारभ्य आसमुद्रघोषं परिगणिताः । पाणिनीयस्यास्य तन्त्रस्य वेदोप-

---

१. अष्टा० २।४।५६. महाभा० ।

२. अष्टा०, महाभा०, पस्पशा०, मन्त्रो हीनः—प्रा०शि० ५२; इत्येतावन्मात्रपाठभेदेन पाणिनीयशिक्षायामपि श्लोकोऽयं पठ्यते । (ले०) ।

३. लोकतोऽर्थे प्रयुक्ते शास्त्रेण धर्मनियमः । का०वा० २, पस्प० ।

४. समानायामर्थाऽवगतौ शब्देन चाऽपशब्देन च धर्मनियमः क्रियते । शब्देनैवाऽर्थोऽभिधेयो नापशब्देनेति···। अष्टा०, महाभा०, पस्पशा० ।

५. शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ पा०शि० ४२ ।

६. प्रधानञ्च षट्स्वङ्गेषु व्याकरणम् । अष्टा०, महाभा०, पस्पशा० ।

७. अष्टा०, महाभा०, पस्पशा० ।

कारकत्वेन, समुद्रघोषादीनाञ्च वेदाऽनुपयोगित्वेन समुद्रघोषादयो न व्युत्पाद्यन्ते पाणिनीयेन शब्दशास्त्रेण। अत एवाऽनुशासनीयशब्दक्षेत्रं व्यवस्थापयन् पतञ्जलिः 'लौकिकानां वैदिकानाञ्चेति'[1] उज्जुघोष। लौकिकेष्वपि शब्देषु अपगतसंस्काराणाम् अपभ्रंशानाञ्च शब्दानां पाणिनीयेऽस्मिन् तन्त्रेऽनुशासनं नाऽभिमतम्, वेदाऽनुपयोगित्वादेव। लौकिकाः शब्दास्तावद् अनियतवर्णाऽनुपूर्विका भवन्ति। यथा--गामभ्याज शुक्लाम्,

अभ्याज गां शुक्लाम्,
शुक्लां गामभ्याज इत्येवम्।

वैदिकाः शब्दास्तु नियतवर्णाऽनुपूर्विका जायन्ते। यथा—

१. अग्निमीळे पुरोहितम्[2]............।
२. इषे त्वोर्जे त्वा[3]......................।
३. अग्न आ याहि वीतये[4]...............।
४. शन्नो देवीरभिष्टये[5]...............।

दैवी वाग् व्यवकीर्णयमशक्तैरभिधातृभिः।
अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्ययः[6]॥

१. अष्टा०, महाभा०, पस्पशा०।
२. ऋ० सं० १।१।१।
३. यजु० सं० १।१।
४. साम० सं० १।१।१।
५. अथर्व० सं० १।१।१। (पैप्प० शा०)
६. वा०प० १।१।१५।

# शब्दकाण्डे सप्तमः समुद्देशः

## सञ्ज्ञाकरणम्

यदृच्छा-शब्दस्वरूपनिर्वचने सञ्ज्ञाशब्दोऽस्माभिश्चर्चितः । केचन सञ्ज्ञाशब्दा जातिवाचका भवन्ति, केचन च व्यक्तिवाचकाः । समुदायोपाधयः सञ्ज्ञाशब्दा जातिवाचकाः भवन्ति, नियतव्यक्तिमात्राभिधायिनः संज्ञाशब्दाश्च व्यक्तिवाचका विद्यन्ते । प्रसङ्गादत्र भाषातत्त्वदृष्ट्या सञ्ज्ञाशब्दानां विषये विचार्यते ।

मनोवृत्तेरभिव्यञ्जकेषु वाग्व्यापारो हि एकतमोऽभिव्यञ्जकः स्वीक्रियते । वाग्व्यापारापेक्षया मनोव्यापारस्य विस्तृतं क्षेत्रं भवति[1] । अत एवाशाब्दैरपि अर्थप्रकाशनसाधनैः मनोव्यापारोऽभिव्यज्यते । ऐतरेय-आरण्यके बुद्धयधिष्ठाना हि वागुच्यते[2] । सर्वेऽभिधेया बुद्धिस्था भवन्ति । तत एव च शब्दप्रवृत्तिः जायते । शाब्दे व्यवहारे लाघवी प्रवृत्तिर्हि सञ्ज्ञाकरणं प्रयोजयति । शब्दैरेव खलु सञ्ज्ञाकरणं सम्भवि[3] । वाणी खलु दीर्घा रज्जुर्भवति । सञ्ज्ञापदानि च तत्र पाशभूतानि जायन्ते[4] । यथा लोके पशवो रज्जुभिः बन्धनेन नियम्यन्ते, तथा रज्जुभूताभिः वाणीभिरपि बन्धनभूतेन सञ्ज्ञापदेन मनोव्यापाराः नियम्यन्ते । यावन्ति हि वस्तुतत्त्वानि विद्यन्ते, तावन्ति सर्वाण्यपि मनोविषयाणि सन्ति । तत्र च वाक् प्रवर्तते[5] ।

बुद्धिगतमभिप्रायमभिव्यङ्क्तुं प्राणिनोऽनेकानि साधनानि समाश्रयन्ति । न खलु शब्दव्यापारैरेव स्वाऽभिप्रायोऽभिव्यज्यते, अपि तु भ्रूसञ्चालनपाणिसङ्केतादिभिरपि उपायैः[6] नैजमाशयं प्रकाशयन्तो जना दृश्यन्ते । अभिनयस्थले

---

१. मनो वाव वाचो भूयः । छान्दो० उ० ७।३।१ ।

२. वाग्वै धियावसुः । ऐत०आ० १।१।४ ।

३. वाचा हि नामधेयानि धीयन्ते । (ऐत०आ० १।३।३)

४. तस्य वाक् तन्तिः । नामानि दामानि । तस्येदं वाचा तन्त्या नामभिः दामभिः सर्वं सितम् । (ऐत०आ० २।१।६)

५. यावद् ब्रह्म विष्ठितं तावती वाक् । (ऋ० सं० १०।११४।८)

६. अन्तरेण खल्वपि शब्दप्रयोगं बहवोऽर्था गम्यन्ते । अक्षिनिकोचैः पाणिविहारैश्च…। अष्टा० २।१।३४, महाभा० ।

चैतत् सुस्पष्टं विज्ञातुं शक्यते। शाब्देऽशाब्दे चाऽर्थप्रकाशने तत्त्वविद्भिः शब्दव्यवहारो लघुत्वेन[1] स्मर्यते। भूयसां शब्दानां व्यवहारापेक्षया च वस्तूनां नामकरणं ततोऽपि लघीयो[2] जायते। सास्नालाङ्गूलादिमन्तं पशुविशेषमानयेति गुरुभूतस्य शब्दव्यापारस्याऽपेक्षया 'गामानयेति' लघुभूतस्य नाम्न उच्चारणे कियल्लाघवमिति सुस्पष्टं विज्ञातुं शक्यते। वस्तूनां नामकरणे लौकिकैरनेके मार्गा आश्रीयन्ते। लोकव्यवहाराऽवेक्षणे च विचक्षणा शब्दतत्त्वविदः शब्दानां व्युत्पत्तिनिमित्तं प्रवृत्तिनिमित्तञ्चाश्रित्य नामकरणविषये मौलिकान् नियमान् विदधते।

भाषातत्त्वदृष्ट्या वस्तूनां सञ्ज्ञाकरणं वाक्तत्त्वस्य आदिमं रूपमासीत्। आहारविहारनिवाससौकर्यार्थं संरक्षणप्रवृत्त्या च जनाः सङ्घातरूपेण निवसन्ति स्म। तत्र परस्परं भेदप्रख्यापनाय प्रत्येकं सञ्ज्ञा स्वीकृता। वस्तूनि विलोक्य व्यवहारं सम्पादयितुं यथायोग्यं वस्तूनां सञ्ज्ञा समाश्रिता[3]। एकैकस्याऽभिधेयार्थस्य कृते एकैकनामाऽपेक्षणाद् वस्तूनां सञ्ज्ञाकरणं क्रमशो विस्तृतमभूत्। यावत्सु वस्तुषु प्रयोक्तॄणां प्रतिभा प्रतिष्ठिता, तावत्सु वस्तुषु सञ्ज्ञाकरणं प्रवृत्तम्।[4] वस्तूनां धर्मवैलक्षण्याद् वक्तॄणाञ्च प्रवृत्तिभेदादेकस्य वस्तुतत्त्वस्य कृते बहुनि नामानि स्वीकृतानि। एकमेव परमात्मतत्त्वं बहुभिर्नामभिः मनीषिणः स्मरन्ति। अग्निः मातरिश्वेत्येवमादयः[5] शब्दाः एकस्य परमात्मनः कृते प्रयुज्यन्ते। स्मर्ता मनुः लौकिकानां सञ्ज्ञाशब्दानामाधारं वैदिकशब्दान्[6] व्याचष्ट।

**सञ्ज्ञापदस्याऽभिधेयत्रयम् —**

सञ्ज्ञापदं शाब्दिकैः त्रिधा व्युत्पादितम्। तदनुसारेण च सञ्ज्ञापदं त्रिष्वभिधेयेषु प्रवर्तते। तत्र १. शब्दः, २. अर्थः, ३ सम्प्रत्ययो व्यवहारो वेति अभिधेयत्रये सञ्ज्ञाशब्दः प्रयुज्यते। क्वचित् सञ्ज्ञाशब्दस्याऽभिधेयः शब्दो भवति। कदाचिद् अर्थविशेषः सञ्ज्ञापदेनाऽभिधीयते। कदाचिच्च सम्प्रत्ययेऽर्थे लोकव्यवहारे वाऽर्थे सञ्ज्ञापदं प्रवर्तते।

---

१. शब्दव्यवहारो लघुः, ततोऽपि लघीयो नाम। अष्टा० १।१।२७, महाभा०, प्र०।
२. सञ्ज्ञा च नाम यतो न लघीयः। अष्टा० १।१।२७ महाभा०।
३. सर्वाणि रूपाणि विचिन्त्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते। (तैत्ति०आ० ३।१२।७)
४. यावद् ब्रह्म विष्ठितं तावती वाक्। (ऋ०सं० १०।११४।८)
५. एकं सद्विप्रा बहुधा वदन्ति, अग्निं यमं मातरिश्वानमाहुः। (ऋ०सं० १।१६४, ४६)
६. सर्वेषान्तु नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे॥ मनुस्मृ० १।२१।

यदा 'सञ्ज्ञायत अनये'ति करणसाधनः सञ्ज्ञाशब्दः प्रयुज्यते तदा सञ्ज्ञाशब्दस्य शब्दो[1] भवत्यभिधेयः। यथा घटादयः शब्दाः कम्बुग्रीवादिमदादीनामर्थानां करणसाधनेन सञ्ज्ञा भवन्ति। यदा 'सञ्ज्ञायते योऽसौ' इति कर्मसाधनः सञ्ज्ञाशब्दः प्रयुज्यते तदा अर्थो भवति सञ्ज्ञापदस्याऽभिधेयः[2]। भार्याशब्द एतस्योदाहरणम्। भार्याशब्दः सञ्ज्ञावाचक इति पाणिनिः व्याचकार[3]। पुरुषेणाऽन्नवस्त्रादिभिः भरणात् स्त्री भार्या उच्यते। परमबिभ्रत्यपि रामे तस्य पत्नी भार्या एवोच्यते[4]। 'सञ्ज्ञानं सञ्ज्ञा' इति भावसाधनेन सञ्ज्ञाशब्देन लोकव्यवहारः[5] सम्प्रत्ययः प्रसिद्धिरित्येवमादयोऽभिधेयाः प्रतीयन्ते। अत्र प्रकरणे सञ्ज्ञाकरणशब्देन करणसाधन एव सञ्ज्ञाशब्दोऽभिप्रेतः। यतः शब्दैरेव ह्यर्थाः सञ्ज्ञायन्ते। शब्दव्यापारस्य लघुत्वं प्राक् प्रतिपादितम्, सञ्ज्ञाकरणे तु ततोऽपि लघीयस्त्वमित्येतदपि समुपपादितमस्माभिः।

**सञ्ज्ञाशब्दानां द्वैविध्यम् —**

वैयाकरणाः सञ्ज्ञाशब्दानां द्वैविध्यम् उपपादयन्ति[6]। तत्र १. अवयवाऽर्थानुगताः, २. तद्विपरीताश्च सञ्ज्ञाशब्दाः सन्ति। तत्र येषु सञ्ज्ञापदेषु अवयवार्था अनुगम्यन्ते ते अवयवार्थाऽनुगताः सञ्ज्ञाशब्दा उच्यन्ते। येषु च सञ्ज्ञापदेषु अवयवाऽर्था नाऽनुगम्यन्ते, ते तद्विपरीता अनुगताऽवयवार्था वा स्वीक्रियन्ते। कुम्भकारादयः सञ्ज्ञाशब्दाः अवयवाऽर्थानुगताः सञ्ज्ञा विद्यन्ते। कुम्भं करोतीति कुम्भकारः,[7] विश्वं बिभर्तीति विश्वम्भरो विष्णुः, विश्वम्भरा[8]

---

१. सञ्ज्ञायत अनयेति सञ्ज्ञा। ततः शब्द एव सञ्ज्ञाशब्देन उच्यते।
अष्टा० ५।२।६१, महाभा०, प्र०।

२. (क) सञ्ज्ञायत इति सञ्ज्ञेत्यर्थः। एवं व्यपदिश्यमानोऽभिधीयते।
अष्टा० ५।२।६१, महाभा०, प्र०।

(ख) सञ्ज्ञाशब्देन कर्मसाधनेन सञ्ज्ञायमानमभिधीयते।
अष्टा० ३।१।११८, महाभा०, प्र०, उद्द्यो०।

३. भृञो सञ्ज्ञायाम्। अष्टा० ३।१।११२।

४. सञ्ज्ञाशब्दश्च भार्याशब्दः। तथा ह्यबिभ्रत्यपि देवदत्ते तस्य पत्नी भार्येत्युच्यते।
अष्टा० ३।१।११२, का०वृ० न्यासः।

५. सञ्ज्ञानां लोकव्यवहाराणाम्। अष्टा० १।२।५३, वै०सि०कौ०, बालम०।

६. सञ्ज्ञाशब्दा हि द्विविधा भवन्ति। केचिदवयवार्थानुगताः, यथा सप्तपर्ण इति। केचित्तु विपरीताः, यथा तैलपायिकेति।...यत्र तु अवयवार्थानुगमो नास्ति, यथा रथन्तरं सामेति तत्र व्युत्पत्त्यर्थं सुधीति सम्बध्यते, रथेन तरति, रथे तरतीति वा।
अष्टा० ३।२।४६, का०वृ०, न्यासः।

७. कर्मण्यण्। अष्टा० ३।२।१।

८. सञ्ज्ञायां भृतॄवृजिधारिसहितपिदमः। अष्टा० ३।२।२६।

पृथिवी इत्येवमादिषु सञ्ज्ञापदेषु अवयवार्थः स्पष्टमवगम्यते। 'रथन्तरं साम' 'किंशुकः' इत्येवमादीनि सञ्ज्ञापदानि अनुगतावयवार्थानि सन्ति। रथेन तरितृत्वस्य सामविशेषेऽसम्भवाद् व्युत्पत्तिमात्रं प्रदर्श्यते 'रथेन तरति, रथे तरती'-ति वा, न तु तत्र कश्चिदवयवार्थाऽनुगमोऽस्ति। एवं किंशुकशब्दोऽपि पलाशवृक्षार्थाऽभिधाने रूढो न हि कञ्चनाऽवयवार्थं प्रत्याययति।

अत्रेदमवधेयम्—लोके सञ्ज्ञात्वेन विनियुज्यमानः सर्वोऽपि सञ्ज्ञाशब्दो योग्यतालक्षणेन सर्वत्रैवाऽर्थे सम्बद्धो भवति। देवदत्तसञ्ज्ञाशब्दो यज्ञदत्तमपि बोधयितुं समर्थः, रुद्रदत्तमपि प्रत्याययितुं योग्यतया सम्बद्धः[1]। एवं यज्ञदत्तादयोऽपि सञ्ज्ञाशब्दाः सर्वमपि सञ्ज्ञिनं ज्ञापयितुं समर्था भवन्ति। एवं सति शब्दस्य शक्त्यवच्छेदमात्रे एव सञ्ज्ञाकर्तुर्व्यापारो जायते। 'अनेन देवदत्तरूपेण सञ्ज्ञापदेन अयं मांसपिण्डरूपो व्यक्तिविशेष एव व्यवहार्यः' इत्येवंरूपः सङ्केतविशेष एव सञ्ज्ञाव्यापारो भवति। सञ्ज्ञाकरणे न हि कश्चिदपूर्वः सङ्केत आविष्क्रियते। एवञ्चोपर्युक्ता द्विविधा अपि सञ्ज्ञाशब्दाः शब्दाऽभिधेययोग्यस्य नियामका एव। अतएव अभिधेयनियमार्थाः सञ्ज्ञाशब्दा भवन्तीति स्वीक्रियते[2]। पाणिनिना उपद्रष्टुरर्थे साक्षिशब्दो व्युत्पादितः[3]। द्वयोर्मध्ये व्यवहारकाले य उपद्रष्टा सन्तिष्ठते स साक्षी कथ्यते। सञ्ज्ञाकरणसामर्थ्याद् दाता साक्षी नोच्यते, नाऽपि ग्रहीतैव। तयोः साक्षाद् द्रष्टृत्वेऽपि साक्षित्वं न व्यवह्रियते, सञ्ज्ञाशब्दानामभिधेयनियमार्थत्वात्।

## सञ्ज्ञालक्षणानि

आचार्यैः सञ्ज्ञायाः कानिचिद् विशिष्टानि लक्षणानि प्रतिपादितानि। तान्यत्र विभागशो वर्ण्यन्ते।

**(क) समुदायोपाधिः सञ्ज्ञा —**

जयादित्येन वामनेन च काशिकायां[4] समुदायोपाधिः संज्ञा व्याख्याता।

---

१. सर्वो हि शब्दः सञ्ज्ञात्वेन विनियुज्यमानः सर्वत्राऽर्थे योग्यतालक्षणेन सम्बन्धेन सम्बद्धः। केवलं शक्त्यवच्छेदमात्रे सञ्ज्ञाकर्तुर्व्यापारः, न त्वपूर्वसङ्केतकरणे, अर्थसम्बन्धस्याऽपौरुषेयत्वात्। वा०प० ३।११८, हेला०।

२. सञ्ज्ञाग्रहणमभिधेयनियमार्थम्। अष्टा० ५।२।९१, का०वृ०।

३. साक्षाद् द्रष्टरि सञ्ज्ञायाम्। अष्टा० ५।२।९१।

४. सञ्ज्ञा समुदायोपाधिः। तेन नित्यसमासोऽयम्। न हि वाक्येन सञ्ज्ञा गम्यते। अष्टा० २।१।४४, का०वृ०।

वाक्येन काचित् सञ्ज्ञा न गम्यते। वाक्येन यः प्रतिपाद्यो भवति, स एव सञ्ज्ञाभूतेन केनचिल्लघीयसा शब्देन प्रतिपाद्यते। 'सास्नालाङ्गूलककुदखुर-विषाणीयो भवति स गच्छति' इति गुरुभूतेन वाक्येन न काचित् सञ्ज्ञा प्रतीयते। तत्र वाक्ये प्रयोक्तव्ये 'गौर्गच्छती'ति प्रयुक्तो लघुभूतो गोशब्दः सञ्ज्ञाशब्दः। स 'सास्नालाङ्गूलककुदखुरविषाणीयो भवति' इत्यस्यार्थस्य गमको विद्यते। काशिकावृत्तौ समुदायोपाधिः सञ्ज्ञेत्थं प्रतिपादिता।

सञ्ज्ञा समुदायोपाधिः। यथेमा मानवी प्रजा[1] जिनेन्द्रबुद्धिपादो हरदत्तश्च प्राणिसमुदायस्य हि प्रजेति सञ्ज्ञां समाचष्ट[2]। प्रक्रियाकौमुदीं टीकमानो विठ्ठलः[3] काशिकाकारयोर्मतमिदमन्ववदत्। धातूपसर्गप्रत्ययसमुदायेन हि सञ्ज्ञा गम्यते।

## (ख) यावद्द्रव्यभाविनी सञ्ज्ञा—

हरदत्तो[4] विट्ठलश्च[5] सञ्ज्ञां यावद्द्रव्यभाविनीं समाचष्ट। केचन सञ्ज्ञाशब्दा यावद्द्रव्यभाविनो भवन्ति, केचन च सञ्ज्ञाशब्दाः कादाचित्का जायन्ते। तत्र यावत् कालं तत् सञ्ज्ञिद्रव्यं सन्तिष्ठते, तावत्कालं तद्ग्राहिका सञ्ज्ञाऽपि सन्तिष्ठते। सास्नालाङ्गूलादिमदादीनां गवादिसञ्ज्ञा यावद्द्रव्य-भाविन्य एव। न हि कदाचिद् गौः स्वजीवने 'अश्व'-इत्याख्यां लभते, न वा कदाचिद् 'गौरि'त्याख्यां जहाति। यावज्जीवति सा गौरेवोच्यते। एवमेव मनुष्यः, देवदत्तः, यज्ञदत्तः, रुद्रदत्त इत्येवमादयः सञ्ज्ञाशब्दा यावद् द्रव्य-भाविनो भवन्ति। जिनेन्द्रबुद्धिपादः अमुमेवाऽभिप्रायम् 'द्रव्यताऽविघाता हि सञ्ज्ञाशब्दाः भवन्ति'[6] इति वाक्येन प्रत्यपादयत्। द्रव्यस्य विनाशं यावद्धि सञ्ज्ञाशब्दाः सन्तिष्ठन्त इति तेषामभिप्रायः।

## (ग) कादाचित्काः सञ्ज्ञाशब्दाः

कादाचित्काः सञ्ज्ञाशब्दाः कदाचिदर्थेन योज्यन्ते कदाचिच्च त्यज्यन्ते।

---

१. प्राणिसमुदायस्यैषा सञ्ज्ञा। अष्टा० ३।२।९९, का० वृ० न्यासः।
पदमञ्जर्यामपि एष एव ग्रन्थः। (ले०) अष्टा० ३।२।९९, का०वृ० पदमं०।

२. उपसर्गे च संज्ञायाम्। अष्टा० ३।२।९९, का०वृ०।

३. संज्ञा समुदायोपाधिः।......न हि वाक्येन सञ्ज्ञा गम्यते।
अष्टा० २।१।४४, प्र० कौ० प्रकाश टी०।

४. यावद्द्रव्यभाविन्य: सञ्ज्ञा भवन्ति। अष्टा० ३।२।१७९, का० वृ०, पदमं०।

५. यावद्द्रव्यभाविनी सञ्ज्ञा। अष्टा० ३।२।१७९, प्र० कौ०, प्रसादटी०।

६. अष्टा० ३।२।१७९, का० वृ०, न्यासः।

यथा प्रतिभूशब्दः कादाचित्कः[1] सञ्ज्ञाशब्दः। कदाचित् कश्चित् प्रतिभूसञ्ज्ञयाऽभिधीयते। कदाचिच्च तत् सञ्ज्ञापदं जहाति। कालान्तरे पुनः तया सञ्ज्ञया युज्यते च। धनिकाधमर्ण्ययोर्मध्ये यस्तिष्ठति स प्रतिभूरुच्यते। ऋणदानकाले द्रष्टा देवदत्तः प्रतिभूरिति सञ्ज्ञां लभते। ऋणे प्रतिदत्ते च स तस्मात् सञ्ज्ञापदाद् विनिवर्तते[2]। यावद् द्रव्यभाविनीसञ्ज्ञातः कादाचित्कस्य सञ्ज्ञापदस्य भेदप्रख्यापनाय एव पाणिनिराचार्यः 'भुवः सञ्ज्ञान्तरयोः'[3] इति सूत्रे अन्तरग्रहणं चकार। अन्यथा प्रतिभूशब्दस्य सञ्ज्ञा शब्दत्वादेव प्रत्ययसिद्धेः किं तद्ग्रहणेन। एवं साक्षिप्रभृतयः सञ्ज्ञाशब्दा अपि कादाचित्का एव। एवंविधाः सञ्ज्ञाशब्दा अभिधेयनियमार्था प्रवर्त्तते।

**(घ) अक्तपरिमाणाः सञ्ज्ञाशब्दाः—**

नियतवर्णाऽनुपूर्वीका हि सञ्ज्ञाशब्दाः स्वीक्रियन्ते।[4] अक्तपरिमाणपदेनैतदेव अभिप्रेतम्। तत्रैकस्मिन्नपि वर्णव्यवाये सञ्ज्ञाहानिः दृश्यते। हरिश्चन्द्रः, विश्वामित्र इत्यादयः सञ्ज्ञाशब्दा अत्रत्या उदाहरणभूताः। पाणिनिना समज्येति सञ्ज्ञाशब्दो व्याकृतः।[5] तत्र 'अजेर्व्यघञपोः'[6] इति वीभावो न भवति, सञ्ज्ञाकरणसामर्थ्यात्, सञ्ज्ञाशब्दस्य नियतवर्णाऽनुपूर्वीकत्वाच्च। सर्वेऽपि सञ्ज्ञाशब्दा अक्तपरिमाणा एव भवन्ति।

## सञ्ज्ञाकरणनिमित्तानि

कस्यचनाऽपि वस्तुतत्त्वस्य सञ्ज्ञाकरणं नैमित्तिकं भवति। यत्किञ्चिन्निमित्तवशाल्लोकः स्वभावतः सञ्ज्ञाकरणे प्रवर्तते। कदाचित् प्रयोक्तुः प्रवृत्तिविशेषः संज्ञा प्रयोजयति कदाचिच्च वस्तुनो धर्मविशेषः क्रियाविशेषो वा सञ्ज्ञाया निमित्तं भवति। यत्र च सञ्ज्ञापदे कश्चिद् निमित्तविशेषः न परिलक्ष्यते तत्राऽपि भाविसञ्ज्ञाविज्ञानाच् छुभमकामनायाः प्रदिदृक्षाविशेषाद्वा सञ्ज्ञाशब्दः प्रवर्तते। प्रायः शिशूनां नामकरणानि एवं रीत्यैव सम्पाद्यन्ते। अत्र कानिचित् सञ्ज्ञानिमित्तानि प्रदर्श्यन्ते।

---

१. प्रतिभू शब्दः पुरुषे कादाचित्कः। अष्टा० ३।२।१७९, प्र० कौ०, प्रसादटी०।

२. ऋणे प्रतिदत्ते सति प्रातिभाव्यस्य निवृत्तेः। अष्टा० ३।२।१७९, वै०सि०कौ०, बालम०।

३. अष्टा० ३।२।१७९।

४. नियतवर्णाऽनुपूर्विका हि सञ्ज्ञा भवति। अष्टा० ३।३।९९, का० वृ०, न्यासः।

५. सञ्ज्ञायां समजनिषदनिपतमनविदसुञशीङ्भृञिणः। अष्टा० ३।३।९९, इति सम्पूर्वकादजेः क्यपि समज्येति (ले०)।

६. अष्टा० २।४।५६।

**१. वक्तुरधीनं सञ्ज्ञाकरणम्—**

वस्तुतत्त्वस्य कृते वाचकशब्दं वक्तैव आविष्करोति । कस्यार्ऽथस्य कः शब्दो वाचक इति वक्तुरधीन एवैष निर्णयोऽवतिष्ठते ।[1] अर्थगता अनेके धर्मा भवन्ति । तेषु कञ्चनैकं धर्ममाश्रित्य प्रयोक्तृभिः वाचकः शब्दः स्वीक्रियते । सम्भवत्स्वपि नानाव्युत्पत्तिनिमित्तेषु गमनरूपमेव[2] व्युत्पत्तिनिमित्तमादाय कैश्चिद् गोशब्दः सास्नालाङ्गूलादिमति पशुविशेषे वाचकत्वेन प्रयुज्यते । प्रयोक्ता प्रयोगकालेऽर्थगतं यं गुणं भावं कर्मविशेषं वा पश्यति तदनुसारेण तद्वस्तुनः सञ्ज्ञां कुरुते ।

**२. वस्तुनोऽवस्थाविशेषः सञ्ज्ञाकरणे हेतुः—**

वस्तुनो बहवो धर्माः सञ्ज्ञाया निमित्तानि सम्भवन्ति । तानि सञ्ज्ञानिमित्तानि सर्वत्र न प्रयुज्यन्ते । तेषु बहूनि निमित्तानि उपेक्ष्यन्ते । अर्थस्य बहवोऽवस्थाभेदा अपि सम्भविनः । तेषु कश्चिदेव अवस्थाविशेषः सञ्ज्ञाकरणे हेतुः प्रजायते । यः प्रयोक्ता वस्तुनो यमवस्थाविशेषं परिपश्यति, स तेनैव तस्य वस्तुनः समाख्यानं कुरुते ।[3] पलाशवृक्षे 'किंशुकोऽस्ति न वे'ति ज्ञातुकामेन प्रयुक्तः किंशुकशब्दः वृक्षविशेषेऽर्थे रूढो जातः । आस्वाद्यफलप्रियो हि शुको भवति । निर्गन्धपुष्पशोभी च पलाशवृक्षो भवति । एवञ्चोपहासपरिपाट्याम् 'पलाशे किं शुकः करोतु' इति वाक्ये प्रयुक्तः किंशुकशब्दः परिहासद्योतकः सञ्जातः । कालान्तरे अर्थसङ्कोचादर्थादेशाद्वा किंशुकशब्दः पलाशवृक्षार्थम् अभ्यदधात् ।

वस्तूनामस्मादेव अवस्थाभेदाद् धर्मभेदाच्च शब्दानां व्युत्पत्तिनिमित्तानि भिद्यन्ते । केनचिद् गच्छतेः गौर्व्युत्पाद्यते । अन्ये गर्जतेर्गौरिति व्युत्पादयन्ति । गिरतेर्गौरपरे । एवमन्येऽपि मतभेदा गोशब्दव्युत्पादने दृश्यन्ते ।[4] दुर्व्यवस्थामिमां निराकर्तुमनसः केचनाचार्याः शब्दानां किञ्चनाऽपि व्युत्पत्तिनिमित्तं

---

१. प्रयोक्तैवाऽभिसन्धत्ते साध्यसाधनरूपताम् ।
अर्थस्य वाऽभिसम्बन्धकल्पनां प्रसमीहते ॥ (वा० प० २।४२९)

२. गमेर्डोः । (उणादिसू० २।६७)

३. अन्यथा च समाख्यानमवस्थाभेददर्शिभिः ।
क्रियते किंशुकादीनामेकदेशेऽवधारणाद् ॥ वा० प० २।१७५ ।

४. कैश्चिन्निर्वचनं भिन्नं गिरतेर्गर्जतेर्गमेः ।
गुवतेर्गदतेर्वाऽपि गौरित्यत्राऽनुदर्शितम् ॥ (वा० प० २।१७६)

निषिषेधुः तन्मते शब्दानां स्वरूपादन्यत् किञ्चिदपि व्युत्पत्तिनिमित्तं न भवति ।[1] शब्दस्वरूपमपि शब्दार्थो भवति ।[2] शब्दव्युत्पत्तौ तदपि निमित्त-मस्ति ।

केचनाचार्या उभयात्मकं राद्धान्तं जगृहुः । तेषां मते केचन सञ्ज्ञाशब्दाः व्युत्पत्तिपरकाः, केचन च सञ्ज्ञाशब्दाः स्वस्वरूपमात्रपरका भवन्ति । शब्दानां व्युत्पत्तिपरकत्वे स्वरूपपरकत्वे वा शब्दाऽभिधेये कश्चन प्रभावो न जायते । व्युत्पन्नोऽपि गोशब्दः सास्नादिमदर्थं बोधयति, अव्युत्पन्नः स्वरूप-परकश्चापि गोशब्दः सास्नादिमन्तमेवाऽर्थं प्रत्याययति । अभिधेयाऽनुसारेणैव शब्दव्युत्पत्तिः प्रकल्प्यते । शब्दानां प्रकृतिप्रत्ययौ सर्वथा काल्पनिकावेव जायेते । भर्तृहरिः अभिधेयगतान् गुणकर्मादीन् शब्दव्युत्पत्तिहेतून् समाचष्ट ।[3]

**३. प्रवृत्तिनिमित्तभेदात् सञ्ज्ञाकरणम्—**

सञ्ज्ञाशब्दानां बहूनि प्रवृत्तिनिमित्तानि सम्भवन्ति । यतो ह्यनेकैर्निमित्तै-रर्थतत्त्वस्य अभिसम्बन्धो दृश्यते । तेषु किञ्चनैकमेव निमित्तं सञ्ज्ञाकरणे हेतुर्भवति ।[4] विचित्रं हि नाम शब्दसामर्थ्यं भवति । येन प्रवृत्तिप्रयोजकेना-र्थतत्त्वस्याऽभिसम्बन्धोऽभिमतो भवति यद् व्युत्पत्तिनिमित्तं सञ्ज्ञाशब्दस्य प्रयोजकं स्वीक्रियते । कुम्भकारो हि कर्मकुशलो न केवलं कुम्भमेव निर्मिनोति, अपि तु शरावमपि कुरुते, सोऽन्यान्यपि पात्राणि समुत्पादयति, परं कुम्भकार-मेव सञ्ज्ञापदं लभते । भेदनच्छेदनदक्षोऽपि तक्षणकर्मा लोके तक्षैवाऽभिधीयते । सञ्ज्ञायाः प्रयुयुक्षुरभिधेयस्य यं प्रवृत्ति-विशेषं परिपश्यति स सञ्ज्ञाया निमित्तं जायते ।

**४. गुणविशेषाऽवेक्षणात् सञ्ज्ञाकरणम्—**

सामान्यतः सर्वे प्रातिपदिकशब्दाः प्रवृत्तिनिमित्तवाचका भवन्ति । प्रवृत्तिनिमित्तभेदाच्छब्दभेदेषु जातिवाचकं शब्दं प्रागचर्चयम् । जातिवाचक-शब्दानां सामान्यमर्थो भवति । जातिवाचकानपि शब्दान् प्रकरणविशेषो

१. गौरित्येव स्वरूपाद्वा गोशब्दो गोषु वर्तते ।
व्युत्पाद्यते न वा सर्वं कैश्चिच्चोभयमिष्यते ।। वा० प० २।१७७ ।

२. स्वरूपमपि हि शब्दार्थं एव । अष्टा० १।१।१, भाषावृ०, भाषावृ० वि० ।

३. वैरवासिष्ठगिरिशाः तथैकागारिकादयः ।
कैश्चित् कथञ्चिदाख्याता निमित्तावधिसङ्करैः ।। वा० प० २।१७३ ।

४. सन्निधाने निमित्तानां किञ्चिदेव प्रवर्तकम् ।
यथा तक्षादिशब्दानां लिङ्गेषु नियमस्तथा ।। वा० प० ३।१३।२० ।

व्यक्तिवाचकान् विपरिणमयति ।[1] प्रकरणं विना सामान्यशब्दा विशेषेष्वर्थेषु नाऽवतिष्ठन्ते । सामान्यतो वृक्षशब्दस्य सकलवृक्षजातं प्रवृत्तिनिमित्तं भवति । परं प्रकरणविशेषाद् वृक्षशब्दो व्यक्तिविशेषाभिधायी दृश्यते । 'भूमौ पतितं रुद्रदत्तस्य शिंशपा वृक्षं छिनत्ति' इत्यत्र व्यक्तिविशेषः शिंशपावृक्षो विवक्ष्यते । पदार्थस्य प्रधानेन धर्मेण व्यवहरन्तो लोका दृश्यन्ते ।[2] सम्भवत्स्वपि बहुषु व्युत्पत्तिनिमित्तेषु समाश्रितः स प्रधानधर्मो वस्तूनां सञ्ज्ञाप्रयोजकः सञ्जायते ।

## ४. क्रियाभेदात् सञ्ज्ञाभेदः—

सर्वार्थप्रत्यायनसामर्थ्यवतां शब्दानां शक्त्यवच्छेदमात्रे सञ्ज्ञाकर्तुर्व्यापारो भवतीति प्राग् अस्माभिः प्रतिपादितम् । तत्र शक्तिव्यावर्तनकर्मणि यत् किञ्चिद् व्युत्पत्तिनिमित्तं स्वीक्रियते । येषु च देवदत्तादिसञ्ज्ञाशब्देषु साक्षात् किञ्चिद् व्युत्पत्तिनिमित्तं न दृश्यते तत्राऽपि सञ्ज्ञाकर्तुः तादृशो मनोभावः क्वचिच्च शब्दस्वरूपमेव वाऽव्युत्पत्तिनिमित्तं भवति । अभिधेयगता क्रियाऽपि व्युत्पत्तिनिमित्तं भवति । क्रियाभेदश्च सञ्ज्ञाभेदे हेतुः[3] स्वीक्रियते । अतएव एकस्यैवाऽर्थस्य कृते बहूनि नामानि दृश्यन्ते । एकस्य कालस्य क्रियाभेदाद् वसन्तादिः ऋतुभेदः कल्पितः । एक एव मनुष्यः तक्षणकर्मणि प्रवृत्तः तक्षा उच्यते, कालान्तरे च अयस्कर्म कुर्वाणोऽयस्कारो भवति ।[4] स एव च राजकर्मणि प्रवर्तमानो राजा जायते ।[5] विद्यादानकर्मणि प्रवृत्तश्च सोऽध्यापको भवति । भारतीयस्मृतिकाराणां वर्णव्यवस्थाऽभिव्यञ्जका वर्णवाचका ब्राह्मणादिशब्दा अपि कर्ममूलका एव ।[6] यदा यदा यद् यत् कार्यं कुरुते कश्चित् तां तां सञ्ज्ञां लभते ।

---

१. सामान्यशब्दाश्च नाऽन्तरेण विशेषं प्रकरणं वा विशेषेष्ववतिष्ठन्ते ।
अष्टा० १।२।४५, महाभा० ।

२. विकल्पोत्थापितेनैव सर्वो भावेन लौकिकः ।
मुख्येनैव पदार्थेन व्यवहारो विधीयते ॥ वा० प० ३।३।८२ ।

३. क्रियाभेदाद् यथैकस्मिन् तक्षाद्याख्या प्रवर्तते ।
क्रियाभेदात् तथैकस्मिन् ऋत्वाद्याख्योपजायते ॥ वा० प० ३।९।३२ ।

४. तक्षणादयो विकरणात् क्रियाविशेषादुपकल्पिता तक्षायस्कारादिसञ्ज्ञा यथैकस्यैव कर्तुर्वर्तते ।
वा० प० ३।९।३२, हेला० ।

५. तक्षा राजकर्मणि प्रवर्तमानः स्वं तक्षकर्म जहाति । अष्टा० २।१।१, महाभा० ।

६. शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ।
क्षत्रियाज्जातमेवं तु विद्याद्वैश्यात्तथैव च ॥ मनु० स्मृ० १०।६५ ।

**६. अव्यवस्थितं सञ्ज्ञाकरणम् —**

समाजस्य दुर्व्यवस्थाऽव्यवस्थितसञ्ज्ञायाः प्रयोजिका भवति। अनेकदा वस्तुतत्त्वस्याऽज्ञानं प्रयोक्तॄणाञ्च दौर्मनस्यं भ्रान्तसञ्ज्ञायाः हेतुर्भवति। समाजस्य रूढभावनाऽपि अत्र हेतुरस्तीति वक्तुं शक्यते। वेदविदपि सदाचार-सम्पन्नोऽपि चर्मकारात्मजः चर्मकारसञ्ज्ञाऽनर्होऽपि रूढभावनाग्रस्तैः तस्य चर्मकार एव सञ्ज्ञा विधीयते। अज्ञानमपि सञ्ज्ञाकरणे हेतुर्भवतीति पतञ्जलिः निरदिशत्।[1] विदूरदेशोद्भवत्वमाश्रित्य पाणिनिः मणिविशेषस्य वैदूर्य इति नाम निर्दिदेश।[2] पतञ्जलिः पाणिनेरनुसन्धानमिदमयथार्थं समाचष्ट। पतञ्जलेरनुसारेण[3] वैदूर्यो मणिः विदूरदेशे नोत्पद्यते, अपि तु बालवायदेशे प्रभवति। विदूरे तु केवलमसौ संस्क्रियत एव। एतादृशे भ्रान्तस्थले सञ्ज्ञाकरणार्थमौपचारिकोऽपि हेतुः पतञ्जलिना समाश्रितः। पतञ्जलिकाले ततः प्राक्तनकाले वा वणिजो वाराणसीं जित्वरीमुपाचरन्ति स्म। तद् यथा व्यापारिणो वाराणसीं जित्वरीं व्याचक्षते स्म तथा शब्दशास्त्रिणो बालवायं विदूरं[4] सञ्ज्ञच्छन्ते स्म। अतस्तदुपचारवशादेव पाणिनिः वैदूर्यशब्दस्तदर्थे व्याचकार। वैदूर्यार्थे बालवायजपदमपि प्रयुक्तं दृश्यते।[5] अनेनौपचारिकेण सञ्ज्ञाकरणेन काचिद् व्यवहारक्षतिर्न दृश्यते।[6] यतः कालान्तरे जनानां तादृशेन शब्देन गृहीतशक्तिकत्वाद् लोकव्यवहारः प्रचलत्येव। व्यवहारसम्पादनमेव च सञ्ज्ञाशब्दानां मूर्द्धाऽभिषिक्तं प्रयोजनम्।[7]

**७. यदृच्छाशब्देन सञ्ज्ञाकरणम्—**

अल्पप्रयासाऽभिलाषिणी खलु जनप्रवृत्तिः दृश्यते। प्रयोक्तारो हि अल्पेन शाब्दव्यापारेण कृत्स्नमप्यर्थं प्रकटयितुं कामयन्ते।[8] वस्तूनां सञ्ज्ञाकरणे

---

१. अष्टा० ४।३।८४, महाभा०।

२. विदूराञ्ञ्यः। (अष्टा० ४।३।८४)

३. अयुक्तोऽयं निर्देशः न ह्यसौ विदूरात् प्रभवति। किं तर्हि ? बालवायात्प्रभवति। विदूरे संस्क्रियते। अष्टा० ४।३।८४, महाभा०।

४. यथा वणिजो वाराणसीं जित्वरीत्युपाचरन्ति, एवं वैयाकरणा बालवायं विदूर इत्युपाचरन्ति। अष्टा० ४।३।८४, महाभा०।

५. बालवायजमणिस्थलाङ्गुरा। शि० पा० १३।५८।

६. एवञ्च बालवायादि - जित्वरीवदुपाचरेत्।
भेदाऽभेदाऽभ्युपगमे न विरोधोऽस्ति कश्चन॥ (वा० प० २।१८१)

७. तत्र तावत्सञ्ज्ञा संव्यवहाराय संगृह्यते। सार० व्या०, संज्ञाप्र०, पृ० ९।

८. इह हि सर्वे मनुष्या अल्पेन यत्नेन महतोऽर्थान् आकाङ्क्षन्ति।
अष्टा० २।१।६९, महाभा०।

जनानामियमेव प्रवृत्तिः मूलं विद्यते। गुणाऽनुवादपुरःसरं वस्तूनां निर्देशाऽपेक्षया नामोच्चारणं लघीयो[1] भवति च । यदृच्छारूपेण सञ्ज्ञाशब्देन कृत्स्नो वस्तुनिर्देशः संक्षेपेण जायते। स्वव्युत्पत्तिनिमित्तं विहाय यः शब्दः स्वरूपमात्रेण लोकेऽर्थप्रत्यायनार्थं प्रवृत्तः स यदृच्छाशब्दो भवति । यदृच्छाशब्दा नियतवस्तुपरका भवन्ति । तन्निर्देशाऽतिरिक्तं यदृच्छाशब्दस्याऽन्यत् प्रवृत्तिनिमित्तं न जायते । प्रायेण हि सञ्ज्ञाशब्दा यदृच्छाशब्दा भवन्ति । देवदत्तादयो व्यक्तिवाचकाः सञ्ज्ञाशब्दा यदृच्छाशब्दा एव । नियमाय चैते सञ्ज्ञाशब्दा व्यवह्रियन्ते ।[2] सर्वार्थप्रत्यायनसामर्थ्यवान् शब्दो भवति । अर्थश्चाऽपि सर्वशब्दप्रत्याय्यशक्तियुक्तो भवति । केनाऽपि शब्देन कस्यचनाऽपि अर्थस्य सम्प्रत्ययः सम्भवी । अत एवाऽव्यवस्थामिमां निराकर्तुं भर्तृहरिः सञ्ज्ञाशब्दान् नियमार्थान् व्याचष्ट ।[3] यथा प्रवृत्तिनिमित्तवाचकैः गवादिशब्दैरर्थस्याविच्छिन्नः सम्बन्धः तथा यदृच्छाशब्दस्याऽपि अर्थेन सह स सम्बन्धः सन्तिष्ठत इति बोध्यम् । द्विविधश्चैष प्रयोगनियमः सम्भावितः—

१. अनेन शब्देनाऽयमेवाऽर्थो ग्राह्यः ।
२. अयञ्चाऽर्थोऽनेनैव शब्देन बोध्यः ।[4]

वंशपरम्परातः केचन सञ्ज्ञाशब्दा विनाऽपि किञ्चित् प्रवृत्तिनिमित्तमुपनामरूपेण प्रचलन्ति । चतुर्वेदविदो वंशजा विनाऽपि वेदाऽध्ययनं चतुर्वेदं सञ्ज्ञापदं स्वीकुर्वते । एवं त्रिवेदी द्विवेदी त्रिपाठीत्येवं सञ्ज्ञाशब्दाः प्रवर्तन्ते । इमेऽपि यदृच्छाशब्दा एवेति बोध्यम् ।[5]

### ८. उपहासवशात् सञ्ज्ञाकरणम्–

लोके परिहासवशादुपहासवशाद् वा कारणविशेषादर्थतत्त्वस्य समाख्यानं भवति । 'यद्वानः' 'तद्वानः' इति प्रयोक्तव्ये वक्तृत्वदौर्बल्याद् 'यर्वाणः,

---

१. शब्दव्यापारो लघुः, ततोऽपि लघीयो नाम । अष्टा० १।१।२६, महाभा० प्र० ।
२. देवदत्तादयश्च सञ्ज्ञाशब्दा नियमार्था इति सिद्धान्तः । अष्टा० १।१।६७, महाभा० प्र० ।
३. व्यवहाराय नियमः सञ्ज्ञानां सञ्ज्ञिनी क्वचित् ।
नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत् ।। वा० प० २।३६५ ।
४. द्र०—अष्टा० १।१।६७, महाभा०, प्र०, उद्द्यो० ।
५. अर्थगतं प्रवृत्तिनिमित्तमनपेक्ष्य यः शब्दः प्रयोक्त्रभिप्रायेणैव प्रवर्तते । स यदृच्छाशब्दो डित्थादिः । अष्टा० प्रत्या० सू० २, महाभा०, प्र० ।

तर्वाण:' इति अशुद्धप्रयोगकरणात् तादृशोच्चारयितृणां 'यर्वाण: तर्वाण' इति उपहासास्पदं नाम जातम् ।[1] वैदिकवाङ्मये 'शुन: शेप:, शुन: पुच्छ:, शुनो लाङ्गूल' इत्येवमादि नामकरणमुपहासास्पदमेव संलक्ष्यते ।

शिष्टपरिहास: कदाचित् सम्मानास्पदं सञ्ज्ञां जनयति । कणभक्षणं योगबलप्रापकं भवतीति भीष्मो युधिष्ठरमुपदिदेश[2] । परमाणुषु विशेषपदार्थस्यान्वेषणा वैशेषिकदर्शनकारेण समुपस्थापिता । तस्य ख्याते 'कणाद' इति सञ्ज्ञापदे व्यङ्ग्यार्थक: शिष्टपरिहास: प्रतीयते । यथा कश्चित् छिन्ने क्षेत्रे कणान् समाहृत्याऽभ्यवहरति तथा खल्वयं दार्शनिकशिरोमणि: कार्येषु विनष्टेष्वपि तत्कारणीभूतेषु परमाणुषु विशेषपदार्थान् प्रतिपादयति । धन्योऽसौ दार्शनिको योगबलो कणाद: । कणादस्यर्षे: गोत्रमूलकं नाम 'काश्यप' आसीदिति त्रिकाण्डशेषे पुरुषोत्तमदेवो[3] निरदिशत् ।

## ६. वृद्धव्यवहारात् सञ्ज्ञाकरणम्—

वृद्धव्यवहारपरम्परा लोक[4] उच्यते । वृद्धव्यवहारादेव जना: शब्दार्थसम्बन्धानां विनिश्चितिमधिगच्छन्ति[5] । वृद्धव्यवहाराच्च शब्दोऽर्थप्रत्यायने योग्यो भवति । शब्दार्थयो: साङ्कर्याद् योग्यभावाख्येन सम्बन्धेन[6] शब्दोऽर्थं व्यनक्ति । उपर्यस्माभि: सञ्ज्ञाकरणे ये हेतव उपन्यस्ता: तेषामाधारो वृद्धव्यवहार एव विद्यते । सर्वस्याऽपि शास्त्रीयस्य शब्दार्थनियमस्य तावदेव चारितार्थ्यं यावल्लोक: तमनुसरेत् । अत: पतञ्जलि: वाचनिकं शब्दार्थं प्रत्याख्याय स्वाभाविकं शब्दैरर्थाभिधानम् इति प्रत्यपादयत्[7] । विशेषतोऽनेकप्रवृत्तिनिमित्तके शब्दे लोकाऽनुसरणं विना शाब्द: प्रत्यय: सम्भवो न भवति । कस्यार्थस्य कृते क: शब्द: प्रयोज्य इति ज्ञातुमवश्यं हि लोकोऽनुसर्तव्यो भवति ।

---

१. द्र०—अष्टा०, महाभा०, पस्पशा० ।

२. कणानां भक्षणे युक्त: पिण्याकस्य च भारत ।
स्नेहानां वर्जने युक्तो योगीबलमवाप्नुयात् ।। महाभार०, शां० प० ३००।४३ ।

३. ·· कणाद: काश्यप: समौ । त्रिकां० शे०, कां० २, ब्रह्मव० ७, श्लो० २१ ।

४. लोक्यते येन शब्दार्थौ लोकस्तेन स उच्यते ।
व्यवहारोऽथवा वृद्धव्यवहर्तृपरम्परा ।। अष्टा० ४।३।१, महाभा०, प्र०, उद्द्यो० ।।

५. वृद्धव्यवहारादेव शब्दार्थसम्बन्धव्युत्पत्ति: । अष्टा० २।१।१, महाभा०, प्र० ।

६. इह योग्यतालक्षणेन सम्बन्धेन शब्दोऽर्थं लोके प्रत्याययति ।
अष्टा० १।१।६८, महाभा० ६ ।

७. अनेकार्थाऽभिधाने यत्नं कुर्वताऽवश्यं लोक: पृष्ठतोऽनुगन्तव्य: । केष्वर्थेषु लौकिका: कान् शब्दान् प्रयुञ्जते ।। अष्टा० १।२।६४, महाभा० ।

लोके केचन नियतविषयाः सञ्ज्ञाशब्दा दृश्यन्ते[1]। तत्र कश्चनाऽपि व्युत्पत्तिनिमित्तादिको हेतुः न सन्तिष्ठते। अश्वस्य गोश्च समानेऽपि रक्ते वर्णे सति अश्वः शोण उच्यते, गौश्च लोहितो जायते। समाने कृष्णे वर्णे गौः कृष्णो भवति, परन्तु अश्वो हेम उच्यते। शुक्लो गौः श्वेतो भवति। अश्वश्च शुक्लः कर्को भवति। अत्र लोकः खलु प्रमाणम्। लोके पितुः पुत्रः पुत्री च परस्परं भ्रातृस्वसृभावं भजेते। वैयाकरणाश्च भ्रातृशब्दव्युत्पत्तौ भरणक्रियां व्युत्पत्तिनिमित्तमन्वीषुः। भरणक्रियासमर्था च स्वसाऽपि दृश्यते। परं यथा भरणरूपं व्युत्पत्तिनिमित्तम् आदाय स्वसृपितुः पुत्रो भ्राता भवति न तथा भरणक्रियासमर्थोऽपि भ्रातृपितुः पुत्री भ्राता भवति, तत्र वृद्धव्यवहाररूपस्य लोकस्य प्रामाण्यस्वीकारात्[2]। न हि लोके भ्रातरि अर्थे स्वसृशब्दः प्रयुज्यते, न वा स्वसरि अर्थे भ्रातृशब्दः। लोकव्यवहारे यस्मिन्नर्थे यो शब्दः स्वीकृतः स एव शब्दः तस्याऽर्थस्याऽभिधायकः।

उपरि वर्णितेषु नियमेषु कदा को नियम आश्रितो भविष्यति सञ्ज्ञा-इति इदमित्थन्तया वक्तुं केनचित् कथञ्चिदपि उद्घोषयितुं न शक्यते। यदा यस्य यादृशी प्रवृत्तिः भवति तदा तादृशीं सञ्ज्ञां प्रयुङ्क्ते। तदेवाश्रित्य चाऽग्रे प्रयोज्यवृद्धाः व्यवहरन्ति। इदमेव तथ्यं पतञ्जलिना पूर्वाऽभिसम्बन्धऽ-नाम्ना आविष्कृतम्[3]। पूर्वेषां प्रयोजकवृद्धानां येषां शब्दानां यैरर्थैरभिसम्बन्धोऽभिमतो भवति पश्चाद्भवैः प्रयोज्यवृद्धैः तथैवाऽनुगम्यते। कस्यचनाऽपि सञ्ज्ञापदस्य प्रामाण्यं लोकादेवाऽवधार्यते। लोकप्रामाण्यं विना किञ्चिदपि सञ्ज्ञापदं व्यवहारपदं न लभते।

## सञ्ज्ञाकरणे पाणिनीयं मतम्

प्रमाणभूतः शाब्दिकः पाणिनिराचार्यः परमः प्रवीणः खलु लोकव्यवहारावेक्षणे। सञ्ज्ञाशब्दविषये पाणिनिना अष्टाध्यायीसूत्रेषु भाषातत्त्वदृष्ट्या कतिपये मौलिका नियमा निर्दिष्टाः। यथाप्रसङ्गमत्र तेऽपि संक्षेपतः प्रदर्श्यन्ते।

१. बहवः सञ्ज्ञाशब्दाः पितुः मातुश्च नामाधृत्य[4] व्यवह्रियन्ते। पाण्डवः,

---

१. अन्यत्राऽपि हि नियतविषयाः शब्दा दृश्यन्ते। तद् यथा—समाने रक्ते वर्णे गौर्लोहित इति भवत्यश्वः शोण इति। अष्टा० २।२।२९, महाभा०।

२. दर्शनं वै हेतुः, न हि स्वसरि भ्रातृशब्दो दृश्यते। अष्टा० २।१।६९, महाभा०।

३. कृतस्तत्र पूर्वैरभिसम्बन्धः। अष्टा० १।१।१, महाभा०।

४. तस्यापत्यम् (अष्टा० ४।१।९२, स्त्रीभ्यो ढक्। अष्टा० ४।१।२०, इत्यादीनि सूत्राण्यत्राऽवधेयानि। (ले०)

दाशरथिः, पाराशरिः, सात्यवतः, कौन्तेयः, सौमित्रः, इत्येवमादीनि अपत्य-वाचकानि सञ्ज्ञापदानि तदुदाहरणानि विद्यन्ते।

२. गोत्रनामजा अपि सञ्ज्ञाशब्दा दृश्यन्ते[1]। दाक्षीपुत्रस्य पाणिनिरिति नाम गोत्रनिमित्तकमस्तीति त्रिकाण्डशेषकोशेन विज्ञायते। स्यात्तस्य वैयक्तिकं नाम 'आहिको' भवेत्। वात्स्यायनः, कात्यायनः, वैयासकिः, नैषादकिरित्यादि सञ्ज्ञापदान्यपि गोत्रनिमित्तकानि विद्यन्ते।

३. जन्मस्थानं[2] निवासस्थानम्[3] अभिजनस्थानञ्चा[4]ऽपि नामकरणे निमित्तं भवतीति पाणिनिना निर्दिष्टम्। यत्र प्रजायते तज्जन्मस्थानमुच्यते। यत्र साम्प्रतमुष्यते तन्निवासस्थानं भवति। यत्र च पूर्वैरुषितं तदभिजनस्थानं[5] जायते। अभिजनशब्दस्य पूर्वबान्धव एवास्ति प्रवृत्तिनिमित्तम्। परमत्र तात्स्थ्यादभिजनपदेन स्थानमुच्यते[6]।

पराशरेण बलात् कृतव्यवाया सत्यवती नाम कन्या स्वसुतं वेदव्यासाऽभिधं द्वीपे प्रासूत। तच्च द्वीपस्थानं तस्य 'द्वैपायन' इति नामकरणे निमित्तम् अभूत्।[7] स्रौघ्नः, माथुरः, गान्धारी इत्येवमादीनि नामानि निवासाभिजना-ऽनुसारीणि सन्ति।

४. पुरातनमितिवृत्तं नामकरणे प्रयोजकं भवति। पुरन्दरः, शक्रजित्, त्रिपुरारिः प्रभृतीनि सञ्ज्ञापदानि पुरातनमितिवृत्तमाधृत्य प्रचलितानि।

५ सञ्ज्ञाशब्देषु प्रायः सञ्ज्ञाविधाता अर्थतत्त्वस्य स्वकीयभावना-नुसारेण नाम करोतीति प्राक् प्रतिपादितम्। भाविनीं क्रियामाश्रित्य शुभैष-णया पितरौ अन्ये वा प्रयोक्तारः सञ्ज्ञापदं प्रयुञ्जते। सोमयाजी अग्निष्टोम-याजी इत्यादीनि सञ्ज्ञापदानि भाविनीं क्रियाम् अभिलक्ष्यैव प्रवृत्तानि।

६. ग्रन्थस्य नाम ग्रन्थकारनामाऽनुसारेण जायते। कठसंहिता चरक-संहिता च कठनाम्ना चरकनाम्ना च[8] व्यवह्रियेते। शिशुपालवधकाव्यं महा-

---

१. गोत्राद् यून्यस्त्रियाम् (अष्टा० ४।१।९४) इत्यादीनि सूत्राणि द्रष्टव्यानि।

२. तत्र भवः। (अष्टा० ४।३।५३) तत्र जातः। अष्टा० ४।३।२५ इत्यादि।

३. सोऽस्य निवासः। अष्टा० ४।३।८९।

४. अभिजनश्च। अष्टा० ४।३।९०।

५. निवासो नाम यत्र सम्प्रत्युष्यते, अभिजनो नाम यत्र पूर्वैरुषितम्।
अष्टा० ४।३।८९-९०, महाभा०।

६. अभिजनशब्देन पूर्वबान्धवा उच्यन्ते। तत्सम्बन्धाद्देशोऽभिजनो गृह्यते।
अष्टा० ४।३।९०, महाभा०, प्र०।

७. द्वीपे जातो यतो बालस्तेन द्वैपायनोऽभवत्।
वेदशाखाविभजनाद् वेदव्यासः प्रकीर्तितः॥ (शिवपु०, उमासं० ४४, अ० ४५ श्लोक)

८. कठचरकाल्लुक्। अष्टा० ४।३।१०७।

कविमाघप्रणीतं माघकाव्यनाम्नाऽपि स्मरन्ति जनाः।

७. काव्यस्य प्रधानं पात्रं तत्काव्यनामकरणे हेतुर्भवति, ग्रन्थस्य मुख्यः प्रतिपाद्यो विषयश्चाऽपि तद्ग्रन्थस्य नामकरणे हेतुर्जायते।[1] कादम्बरी, अभिज्ञानशाकुन्तलम् इत्यादि नाम इत्थमेव। पतञ्जलिना वासवदत्ता, सुमनोत्तरा इति नामद्वयमुदाहृतम्।[2]

८. देशनाम्ना शासकस्य नाम प्रजायते।[3] कम्बोजः, चोलः, शकः, केरलः[4] इत्यादीनि उदाहरणभूतानि।

९. वृक्षनाम तत्फलस्याऽप्यभिधायकं[5] भवति। परं वृक्षफलवाचकयोः शब्दयोः लिङ्गव्यत्यय आवश्यको भवति। यथा–आम्रम्, जम्बु, पीलु इत्येवमादीनि।

१०. देश तन्निवासिनोश्च तादात्म्यव्यपदेशाद् नामव्यपदेशो दृश्यते। यथा अङ्गवङ्गादि।

११ वस्तूनां प्रभवस्थानमपि नामकरणे निमित्तं भवति।[6] विदूरदेशोद्भवत्वमाश्रित्य मणिविशेषस्य वैदूर्यमिति नाम पाणिनिना स्वीकृतम्।[7] कापिशीदेशोद्भवत्वात् कापिशायनी द्राक्षा, कापिशायनं मधु चेति व्यवह्रियते।[8] राङ्कवो राङ्कवायणो वा वृषभो रङ्कुस्थानोद्भवत्वादुच्यते।[9] हैमवती गङ्गेति स्पष्टमुदाहरणम्।

१२. प्रयोक्तॄणामुपचारो वस्तुनः सञ्ज्ञां प्रयोजयति। व्यापारिणो वाराणसीं जित्वरीमुपाचरन्ति, वैयाकरणाश्च बालवायदेशं विदूरदेशमुपाचरन्ति। अत एव वैदूर्यमणेः कृते बालवायजशब्दोऽपि प्रयुज्यते।[10]

१३. कर्तृनाम तत्कार्यनाम्नः प्रयोजकं भवति। वाररुचाः श्लोकाः,[11] माक्षिकं मधु, सारघं[12] कार्मुतमित्यादीनि सञ्ज्ञापदानि इत्थमेव जायन्ते।

---

१. अधिकृत्य कृते ग्रन्थे। अष्टा० ४।३।८७।
२. अष्टा० ४।३।८७, महाभा०।
३. कम्बोजाल्लुक्। अष्टा० ४।१।१७५।
४. अष्टा० ४।१।१७५, भाषावृ०।
५. फले लुक्। अष्टा० ४।३।१६३।
६. प्रभवति। अष्टा० ४।३।८३।
७. विदूराञ्ञ्यः। अष्टा० ४।३।८४।
८. कापिश्याः ष्फक्। अष्टा० ४।२।९९।
९. रङ्कोरमनुष्येऽण् च। अष्टा० ४।२।१००।
१०. वैदूर्यं बालवायजम्। त्रिकां० शे० को०, कां० २, व० ९, २९।
११. कृते ग्रन्थे। अष्टा० ४।३।११६।
१२. सञ्ज्ञायाम्। अष्टा० ४।३।११७।

१४. यद् वस्तु यत्र देशे उद्भवति तद् वस्तु तद्देशस्य नामकरणे निमित्तं जायते ।[1] उदुम्बरा यस्मिन् देशे भवन्ति, स औदुम्बरो देश उच्यते ।

१५. येन जनेन जनसमुदायेन वा यन्नगरं व्यवस्थापितं भवति, तद्-व्यवस्थापकनाम्ना तद्देशस्य नाम प्रचाल्यते ।[2] यथा कुशाम्बैः निर्वृत्ता नगरी कौशाम्बी इत्युच्यते । अद्याऽपि एतादृशानि सञ्ज्ञापदानि स्वीक्रियन्ते । लाजपतनगरम्, आर्यनगरमित्येवं व्यवह्रियन्ते लोके ।

१६. यत्र देशे ये निवासिनो भवन्ति, तन्नामाऽनुसारेण तत्प्रदेशस्य सञ्ज्ञाकरणं पाणिनिना[3] व्याकृतम् । यथा शिवीनां निवासः शैवः प्रदेश उच्यते ।

१७. समीपवर्ती योऽपि भवति, तन्नाम्ना प्रदेशस्य नामकरणं दृश्यते । यथा—विदिशातटवर्ती ग्रामो वैदिशो भवति । वरणा ग्रामः, पाम्पानि वनानि इत्यादीनि उदाहर्तुं शक्यन्ते ।

१८. क्रीडायां यद्वस्तुनः प्रहरणं भवति, तद् वस्तु तत्क्रीडायाः सञ्ज्ञां प्रयोजयति ।[4] यथा–यत्र क्रीडायां दण्डः प्रहरणं भवति सा दाण्डा क्रीडा भवति । यस्याञ्च क्रीडायां मुष्टिः प्रह्रियते सा मौष्टा क्रीडाऽभिधीयते ।

१९ यस्मै प्रयोजनाय सङ्ग्राम आरभ्यते तत् प्रयोजनं[5] तस्य सङ्ग्रामस्य नामकरणे निमित्तं भवति। सुभद्रायाः कृते कृतः सङ्ग्रामः सौभद्र उच्यते । गौरिमित्रप्रयोजनकः सङ्ग्रामो गौरिमित्रो भवति । पाण्डवकौरवयोः द्रौपदो युद्धः, रामरावणयोः सैतः समरः, भारतचीनयोः लाद्दाखो युद्धः, भारत-पाकयोश्च काच्छः सङ्ग्रामः इति समुदाहर्तुं शक्यते ।

२०. यस्मिन् सङ्ग्रामे ये योद्धारो भवन्ति तेषामपि नाम सङ्ग्राम-नामकरणे प्रयोजकं[6] भवति । यथा भरता योद्धारो यत्र स भारतो युद्ध उच्यते । गुरिल्ला युध्यन्ति यत्र सङ्ग्रामे स गौरिल्लः सङ्ग्रामोऽमेरिकावियतनामयोः ।

२१. लाघवार्थं लोके सञ्ज्ञा समाश्रीयते । कात्यायनः पदे पदैकदेशस्य लोपं विधाय लाघवमूलां प्रवृत्तिमिमां प्रादर्शयत् ।[7] प्रपतितपर्णो लोके लाघवा-

---

१. तदस्मिन्नस्तीति देशे तन्नाम्नि । अष्टा० ४।२।६७ ।
२. तेन निर्वृत्तम् । अष्टा० ४।२।६८ ।
३. तस्य निवासः । अष्टा० ४।२।६९ ।
४. अदूरभवश्च । अष्टा० ४।२।७० ।
५. तदस्यां प्रहरणमिति क्रीडायां णः । अष्टा० ४।२।५७ ।
६. सङ्ग्रामे प्रयोजनयोद्धृभ्यः । अष्टा० ४।२।५६ ।
७. प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः । अष्टा० २।२।२४, वा० १ ।
नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः । अष्टा० २।२।२४, वा० २ ।

ऽनुरोधात् अपर्ण उच्यते, अविद्यमानपुत्रश्च अपुत्र कथ्यते । पतञ्जलिनाऽपि प्रवृत्तिरियं निदर्शिता ।[1] देवदत्त इति वक्तव्ये दत्त इति पदैकदेशोऽपि प्रयुज्यते । सत्यभामेति प्रयोक्तव्ये भामेति पदैकदेशं प्रयुञ्जानाः अपि दृश्यन्ते ।[2] अद्याऽपि लोके प्रवृत्तिरियं सुस्पष्टं दृश्यते । 'द्रविड़ मुन्नेत्र कषघम्' इति गुरुभूते पदे प्रयोक्तव्ये 'द्रमुक' इति लघुभूतः पदैकदेशोऽपि प्रयुज्यते । 'प्रजासोशलिस्ट पार्टी' प्रयोक्तुकामाः 'प्रसोपा' इति पदैकदेशं प्रयुज्यते । 'संयुक्तासोशलिस्टपार्टी'ति गुरुभूतस्य पदस्य स्थाने 'संसोपा' इति लघुभूतं पदैकदेशमपि लोके श्रूयते ।

एवमर्थतत्त्वस्य नामकरणे महती खलु सूक्ष्मेक्षिका पाणिनेराचार्यस्य[3] दृश्यते । निदर्शनमात्रमेवेह सञ्ज्ञाविषयकं पाणिनीयं मतस्माभिरुपन्यस्तम् ।

**सञ्ज्ञाकरणविषये शाकटायनगार्ग्ययोर्वैमत्यम्—**

वस्तूनां नामकरणविषये पूर्वं आचार्याः परस्परं भृशं विवदमाना विलोक्यन्ते । आचार्यशाकटायनः सर्वाणि नामपदानि आख्यातजानीति व्याचष्ट ।[4] शाकटायनमते सर्वे सञ्ज्ञाशब्दा व्युत्पन्नाः स्वीक्रियन्ते व्युत्पत्ति-कर्मणि कुशल आचार्यो यास्क इममेव पक्षं जग्राह, अन्यैश्चाऽपि निरुक्तकारैः पक्षोऽयं स्वीकृतः ।[5]

अस्यामेव सञ्ज्ञाकरणनिरूपणायामस्माभिः वस्तूनामवस्थाविशेषः सञ्ज्ञा-करणप्रयोजको भवतीति पूर्वं प्रतिपादितम् तत्र । वस्तूनामवस्थाविशेषेषु क्रिया-कृतोऽवस्थाविशेष एकतमो भवति । क्रियाकृतेनाऽवस्थाविशेषेण ये शब्दाः प्रवर्तन्ते ते खलु आख्यातजाः सञ्ज्ञाशब्दाः । क्रियाकृतोऽवस्थाविशेषः एव च शब्दानां व्युत्पत्तिनिमित्तं जायते । येन जनसमुदायेन वैयाकरणेन वा गमनशीला गौः परिलक्षिता तेन गच्छतीति गोपदं व्युत्पादितम् । गौः स्वखाद्यं वस्तु पूर्वं निगिलति, पश्चाच्च निगिलितं तदुद्गिल्य पुनश्चर्वति । एवञ्च गौर्निगरण-शीला विद्यते । यैर्हि एष निगरणरूपो गोगतोऽवस्थाविशेषः परिलक्षितः तेषां मते निगरणरूपा क्रिया एव गोशब्दस्य व्युत्पत्तिनिमित्तं विद्यते । अत एव गिरतीति गौरुच्यते । दोहकाले गावः शब्दं कुर्वते । स्ववत्सान् आह्वयितुञ्चा-ऽपि गर्जन्ति । यैश्च गोगतमेतद् गर्जनरूपं व्युत्पत्तिनिमित्तं समाश्रितं तैः गर्ज-तीति गोपदं व्युत्पाद्यते । शाकटायनस्य नाम्नाम् आख्यातजत्वसिद्धान्तोऽयं

---

१. …प्रयुञ्जानाः पदेषु पदैकदेशान् । अष्टा० १।१।४५, महाभा० ।
२. देवदत्तो दत्तः, सत्यभामा भामेति । अष्टा० १।१।४५, महाभा० ।
३. महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य । अष्टा० ४।२।७४; का० वृ० ।
४, ५. … नामान्याख्यातजानीति शाकटायनो निरुक्तसमयश्च । निरु० १।४।१ ।

केश्चिद् वैयाकरणैरपि स्वीकृतः ।

आचार्यो गार्ग्यः व्युत्पत्तिवादि मतमिदं व्यरुणत् ।[1] केचन वैयाकरणा अपि गार्ग्यमतमन्वमोदन्त । शब्दानां व्युत्पत्तिनिमित्ते प्रवृत्तिनिमित्ते च परस्परम् अतादात्म्यं हि गार्ग्यस्य शाकटायनेन सह विरोधे हेतुरासीत् । बहूनां सञ्ज्ञाशब्दानां अन्यद्धि व्युत्पत्तिनिमित्तम् अन्यच्च प्रवृत्तिनिमित्तं दृश्यते । केषुचन सञ्ज्ञापदेषु क्रिया प्रवृत्तिनिमित्तं दृश्यते । केषुचन सञ्ज्ञापदेषु क्रियाः साक्षादुपलभ्यन्ते, केषुचन च नोपलभ्यन्ते, तत्र प्रवृत्तिनिमित्ताऽनुसारेण क्रियाः प्रकल्प्यन्ते । अतोऽतिरिक्तेषु बहुषु सञ्ज्ञाशब्देषु क्रिया नैव साक्षादुपलभ्यते नाऽपि प्रकल्पयितुमपि शक्यते । 'डित्थः, डवित्थः' इत्यादिषु रूढिशब्देषु क्रियाः केवलं शब्दव्युत्पत्तिकर्मणि उपलक्षणभूताः निमित्तभावेनोपादीयन्ते । न हि वस्तुतोऽर्थक्रियासु अनुसहायभावं भजन्ते । अतो गार्ग्यमते केचन नामशब्दा आख्यातजा व्युत्पन्नाः, केचन चाऽव्युत्पन्नाः क्रियारूपव्युत्पत्तिनिमित्तरहिताः सिद्धयन्ति । एतदेव संलक्ष्य गार्ग्यमतं व्याचक्षाणो दुर्गाचार्य ऋज्वर्थायां निरुक्तवृत्तौ नामपदानां त्रिधां व्यवस्थां[2] समुपस्थापयत्—

१. प्रत्यक्षक्रियाणि नामानि कारकः, हारक इत्यादीनि ।
२. प्रकल्प्यक्रियाणि नामानि । —गौरश्व इत्यादीनि ।
३. अविद्यमानक्रियाणि नामानि । डित्थः, डवित्थ इत्यादीनि चेति ।

कारकः हारक इत्यादिषु सञ्ज्ञापदेषु प्रत्यक्षं हि करणरूपं हरणरूपञ्चाख्यातमुपलभ्यते । अत इमानि प्रत्यक्षक्रियाणि नामान्युच्यन्ते । गवादिषु शब्देषु गमनादि आख्यातं प्रकल्प्यते, तस्मादिमानि प्रकल्प्यक्रियाणि जायन्ते । डित्थादिषु अविद्यमानक्रियेषु नामसु क्रिया नैव प्रत्यक्षतो दृष्टा, नाऽपि प्रकल्पितैव । एवञ्च गार्ग्यमते अविद्यमानक्रियेषु सञ्ज्ञापदेषु नाम्नामाख्यातजत्वपक्षो न सङ्गच्छते । प्रकल्प्यक्रियेष्वपि सञ्ज्ञापदेषु आख्यातजत्वपक्षः सार्वत्रिक एवेति वक्तुमशक्यम् । यदि प्रकल्प्यक्रियाणि नामानि व्युत्पत्तिनिमित्तक्रियाऽन्वितानि स्युः तदा गन्तृसामान्यं गोसञ्ज्ञापदम् आप्नुयात् । यः कश्चनापि अध्वानमश्नुवीत, सोऽश्व उच्येत ।[3] किञ्चैकस्मिन्नर्थे न हि

१. न सर्वाणीति गार्ग्यो वैयाकरणानाञ्चैके । (निरु० १।४।१)
२. इह त्रिधा व्यवस्था नाम्नाम् । तद् यथा—प्रत्यक्षक्रियाणि, प्रकल्प्यक्रियाणि, अविद्यमानक्रियाणि च । (निरु० १।४।१, ऋज्व०)
३. तद्यत्र स्वरसंस्कारासमर्थौ प्रादेशिकेन गुणेनाऽन्वितौ स्यातां संविज्ञातानि तानि यथा गौरश्वः पुरुषो हस्तीत्यथ चेत् सर्वाणि आख्यातजानि नामानि स्युर्यः कश्च तत्कर्म कुर्यात् सर्वं तत् स्वत्वं तथाऽऽचक्षीरन् । (निरु० १।४।१)

एकैव क्रियाप्रवृत्तिः दृश्यते। न हि गौर्गच्छत्येव, भुङ्क्तेऽपि शेते चाऽपि। एवञ्च यावन्तीभिः क्रियाभिः सम्प्रयुक्तोऽर्थः, तावन्तीभ्योऽर्थस्य नामधेयप्रतिलम्भः आपद्येत।[1] न चैतदिष्टम्, अतो गार्ग्यमते शाकटायनस्य नैरुक्तानाञ्च नाम्नामाख्यातजत्वसिद्धान्तोऽयुक्तः।

**पाणिनीयानां मध्यमार्गाऽनुवर्ती सिद्धान्तः—**

अत्र विषये पाणिनीया आचार्या मध्यमार्गम् अन्वसरन्। शङ्खादिषु शब्देषु शमादिधातुभ्यो विहितानां खादिप्रत्ययानाम्[2] 'आयनेयीनीयियः फ ढ-ख-छ-घां प्रत्ययादीनाम्।'[3] इति सूत्रेणेनादीन् आशङ्क्य कात्यायनः तान् शङ्खादिशब्दानव्युत्पन्नप्रातिपदिकान् स्वीकृत्य समादधौ। मतम् इदञ्च पाणिनेराचार्यस्याऽभिमतमिति व्याचष्ट।[4] पतञ्जलिरपि उणादीन् शब्दानव्युत्पन्नानेव समाचष्ट।[5] अनेन कात्यायनपतञ्जलिग्रन्थेन पाणिनेः शब्दानां व्युत्पत्तिनिमित्तविषये प्रवृत्तिद्वयी स्पष्टं परिलक्ष्यते, केचन शब्दा व्युत्पन्नाः केचन चाऽव्युत्पन्ना इति। कात्यायनवाक्यं व्याचक्षाणः कैयटः परिहारमिमं पक्षान्तरीयमवोचत्।[6] व्युत्पत्तिपक्षस्याऽपि पाणिनेरभिमतत्वात् स्वयमपि पाणिनिना स्वकीया उभयात्मिका प्रवृत्तिर्व्यक्ता। पृषोदरादिशब्दान् निपातयन्[7] पाणिनिरव्युत्पत्तिपक्षं प्रास्तावीत्। प्रकृतिप्रत्ययान् प्रतिपादयन् स व्युत्पत्तिपक्षमपि प्रादर्शयत्।[8] अतएव ठस्येकः[9] इति पाणिनीयं सूत्रं भाषमाणः पतञ्जलिराचार्यः उणादिशब्दान् व्युत्पन्नानव्युत्पन्नान्[10] चाऽपि व्याचख्यौ।

शाकटायनमतमाशङ्कमानस्य गार्ग्यस्य नाम्नाम् आख्यातजत्वपक्षीय

---

१. अथाऽपि चेत् सर्वाण्याख्यातजानि नामानि स्युः, यावद्भिः भावैः सम्प्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात्। (निरु० १।४।१)

२. शमेः खः। (उणादि सू० १।१०२)

३. अष्टा० ७।१।२।

४. प्रातिपदिकविज्ञानाच्च पाणिनेः सिद्धम्। अष्टा० ७।१।२, वा० ५।

५. उणादयोऽव्युत्पन्नानि प्रातिपदिकानि। अष्टा० ७।१।२, महाभा०।

६. पक्षान्तरैरपि परिहाराः सम्भवन्तीति अव्युत्पत्तिपक्षाश्रयः।
अष्टा० ७।१।२, महाभा०, प्र०।

७. पृषोदरादीनि यथोपदिष्टम्। अष्टा० ६।३।१०९।

८. कर्मण्यण्। अष्टा० ३।२।१। प्रभृतीनि सूत्राण्यत्र मूलम्। (ले०)

९. अष्टा० ७।३।५०।

१०. उणादयो व्युत्पन्नानि प्रातिपदिकानि। ...अथापि उणादयो व्युत्पाद्यन्ते, एवमपि न दोषः।
अष्टा० ७।३।५०, महाभा०।

आक्षेपः पतञ्जलेरपि मनसि अजायत ।[१] केषुचन नामपदेषु व्युत्पत्तिनिमित्त-प्रवृत्तिनिमित्तयोः तादात्म्यमतादात्म्यञ्चाशङ्क्य शब्दार्थसम्बन्धे लोकस्य प्रामाण्यं स्वीकृत्य प्रश्नमिमं समादधौ[२] पतञ्जलिः । लोका येष्वर्थेषु यान् शब्दान् प्रयुञ्जते तेषां शब्दानां त एवाऽर्थाः ।[३] अर्थाऽभिधाने खलु शब्दानां व्युत्पत्तिः न भवति किञ्चिदपि समर्था । भरणक्रियारूपं व्युत्पत्तिनिमित्त-माश्रित्य शाब्दिकैः भ्रातृशब्दो व्युत्पाद्यते ।[४] भरणक्रियासमर्थत्वात् स्वसर्यपि भरणक्रियारूपं व्युत्पत्तिनिमित्तं दृश्यते । परं स्वसृशब्दस्य भ्रातृरूपोऽर्थः कदाचिदभिधेयो न भवति । यतो नहि लोके स्वस्रर्थे भ्रातृशब्दः प्रयुक्तः ।[५] नाऽपि भ्रात्रर्थे स्वसृशब्दः । गमनक्रियायुक्तोऽप्यश्वो गौर्नोच्यते, लोके तथा प्रयोगाभावात् । एवञ्च पाणिनीये सिद्धान्ते सर्वेषां नाम्नाम् आख्यातजत्वेऽपि काचित् क्षतिर्नास्ति । कात्यायनेन शब्दान् नियतविषयकानाधृत्यैषा अव्यवस्था समाहिता ।[६] यथा लोके रक्तो गौरेव लोहित उच्यते, रक्तोऽश्व एव शोणः कथ्यते ।[७] तथैव लोके यस्याऽर्थस्य कृते गोशब्दः स्वीकृतः, स एवार्थः गोपदवाच्यः, न तु अश्वोऽपि लोकस्यैव तत्र प्रामाण्यात् ।

व्युत्पत्तिपक्षवादिना यास्केन रोचकशैल्याऽव्यवस्थेयं समाहिता । अशिक्षितत्वाद् यदि कश्चित् प्रयोक्ता नियतार्थे व्युत्पन्नं शब्दं ततोऽन्यत्राऽर्थे प्रयुङ्क्ते तदा तेन पुरुषज्ञानदौर्बल्यं लक्ष्यते । न तु तेन सिद्धान्तगर्हाऽपि[८] सम्भवति । अतो नामानि आख्यातजानि स्युः रूढानि वेति उक्तरीत्या न कश्चिद्दोषः ।

□

---

१. यदि तावद् बिभर्तीति भ्राता, स्वसर्यपि एतद् भवति । तथा यदि पुनाति पृणाति वा पुत्रः, दुहितर्यपि एतद् भवति । अष्टा० १।२।७०, महाभा० ।

२. दर्शनं वै हेतुः…न हि लोके भ्राताऽऽनीयतामित्युक्ते स्वसाऽऽनीयते ।
अष्टा० १।२।७०, महाभा० ।

३. अनेकार्थ्याऽभिधाने यत्नं कुर्वताऽवश्यं लोकः, पृष्ठतोऽनुगन्तव्यः, केष्वर्थेषु लौकिकाः कान् शब्दान् प्रयुञ्जते । अष्टा० १।२।६४, महाभा० ।

४. बिभर्तीति भ्राता । अष्टा० १।२।७०, महाभा० ।

५. न हि स्वसरि भ्रातृशब्दो दृश्यते ; अष्टा० १।२।७०, महाभा० ।

६. अन्यत्राऽपि तद्विषयदर्शनात् । अष्टा० १।२।७१, वा० ४ ।

७. तद् यथा समाने रक्ते वर्णे गौर्लोहित इति भवति, अश्वः शोण इति ।
अष्टा० १।२।७१, महाभा० ।

८. योऽनन्वितेऽर्थे सञ्चस्कार, स तेन गर्ह्यः, सैषा पुरुषगर्हा । निरु० १।४।४ ।

# शब्दकाण्डेऽष्टमः समुद्देशः

## शब्दानां नित्यत्वम्

शब्दानां नित्यत्वाऽनित्यत्वविचारः परमप्रमोदास्पदं विषयो विद्यते । व्याकरणेन येषां शब्दानां साधुत्वाऽसाधुत्वविनिर्णयः क्रियते तेषां नित्यत्वानित्यत्वविचारोऽपि आवश्यक एव । पाणिनीये तन्त्रे विषयोऽयं पर्याप्तं विचारितो दृश्यते । स्वयमाचार्यः पाणिनिरेव विषयस्याऽस्य निर्देशको विद्यते । ततो व्याडि-कात्यायन-पतञ्जलि-भर्तृहरिप्रभृतिभिः विषयोऽयं सम्यगालोडितः ।

**पाणिनिः**

पाणिनिमते व्याकरणं हि नाम लोके प्रयुक्तानां शब्दानामन्वाऽऽख्यायकं विद्यते । कुम्भकारो यथा घटान् निर्माय प्रयोगार्थं लोकाय ददाति, तथा व्याकरणं शब्दान् नोत्पादयति[1] । लोकतः सिद्धानां शब्दानां साधुत्वमात्रं व्याकरणेन व्यवस्थाप्यते । अतः पाणिनिमते शब्दा व्याकरणनिष्पाद्या न भवन्ति, अपि तु स्वतः सिद्धाः एव । लोपागमवर्णविकारवत्सु पृषोदरप्रकारकेषु शब्देषु प्रकृतिप्रत्ययान् अनुशासितुं सङ्कोचयन्[2] पाणिनिः तेषां नित्यत्वं स्वीकुरुते । 'आपः, दाराः' इत्यादिषु शब्देषु लोकाऽवगमाल्लिङ्गवचननियम इव 'पञ्चालाः' इत्यादिष्वपि सञ्ज्ञाप्रमाणत्वादेव लिङ्गवचननियमो भविष्यत्येवेति तदर्थम् 'लुपि युक्तिवद् व्यक्तिवचने,[3] विशेषणानां चाऽजातेः'[4] चेति सूत्रद्वयकृतो वाचनिको लिङ्गवचननियमः 'तदशिष्यं सञ्ज्ञाप्रमाणत्वात्'[5], इति सूत्रेण प्रत्याख्यातः । लोकव्यवहारपरम्परया प्रवाहनित्यत्वेन शब्दानां नित्य-

१. घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाऽऽह—कुरु घटम्, कार्यम् अनेन करिष्यामीति न तद्वच्छब्दान् प्रयोक्ष्यमाणो वैयाकरणकुलं गत्वाह—कुरु शब्दान्, प्रयोक्ष्ये इति । तावत्येवाऽर्थम् अर्थमुपादाय शब्दान् प्रयुञ्जते । (अष्टा०, महाभा०, पस्प० १)

२. पृषोदरादीनि यथोपदिष्टम् । (अष्टा० ६।३।१०९)

३. अष्टा० १।२।५१ ।

४. अष्टा० १।२।५२ ।

५. अष्टा० १।२।५३ ।

त्वमिति पाणिनेराचार्यस्याऽभिप्रायः ।

**व्याडिः**

दौर्भाग्यमेतत् पाणिनीयस्य तन्त्रस्य यद् व्याडिविरचितो व्याकरणागमस्य सङ्ग्रहनामा महाग्रन्थः प्रणष्टः । लक्षश्लोकसङ्ख्येऽस्मिन्[1] ग्रन्थविशेषे प्रायशः समेऽपि शब्दशास्त्रीया विषया विचारिता इति प्रामाणिका अभिमन्वते । चतुर्दशसहस्राणि वस्तूनि अस्मिन् महाग्रन्थे व्याडिना प्रतिपादितानीति[2] भर्तृहरिः निरदिशत् । सौभाग्यात् पतञ्जलिना सङ्ग्रहनाम्ना व्याडिनाम्ना च कतिपयानि महत्त्वपूर्णानि मतानि स्वकीये अष्टाध्यायीमहाभाष्ये उद्धृतानि । शब्दानां नित्यत्वाऽनित्यत्वविषयकं मतमपि व्याडेः पतञ्जलिना महाभाष्यस्य पस्पशाह्निके समुद्धृतम् । व्याडिना शब्दानां नित्यत्वपक्षे अनित्यत्वपक्षे चाऽपि विचारः प्रदर्शितः । उभयत्राऽपि पक्षे प्रयोजनानि अभिहितानि दोषाश्चाऽपि परिगणिताः[3] । विदुषाञ्च तत्र महद् वैमत्यमवलोक्यते । केचन ध्वनिरेव शब्द इति स्वीकुर्वाणाः ध्वनीनां कार्यत्वेन ध्वन्यतिरिक्तस्य च शब्दत्वेनाऽनुपलम्भत्वेन शब्दा अनित्या इति सङ्गिरन्ते । अपरे आचार्याः ध्वनिव्यङ्ग्यं वर्णव्यतिरिक्तं वाक्यस्फोटलक्षणं नित्यं शब्दमाहुः । नित्यशब्दवादिषु एके पदस्फोटलक्षणं नित्यं शब्दमभ्युपगच्छन्ति । अन्ये च केचन ध्वनिव्यङ्ग्यं नित्यमेव वर्णात्मकं शब्दं व्याचक्षते[4] ।

मध्यमताऽवलम्बी व्याडिरयमाचार्यः शब्दानां नित्यत्वाऽनित्यत्वविचारस्य नैष्फल्यं स्वीकुरुते । शब्दा नित्या स्युरनित्या वा, उभयथा साधुत्वज्ञानाय व्याकरणमावश्यकं विद्यते[5] । तत्र शब्दानां नित्यत्वेनाऽनित्यत्वेन वा किञ्चित् प्रयोजनं नैवाऽवलोक्यते । पतञ्जलिरीत्या व्याडिना सङ्ग्रहग्रन्थे क्वचिदन्यत्र

---

१. सङ्ग्रहो व्याडिकृतो लक्षश्लोकसंख्यो ग्रन्थ इति प्रसिद्धिः ।
अष्टा०, महाभा०, पस्प०, प्र०, उद्द्यो० ।

२. चतुर्दशसहस्राणि वस्तूनि अस्मिन् सङ्ग्रहग्रन्थे । अष्टा०, महाभा०, पस्प०, महाभा०टी० ।

३. सङ्ग्रहे तावत्प्राधान्येन परीक्षितम्, नित्यो वा स्यात् कार्यो वेति । तत्रोक्ता दोषाः प्रयोजनान्यपि उक्तानि । तत्र त्वेष निर्णयो यद्येव नित्यः, अथाऽपि कार्यः, उभयथाऽपि लक्षणं प्रवर्त्यम् । अष्टा०, महाभा०, पस्प० ।

४. केचिद् ध्वनिव्यङ्ग्यं वर्णात्मकं नित्यं शब्दमाहुः । अन्ये वर्णव्यतिरिक्तं पदस्फोटमिच्छन्ति । वाक्यस्फोटमपरे सङ्गिरन्ते । अष्टा०, महाभा०, पस्पशा०, प्र० ।

५. शास्त्रपूर्वात् प्रयोगादभ्युदय इत्युभयथा शास्त्रं प्रवर्त्यमित्येव सङ्ग्रहे निर्णयः ।
अष्टा०, महाभा०, पस्पशा०, महाभा० टी० ।

नित्यार्थे सिद्धशब्द उपात्तः। तेन पतञ्जलिना अवगतं यत् नित्याः शब्दा इति। तथाहि —

'सङ्ग्रहे तावत् कार्यप्रतिद्वन्द्विभावान्मन्यामहे नित्यपर्यायवाचिनो ग्रहणमिति[1]।'

भर्तृहरिः तत्रत्यं सङ्ग्रहग्रन्थपाठं समुद्धृत्य शब्दनित्यत्वानित्यत्वविषयकं व्याडिमतं सम्यक् प्रत्यपादयत्। तद् यथा—

"एवं सङ्ग्रहे एतत्प्रस्तुतम् —'किं कार्यः शब्दः, अथ सिद्धः' इति। कार्यशब्दसन्निधाने प्रयोगात् सिद्धशब्दो नित्यार्थवृत्तिः तथा न। किं तर्हि ? कार्यः न कार्यः सिद्ध इति। कार्यत्वप्रतिषेधात् सिद्धत्वाऽप्रतिषेधाच्च निश्चितं सङ्ग्रहे[2]।"

एतद् व्याडिमतं समीक्ष्य प्रतीयते यच्छब्दा द्वेधा प्रविभक्ताः। १. कार्याः, २. सिद्धाश्च। कार्यशब्दसन्निधाने सिद्धशब्दस्य प्रयोगात् पतञ्जलिः नित्यार्थवृत्तिं सिद्धशब्दं स्वीकुरुते। कण्ठतोऽपि पतञ्जलिना नित्यकार्यभेदेन द्वौ शब्दात्मानौ व्याख्यातौ। 'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य'[3] इति ऋचा व्याकरणाऽध्ययनप्रयोजनं प्रतिपादयन् स 'द्वे शीर्षे' इति पदं शब्दानां नित्यत्व-कार्यत्व-साधकं व्याचष्ट। तद् यथा —'द्वे शीर्षे=द्वौ शब्दात्मानौ-नित्यः कार्यश्च[4]।'

भर्तृहरिरपि उद्धृतं सङ्ग्रहग्रन्थं व्याचक्षाणः प्रकारान्तरेणोक्तं मतं निरदिशत्। सञ्ज्ञाविधौ ये शब्दाः प्रयोक्तृभिः प्रयुज्यन्ते ते कार्यशब्दा भवन्ति। यथा वाहीकस्य गांनाम, एवं देवदत्तादिनामान्यपि कार्यशब्दा एव लाघवार्थं पदैकदेशरूपेण संक्षिप्तरूपेण वा प्रयुज्यमानाः शब्दा अपि कार्यशब्दा विद्यन्ते। यथा — 'अनुराधा' इति प्रयोक्तव्ये 'अनु' इति 'राधा' इति वा, सुनयना इति प्रयोक्तव्ये लोके सुन्नो इति, धनवन्तीति प्रयोक्तव्ये धन्नो इत्येवमादयोऽनुनिष्पादिनः शब्दाः कार्यशब्दाः सन्ति। ये च शब्दाः प्रयोक्तुः पूर्वत एव केषुचनाऽर्थेषु प्रयुक्ता भवन्ति ते खलु सिद्धा शब्दा उच्यन्ते। प्रयोक्तृभिरकार्यत्वाद् लोके च सिद्धत्वादेतादृशाः शब्दाः सिद्धाः स्वीक्रियन्ते। यथा सास्नादिम-

---

१. अष्टा०, महाभा०, पस्पशा०।

२. अष्टा०, महाभा०, पस्पशा०, महाभा०टी०।

३. ऋक्सं० ४।५८।३।

४. अष्टा०, महाभा०, पस्पशा०।

दर्थे प्रयुक्तो गोशब्दः वाहीकार्थे प्रयोगात् प्रागपि लोके परम्परया सिद्धत्वात् सिद्धः शब्दोऽस्ति। एवं सत्यभामा, अनुराधा, सुनयना, धनवन्तीत्येवमादयः शब्दाः, अनुनिष्पादिनां सत्येति भामेत्यादीनां शब्दानां प्रयोगात् प्रागपि सिद्धत्वात् सिद्धाः शब्दा उच्यन्ते। पाणिनीये तन्त्रे एवं भूतानाम् अनुनिष्पादिनां शब्दानां साधुत्वं क्वचिल्लोपद्वारेण[1] क्वचित् पदादेशेन क्वचिदागमकरणेन च व्याख्यायते। वैयाकरणनिकाये व्याडिकृतस्य सम्मानास्पदस्य सङ्ग्रहग्रन्थस्य प्रामाण्यं स्वीक्रियते स्म[2]। अत एवोदारमनाः पतञ्जलिः भर्तृहरिश्च स्वप्रतिपाद्यस्य पुष्ट्यर्थं ससम्मानं व्याडिग्रन्थं समुदाहरत्।

**कात्यायनः**

पाणिनीयसम्प्रदाये वार्तिककारः कात्यायनः पूर्वाचार्याऽपेक्षया शब्दानां नित्यत्वाऽनित्यत्वविषयकं विचारं किञ्चित् सूक्ष्मतया प्रत्यपादीत्। पाणिनिसूत्रेषु उक्ताऽनुक्तदुरुक्तानां चिन्तनात् प्राक् कात्यायन एतत् सुस्पष्टं व्यचारयद् यद् भगवतः पाणिनेः शब्दशास्त्रं कथं प्रवृत्तम्। किं पाणिनेः शब्दशास्त्रानन्तरं शब्दा उत्पन्ना आहोस्विद् लोकव्यवहारे आगतानां शब्दानामनेन शास्त्रेण व्यवस्था क्रियते। किमयमाचार्यः शब्दार्थसम्बन्धानां स्रष्टाऽथवा स्मर्तेति जिज्ञासायाम् 'सिद्धे शब्दार्थसम्बन्धे' इति आदिमेन वार्तिकेन समाहितम्। कात्यायनमते पाणिनेः शास्त्रारम्भात् प्रागेव साधवोऽसाधवश्च शब्दाः सिद्धा आसन्। तेषामर्था अपि निश्चिता आसन् तेषां परस्परं सम्बन्धा अपि अवगता आसन्। एवञ्च निश्चिते ज्ञाते वा शब्दार्थसम्बन्धे पाणिनेराचार्यस्य शास्त्रं प्रवृत्तमिति कात्यायनस्याऽभिप्रायः प्रतीयते।

अत्र उक्तवार्तिके सिद्धपदं प्रयुञ्जानस्य कात्यायनस्य सिद्धपदार्थोऽपि अवगन्तव्यः। यद्यप्यत्र पतञ्जलिः सिद्धशब्दस्य नित्यपदार्थकत्वमनित्यपदार्थकत्वञ्च सन्दिह्य 'व्याख्यानतो विशेषप्रतिपत्तिः न हि सन्देहादलक्षणम्' इति परिभाषया सिद्धपदस्य वाचनिकं नित्यार्थाऽभिधायित्वं व्याचष्ट तथाऽपि उत्तरवार्तिकम् अवलोक्य प्रसङ्गञ्च समीक्ष्याऽत्र ज्ञातार्थे निश्चितार्थे वा सिद्धशब्दः प्रयुक्त इति समीचीनं प्रतीयते। 'सिद्धे शब्दार्थसम्बन्धे' इति वार्तिकस्याऽयमेव प्रस्फुटितोऽर्थः प्रतीयते यत् 'लोके प्रयुक्तान् शब्दान् अभिमतान्

---

१. पाणिनिः लोपद्वारेण एवं भूतानामनुनिष्पादिनां साधुत्वमाचष्टे न तु ज्ये इत्येवमादीनां ज्येष्ठ-ज्ये इत्युच्यते विशाखा च ख इति। भष्टा०, महाभा०. पस्पशा०, महाभा०टी०।

२. सङ्ग्रहोऽप्यस्यैव शास्त्रस्यैकदेशः। तत्रैकतन्त्रत्वाद् व्याडेश्च प्रामाण्याद् इहापि तथैव सिद्धशब्द उपात्तः। भष्टा०, महाभा०, पस्पशा०, महाभा० टी०।

तेषामर्थान् स्वीकृतांश्च तेषां परस्परं सम्बन्धान् निश्चित्यैव पाणिनिराचार्यः शब्दशास्त्रे प्रवृत्तः इति। उक्तस्यैतस्य वार्तिकार्थस्य प्रामाण्यम् उत्तरवार्तिकेन सुस्पष्टं जायते। तथा हि—'लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः।' का०वा० २। (महाभा० पस्प०)

पाणिनिनाऽन्येन वा केनचन वैयाकरणेन नियममात्रं विधीयते यदिमे शब्दाः साधवोऽतः प्रयोक्तव्याः, इमेऽसाधवोऽतो न प्रयोक्तव्या इति। यतः पाणिनिनाऽन्येन वा केनचिद् वैयाकरणेन गवादयः शब्दा न क्रियन्त अपि तु वैयाकरणात् पूर्वतोऽपि लोकप्रसिद्धा भवन्ति अतः शब्दाः सिद्धा उच्यन्ते। पाणिनेः प्रागपि ते शब्दाः ज्ञाता आसन्, तेषामर्थाः, उभयेषां सम्बन्धाश्चाऽप्यवगता आसन्निति निश्चित्य पाणिनिरष्टाध्याय्यां प्रवृत्त इति संलक्ष्य कात्यायनः 'सिद्धे शब्दार्थसम्बन्धे'[1] इति वार्तिकं प्रणिनिनाय। इयमेव च शब्दानां व्यवहाराश्रया नित्यतोच्यते। एवञ्च लौकिकव्यवहाराणामनादिपारम्पर्येण प्रवाहनित्यतया तदभिधायकशब्दानामपि नित्यत्वमिति प्रसाधयितुं पतञ्जलिना सिद्धशब्दस्य नित्यपदार्थकत्वम्[2] औपचारिकत्वेन प्रदर्शितमिति बोध्यम्।

सिद्धं तु नित्यशब्दत्वादिति[3] कात्यायनवाक्यस्य अपि अयमेवाऽर्थोऽभ्युपगम्यः। स्वयं पतञ्जलिराचार्योऽपि तद्वाक्यस्य एवंविधमेवाऽर्थं व्याचष्ट। उद्धृतवार्तिकं व्याचक्षाणः स आह—

'नित्येषु नाम शब्देषु सतोऽदर्शनस्य सञ्ज्ञा क्रियते। न च सञ्ज्ञया अदर्शनं भाव्यते[4]। एवमिहाऽपि एवं वक्तव्यं स्याद् यन्नित्येषु (पारम्पर्येण प्रवाहनित्येषु) नाम शब्देषु प्रयुक्तानां शब्दानां शास्त्रेण अन्वाख्यानं क्रियते) न च शास्त्रेण शब्दा निर्मीयन्ते।

**पतञ्जलिः**

पाणिनीयव्याकरणे प्रथमोऽसौ पतञ्जलिराचार्यो यः पूर्वाचार्यापेक्षया

---

१. अष्टा०, का० वा० १।

२. नित्यपर्यायवाची सिद्धशब्दः।···ननु च भो कार्येष्वपि वर्तते।···व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमिति नित्यपर्यायवाचिनो ग्रहणमिति व्याख्यास्यामः। अष्टा०, महाभा०, पस्पशा०।

३. अष्टा० १।१।६० तथा १।१।१; वा० ९।

४. अष्टा० १।१।६०, महाभा०।
द्र०—अष्टा० १।१।१, १।१।९; महाभा०।

शब्दानां नित्यत्वस्वरूपं सुस्पष्टं प्रास्तावीत् । पतञ्जलिना नित्यत्वलक्षणमपि अभिहितम्, तदनुसारेण च शब्दनित्यत्वं प्रसाधितम् । शब्दविषये सम्भावितां द्विप्रकारिकां नित्यतां महाभाष्ये पतञ्जलिः अचर्चयत् । तथा हि—

१. 'नित्याः शब्दाः । नित्येषु नाम शब्देषु कूटस्थैरविचालिभिः वर्णैः भवितव्यमनपायोपजनविकारिभिः[१] ।'

२. 'अयं खल्वपि नित्यशब्दो नाऽवश्यं कूटस्थेषु अविचालिषु भावेषु वर्तते । किं तर्हि ? आभीक्ष्ण्येऽपि वर्तते । तद्यथा - नित्यप्रहसितः, नित्यप्रजल्पितः इति[२] ।'

निर्दिष्टोद्धरणेन द्विविधं नित्यत्वमायातम्—

१. आभीक्ष्ण्यवृत्तिः नित्यशब्दः ।

२. कूटस्थाऽविचाल्यादिवृत्तिः नित्यशब्दः ।

शब्दशास्त्रे शब्दानां नित्यत्वविषयेऽनयोः कतरं नित्यत्वम् आश्रीयत इति भाषाशास्त्रिणां विचारणीयो विषयो विद्यते । यद्यत्र आभीक्ष्ण्यवृत्तिर्यः नित्यशब्दः, तादृशं नित्यत्वमादाय शब्दानां नित्यत्वं स्वीक्रियते तदा आभीक्ष्ण्येन आगोपालाङ्गणं ये शब्दाः प्रयुज्यन्ते तेष्वेव नित्यत्वं स्यात्तेषाम् एवाऽनुशासनं स्याद् न तु विरलप्रयोगाणामपि । परमत्र विरलप्रयोगाणामपि शब्दानां नित्यत्वमभिमतम्, तेषामन्वाख्यानञ्चाऽपि सम्मतमिति, अत आभीक्ष्ण्यवृत्ति नित्यत्वमत्राश्रयितुं न शक्यते । 'ऊष तेर चक्र पेच' इत्येवमादीनामप्रयुक्तानां[३] शब्दानामपि अनुशासनलाभाय पतञ्जलिः 'प्रयोगान्यत्वात्,[४] दीर्घसत्रवत्त्वात्,[५] देशान्तरे[६] प्रयुज्यमानाच्चे'त्येवमादीन् हेतूनुपास्थापयत् । यदि आभीक्ष्ण्यवृत्ति-नित्यत्वलक्षणेन शब्दानां सिद्धता स्वीक्रियेत तदा एवंविधानां विरलप्रयोगाणामनुशासनं न सम्भवेत् ।

परिशेषाद् द्वितीयं कूटस्थादिलक्षणं नित्यत्वमत्र गृहीतुं शक्यते । एतेन नित्यत्वलक्षणेन अनित्यत्वप्रतिषेधाच्छब्दानां नित्यत्वं विज्ञायते । त्रिविधा

---

१. अष्टा०, प्रत्या० सू० १, महाभा० ।
द्र०—अष्टा० ११११४६, १११५६, ८११४, ८१२१ १०६, महाभा० ।

२. अष्टा०, महा०, पस्पशा० । द्र०—अष्टा० ८११४, महाभा० ।

३. अस्त्यप्रयुक्तः । सन्ति वै शब्दा अप्रयुक्ताः । अष्टा०, महाभा०, पस्पशा० ।

४. अप्रयोगः प्रयोगान्यत्वात् । अष्टा०, वा० ३, महाभा०, पस्पशा० ।

५. अप्रयुक्ते दीर्घसत्त्रवत् । अष्टा०, वा० ४, महाभा०, पस्पशा० ।

६. सर्वे देशान्तरे । अष्टा०, वा० ५, महाभा०, पस्पशा० ।

नाम भवति अनित्यता—१. संसर्गाऽनित्यता।
२. परिणामाऽनित्यता।
३. प्रध्वंसाऽनित्यता चेति।

एतत्त्रिविधाया अनित्यतायाः परिहारपुरःसरं पतञ्जलिः नित्यतां लक्षयितुं व्याचष्ट—

नित्येषु नाम शब्देषु कूटस्थैरविचालिभिः वर्णैः भवितव्यम् अनपायोपजन-विकारिभिरिति।

तत्र **कूटस्थैरिति** विशेषणेन संसर्गाऽनित्यता व्यावृत्ता भवति। संसर्गाऽनित्यता हि यथा—दर्पणस्य मुखादिप्रतिबिम्बोपधाने स्वरूपतिरोधानेन पररूपस्य मुखादेः प्रतिभासः। उपधानाऽपगमने स्वरूपोपलब्धिर्भवति। नित्यत्व-लक्षणे **विचालिभिरिति** विशेषणेन परिणामाऽनित्यता परिहृता भवति। परिणामाऽनित्यता यथा आम्रादिफलस्य श्यामतातिरोभावे लौहित्यादेराविर्भावो जायते। **अनपायादिविशेषणेन** प्रध्वंसानित्यतायाः परिहारः क्रियते। प्रध्वंसाऽनित्यता यथा—कस्यचन वस्तुनः सर्वात्मना विनाशः।

शब्देष्वेतस्याः त्रिविधाया अप्यनित्यताया व्यावर्तनाच्छब्दा नित्याः स्वीक्रियन्ते। शब्देषु अभिधानसामर्थ्यलक्षणस्य सम्बन्धस्य सर्वदोपलम्भात् तत्र संसर्गाऽनित्यता नाऽस्ति। ध्वनिषु परिणामाऽनित्यत्वस्य दर्शनादपि स्फोटतत्त्वस्य शब्दत्वस्वीकारात्तत्र परिणामाऽनित्यता नाऽस्ति। गौरिति प्रयोक्तव्ये कैश्चिद् गाव्याद्यपि प्रयुज्यते तथाऽपि सास्नादिमदर्थाऽभिव्यक्तये प्रयुक्तेषु ध्वनिग्रामेषु स्फोटलक्षणं शब्दतत्त्वमेकमेव सन्तिष्ठते। तदेव स्फोटतत्त्वमात्माऽभिव्यक्तये ध्वनिग्रामान् प्रयोजयति। शब्दतत्त्वस्य सर्वात्मना विनाशाभावात्तत्र प्रध्वंसाऽनित्यताऽपि नाऽस्ति। एतत् संल्लक्ष्यैव पतञ्जलिः शब्देषु कूटस्थादिलक्षणं नित्यत्वं व्याचष्ट।

अत्रेदमवधेयम्–पतञ्जलिना प्रदर्शिते नित्यशब्दस्य पदार्थद्वये नित्यशब्दस्य एको मुख्योऽर्थः, अपरश्च गौणोऽर्थः। कूटस्थाऽविचालित्वादिलक्षणो नित्य-शब्दस्य मुख्योऽर्थः। आभीक्ष्ण्यं तु नित्यशब्दस्य गौणोऽर्थः, क्रियापदप्रयोग-समधिगम्यत्वात्। आभीक्ष्ण्यं हि नाम पुनः पुनः क्रियाया उत्पत्तिर्भवति। अविच्छेदेनोपलब्धिसामान्यमाश्रित्य आभीक्ष्ण्याऽर्थे नित्यशब्दः प्रयुज्यते। यथा—जीवति जीवति इत्युक्ते जीवत्येवाऽयमिति प्रतीयते न तु जीवनस्यावृत्ति-र्गम्यते। न हि कश्चिज् जीवित्वा म्रियते, मृत्वा वा जीवति। क्रियासातत्य-मेव गम्यते, न तु क्रियावृत्तिः क्रियाविच्छेदो वा। सति क्रियाविच्छेदे तु

क्रियावृत्तिः गम्यते । यथा—भुक्त्वा व्रजति इत्यत्र सत्यपि व्रजिक्रियाविच्छेदे पुनर्भुङ्क्ते पुनर्व्रजतीति क्रियावृत्तिः प्रतीयते । क्रियाविच्छेदे क्रियावृत्तौ च नित्यत्वव्यवहारो न भवति[1] । महाभाष्ये पतञ्जलिना नित्यशब्दस्य विषयोपलक्षणार्थमेव 'आभीक्ष्ण्येऽपि वर्तते[2] (नित्यशब्दः)' इत्यभिहितम् । एवं सति आभीक्ष्ण्यविषयो यो नित्यशब्दो वर्तते तस्याऽपि कूटस्थादिष्वर्थेषु प्रवृत्तिः स्यादिति पतञ्जलेरभिप्रायो बोध्यः । यत्र च प्रयोक्ता प्राधान्येनाऽनुपरमं करोति आहोस्वित् प्रयोक्तृभिः येषामुत्पादविनाशौ नोपलक्ष्येते ते खलु नित्याः शब्दा इति पतञ्जलेराचार्यस्याशयः ।

नित्यत्वलक्षणे कूटस्थैरित्येतावत्येवोच्यमाने तस्य राशेरपि नित्यत्वमापद्येत यस्माद् व्ययो न क्रियते । तस्य राशेरेकत्र स्थितत्वेन कूटस्थलक्षणत्वात् । लोके उच्यते चाऽपि—'कूटस्थोऽयं राशिः' यस्माद् व्ययो न कृतः । अविचालिभिरित्येतावत्येवोच्यमाने क्रियारहितस्य द्रव्यस्याऽपि नित्यत्वापत्तिः स्यात् । उभयोरुपादाने हि उत्पादविनाशरहिता येऽर्थाः ते नित्या इत्यवगतं भवति । ध्वनीनां विचालित्वेऽपि स्थिरस्वभावः स्फोटः स्वरूपान्न विचलतीति स्फोटलक्षणाः शब्दा नित्या उच्यन्ते[3] । तात्त्विकदृष्ट्या स्फोटस्यैव शब्दत्वस्वीकारात् । एतत् समं संल्लक्ष्य भर्तृहरिः वाक्यपदीये इदमित्थन्तया प्राह—

नित्याः शब्दार्थसम्बन्धाः तत्राम्नाता महर्षिभिः ।
सूत्राणामनुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः ।।[4]

अत्राऽयमस्माकमभिप्रायः—उत्पादविनाशित्वेन ध्वनीनां कूटस्थत्वाभावाद् ह्रस्वादिभेदेन च विचालित्वाद् ध्वनिषु नित्यत्वं नोपपद्यते । शब्देषु नित्यत्वव्यवहारः शाब्दिकानामभिमतः । स एवं प्रतिपाद्यते । प्रवृत्तिनिमित्तभेदाच्छब्दानां चातुर्विध्यं प्रतिज्ञायते[5]—१. जातिशब्दाः, २ गुणशब्दाः, ३. क्रियाशब्दाः, ४. यदृच्छाशब्दाश्चेति । 'गामानय, गां बधान' इत्याद्युक्तेन जनाः सास्नालाङ्गूलादिमदर्थरूपं प्रवृत्तिनिमित्तमाधृत्य आनयनादिकर्मणि

१. नित्यता क्रियाया अविच्छेदः । अष्टा० ८।१।१२, महाभा०, प्र० ।
२. अष्टा० ८।१।४, महाभा० तथा महाभा० पस्पशा० ।
३. तत्र नित्यः शब्दः जातिस्फोटलक्षणो व्यक्तिस्फोटलक्षणो वा ।
अष्टा०, महाभा०, पस्पशा०, प्र० ।
४. वा० प० १।२३ ।
५. चतुष्टयी शब्दानां प्रवृत्तिः । जातिशब्दाः, गुणशब्दाः, क्रियाशब्दा यदृच्छाशब्दाश्चतुर्थाः ।
अष्टा०, प्रत्या० सू० २, महाभा० ।

प्रवर्तन्ते । प्रवृत्तिनिमित्तचतुष्टयस्याऽभिव्यक्तये प्रयुक्तानां ध्वनिसङ्घातानामनित्यत्वेऽपि, तेषां प्रचयापचयरूपत्वेऽपि प्रवृत्तिनिमित्तप्रयोजकस्य स्फोटस्य कूटस्थत्वेनाऽविचालित्वेन च स्फोटलक्षणेषु शब्दतत्त्वेषु नित्यत्वव्यवहारः सम्पद्यते । यथा - अवयवानां विचालित्वेऽपि अवयविस्वभावा पृथिवी स्वरूपान्न चलतीति नित्योच्यते तथा शब्देष्वपि बोध्यम् । एतादृशमेव शब्दगतं नित्यत्वमभिमत्य व्यासो मुनिः सर्वप्रवृत्तिमूलिकां वाचं नित्यां व्याचष्ट । तथाहि —

अनादि निधना नित्या वागुत्सृष्टा स्वयम्भुवा[1] ।
वेदशब्देभ्य एवादौ निर्मिमीते स ईश्वरः[2] ॥···

भर्तृहरिणा द्विविधा नित्यता चर्चिता — १. परमार्थाश्रया नित्यता, २. व्यवहाराश्रया नित्यता च[3] । तत्र परमार्थाश्रया नित्यता परमाणुषु आकाशादिषु च[4] वैशेषिकादिभिः प्रतिपाद्यते । व्यवहाराश्रया नित्यता हि वस्तुतत्त्वकथने भवति । यथा—आयुर्वेदग्रन्थेषु नागरादिक्वाथो नागरादिकल्को वा आमपाचनो भवतीति[5] निरूप्यते । न हि कस्यचन भिषजां वचनबलात्तत्र नागरादिषु आमपाचनत्वं प्रादुर्भवति । अपि तु तत्र स्वभावत एव आमपाचनसामर्थ्यं विद्यते । पतञ्जलिना[6] भास्करेण[7] न्यूटनेन च प्रतिपादिता पृथिव्यामाकर्षणशक्तिः व्यवहाराश्रयाया नित्यताया एवोदाहरणम् । न तत्र पृथिव्यां तेषां वचनबलादाकर्षणसामर्थ्यमायाति । अपितु स्वभावत एव तत्राकर्षण-

---

१. महाभार०, शां० प० ३३२।२४ ।

२. महाभार० शां० प० २३२।२६ ।

३. नित्यता चाऽपि द्विविधा, व्यवहाराश्रया, परमार्थाश्रया च ।
अष्टा०, महाभा०, पस्पशा०, महाभा० टी० ।

४. परमार्थाश्रया वैशेषिकदर्शनेन परमाणव आकाशादीनि च ।
अष्टा०, महाभा०, पस्पशा०, महाभा०टी० ।

५. नागरातिविषामुस्तक्वाथः स्यादामपाचनः ।
मुस्तान्तकल्कः पथ्या वा नागरं चोष्णवारिणा ॥
चरकसं०, ग्रहणीदोषचिकित्सा १५।९८ ।

६. लोष्ठः क्षिप्तो बाहुवेगं गत्वा नैव तिर्यग्गच्छति । नोर्ध्वमारोहति पृथिवीविकारः पृथिवीमेव गच्छति आन्तर्यतः ।
अष्टा० १।१।५०, महाभा० ।

७. आकृष्टशक्तिश्च तया मही यत् खस्थं गुरु स्वाभिमुखं स्वशक्त्या, आकृष्यते तत्पततीव भाति समे समन्तात् क्व पतत्वियं खे । सिद्धा०, शि० । गोलाध्यायः । भुवनकोशः ६ ।

शक्तिः सन्तिष्ठते । न्यूटनस्य[1] गवेषणाबलेन तत्त्वस्मरणमात्रमेव तेषां वैशिष्ट्यं प्रणिगद्यते ।

शब्देष्वपि इयमेव व्यवहाराश्रया नित्यता विद्यत इति भर्तृहरिणा[2] प्रत्यपादि । पाणिनिनाऽन्येन वा केनचिच्छाब्दिकेन स्वतोऽर्थप्रत्यायका शब्दाः स्मृता एव, न तु ते निर्मितास्तैः, आहोस्वित्तत्र नित्यत्वमुद्भावितम् । सिद्धपदं प्रयुञ्जानस्य व्याडेः कात्यायनस्य च शब्दानां व्यवहाराश्रया एव नित्यताऽभिप्रेता । यो गोशब्दो निष्पन्नः, यो निष्पाद्यमानः, यश्च निष्पत्स्यमानो गोशब्दः, ते सर्वे एव सिद्धाः शब्दाः । आकाशे[3] च शब्दानां निष्पन्नता निष्पद्यमानता, निष्पत्स्यमानता चाऽपि शब्दानां सिद्धता एव । अत एव पतञ्जलिः वार्तिकस्थं सिद्धपदम् अत्यन्तसिद्धार्थकं व्याचष्ट । तथा हि—

'पूर्वपदलोपोऽत्र द्रष्टव्यः । अत्यन्तसिद्धः सिद्ध इति । देवदत्तः, दत्त इति, सत्यभामा भामेति'[4] ।

व्यक्त्याकृतिभेदेनाऽपि शब्दतत्त्वस्य नित्यत्वमाचार्यैः प्रतिपाद्यते । यथा व्यक्त्याकृतिभेदेन वस्तु द्वेधाऽवस्थितं तथा शब्दोऽपि स्मर्यते । यथा सास्नादयो गोत्वस्याऽभिव्यञ्जकाः सन्ति तथा अयुगपत्कालाः क्रमजन्मानो नादाऽनु-

---

१. The law discovered by Newton is as follows—Every particle in the universe attracts every other particle with a force which is directly proportional to the product of the masses of the particles and inversely proportional to the square of the distance between them.

(An Introduction to the theory of Newtonian Attraction/ Chapter II, p. 20)

—(न्यूटनमताऽनुसारेण प्रत्येकं द्रव्यकणो परं द्रव्यकणमाकर्षणबलेनाकर्षति । तस्याकर्षणबलस्य मात्रा चैवं निर्धार्यते—यदि द्रव्यकणद्वयस्य द्रव्यमात्रा मा१ मा२ तुल्याऽस्ति, दूरतुल्यञ्च तन्मध्यवर्ति दीर्घं, तदाकर्षणबलम्—

$$= \text{आ} \frac{\text{मा१ मा२}}{\text{दू२}} = \text{अत्र आ} = \text{आकर्षणस्थिराङ्कः ।)}$$

अनेन बलेन तौ पिण्डौ परस्परमाकर्षणं कुरुतः । (ले०)

२. एवमिहाऽपि पाणिनिनाऽन्येन वा शब्दा एव स्मृताः स्वतोऽर्थप्रत्यायका इति व्यवहारनित्यतैवोपकारिणी । (अष्टा०, महाभा०, पस्पशा०, महाभा०टी०)

३. आकाशदेशः शब्दः…… । (अष्टा०, प्रत्या० सू० १, महाभा०)

४. अष्टा०, महाभा०, पस्पशा० का० ग्रा० १ ।

गृहीता वृक्षादय शब्दा अक्रमाया सकृन्निर्ग्राह्यायां वृक्षशब्दत्वाकृतेः अभिव्यक्तिहेतवो भवन्ति। वृक्षशब्दत्वेनैव हि शाखिरूपोऽर्थोऽवगम्यते। सा शब्दाकृतिर्नित्या[1] विद्यते। वक्तृभिः श्रोतृभिश्च यथाभ्यासं शब्दाकृतिः नादप्रयोगेण प्रकाश्यते। यस्य प्रयोक्तुः यादृशः संस्कारो गृहीतो भवति स शब्दाकृतेरभिव्यक्तये तादृशं ध्वनिसमुदायं प्रयुङ्क्ते। कैश्चित् कतिभिश्चिदेव वर्णैः शब्दाकृतिरभिव्यज्यते गृह्यते च, कैश्चिच्च ततोऽधिकैः अल्पैर्वा वर्णैः। अत एव प्राणिषु भाषाभेदो दृश्यते। एतदेव तथ्यं पतञ्जलिनाऽनेनोद्धृतेन ग्रन्थेन प्रकाशितम्—

"उभयत स्फोटमात्रं प्रतिनिर्दिश्यते। रश्रुतेर्लश्रुतिः[2]।"

ये च शाब्दिका आकृतिव्यवहारं नाऽभ्युपगच्छन्ति, केवलां शब्दव्यक्तिमेव शाब्दव्यवहारेषु स्वीकुर्वते तेऽपि अनेकव्यक्तिव्यङ्ग्यां नित्यां शब्दव्यक्तिमेव सङ्गिरन्ते।[3]अभिव्यङ्ग्येषु रूपादिषु चक्षुरादय इव नादवृद्धिह्रासाऽनुविधायिनो नियतनादाभिव्यङ्ग्याः श्रोत्राऽनुगृहीता व्यक्तिशब्दा नित्यां शब्दव्यक्तिमभिव्यञ्जन्ति। यथैक आदित्यो नैकेषु कूपादिष्वधिकरणेषु वर्तमानो युगपद् विभिन्नेषु देशेषु उपलभ्यते, एवमयम् अनेकशब्दव्यक्तिव्यङ्ग्यः शब्दात्मापीति तेषामाशयः। क्रमोत्पन्नैः ध्वन्यवयवैः प्रत्यवभासितः एक एव नित्यः शब्दात्मा प्रतिवर्णं प्रतिपद प्रतिवाक्यञ्च प्रकाशते[4] इति एके शब्दशास्त्रिणो मन्वते। वर्णः पदं वाक्यञ्च सर्वं नित्यमेव स्वीकुर्वते[5]।

अपरे भाषाशास्त्रिणः शब्दानां नित्यत्वम् एवं व्याचक्षते यद् यद्यपि अनेकाभिः शब्दव्यक्तिभिः प्रतिव्यवहारं शब्दा उच्चार्यन्ते, उत्पादविनाशिनश्च दृश्यन्ते तथाऽपि शब्दप्रयोगस्य नित्यप्रवृत्तेः पारम्पर्याविच्छेदाद् व्यवहारनित्यत्वेन शब्दानां नित्यत्वम्[6]। यत तेषाम् उत्पत्तौ प्राथम्यं नोपलभ्यते—

नित्यत्वे कृतकत्वे वा तेषामादिर्न विद्यते।
प्राणिनामिव सा चैषा व्यवस्था नित्यतयोच्यते[7]॥

---

१. आकृतिनित्यत्वान्नित्यः शब्दः। वा० प० १।२३, स्वो० वृ०।
२. अष्टा०, प्रत्या०सू० ३, महाभा०।
३. यस्याऽपि शब्दव्यक्तिः तस्याऽपि नित्यः शब्दः।
अष्टा०, महाभा०, पस्पशा०, महाभा०टी०।
४. केचित्तु प्रतिवर्णं प्रतिपदं प्रतिवाक्यञ्च एक एवाऽयं शब्दात्मा क्रमोत्पन्नाऽवयवरूपप्रत्यवभासः प्रकाशते इति मन्यन्ते। वा० प० १।२३, स्वोप० वृ०।
५. वर्णः पदं वाक्यञ्च सर्वं नित्यम्। अष्टा०, महाभा०, पस्पशा०, महाभा०टी०।
६. अपर आहुः। पारम्पर्याविच्छेदान्नित्यप्रवृत्तेः प्रयोक्तृभिः उत्पत्तौ अलब्धप्राथम्या व्यवहारनित्यतया नित्याः शब्दाः इति। वा० प० १।२३, स्वो० वृ०।
७. वा० प० १।२८।

## शब्दकाण्डे नवमः समुद्देशः

### शब्दो गुणो वा द्रव्यं वा

शब्दो गुणो वा द्रव्यं वेति विषये विदुषामैकमत्यं न दृश्यते। केचन शब्दानां गुणत्वं व्याचक्षते, केचिच्च द्रव्यत्वम्। पाणिनीयतन्त्रेऽपि आचार्याणाम् इयं द्वेधा प्रवृत्तिर्विलोक्यते। यद्यपि शब्दस्य गुणत्वे द्रव्यत्वे वा सिद्धे भाषाशास्त्रस्य कश्चित् साक्षादुपकारो न भवति, शब्दानां नित्यत्वाऽनित्यत्वविषये व्याडिना प्रदत्तसमाधानमिव[1] अत्राऽपि वक्तुं शक्यते यच्छब्दो गुणो वा स्याद् द्रव्यं वेत्युभयथाऽपि शास्त्रं प्रवर्त्यमिति, तथाऽपि विषयस्यैतस्य विवादास्पदत्वेन प्रायशोऽर्वाचीनैः शाब्दिकैः विचारितत्वेन चाऽत्राऽपि विचार्य्यते।

शब्दस्य गुणत्वं द्रव्यत्वं वा प्रसाधयितुं प्रागत्रेदं विचारणीयं यद् गुणस्य द्रव्यस्य वा किं स्वरूपं शब्दशास्त्रे पाणिनीयानामाचार्याणामभिप्रेतम्, अन्येषाञ्च शास्त्रकाराणां तत्र किमभिमतमिति। न्यायवैशेषिकाचार्यैः क्रियाश्रयो गुणाश्रयः समवायिकारणञ्च द्रव्यं भवतीति[2] स्वीक्रियते। पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसीति नव द्रव्याणि[3] तैः प्रतिपादितानि। गुणत्वेन च द्रव्यसमवायिकारका रूपरसगन्धस्पर्शशब्दादयश्चतुर्विंशतिसंख्याकाः[4] स्वीकृताः। कापिलतत्त्वशास्त्रे पृथिव्यादीनि पञ्चमहाभूतानि ख्यातानि। तानि च गन्धादितन्मात्रेभ्य[5] उत्पद्यन्ते। गौतमेन पृथिव्यप्तेजोवाय्वाकाशानि इति पञ्चभूतानि[6] प्रतिपादितानि। कापिलतत्त्वशास्त्रे सत्त्वरजस्तमसां साम्यावस्था

---

१. तत्र त्वेष निर्णयो यद्येव नित्योऽथाऽपि कार्यः उभयथाऽपि लक्षणं प्रवर्त्यमिति।
अष्टा०, महाभा०, पस्पशा०।

२. क्रियावद् गुणवत् समवायिकारणमिति द्रव्यलक्षणम्। वै०द० १।१।१५।

३. पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि। वै० द० १।१।४।

४. द्र०—न्या० सि० मुक्ता०। प्रत्य० खं० १, का० ३।४, ५।

५. " तन्मात्रेभ्यः स्थूलभूतानि ...। (सांख्य द० १।६१)

६. पृथिव्यापस्तेजो वायुराकाशमिति भूतानि। न्या० द० १।१।१३।

प्रकृतिरुच्यते[1] तत प्रादुर्भूतादहङ्कारादेव शब्दतन्मात्रमुत्पद्यते[2]। सांख्यदर्शने सत्त्वरजस्तमांस्यपि द्रव्याण्येव विद्यन्ते, न तु वैशेषिकाणामिव गुणाः। 'विज्ञानभिक्षुणा[3] व्यासदेवेन[4] च सत्त्वरजस्तमसां द्रव्यत्वमेव प्रतिपादितम्।

**शब्दशास्त्रीयं गुणस्वरूपम् —**

शब्दशास्त्रिभिरुपवर्णितं गुणस्वरूपमत्र विचार्यते। अनेकार्थाऽभिधायि खलु गुणपदं दृश्यते। अत एव पतञ्जलिना गुणपदस्य बह्वर्थकता[5] चर्चिता —

१. गुणपदस्य सर्वाऽवयवार्थः—द्विगुणा रज्जुस्त्रिगुणा रज्जुरित्यत्र गुणपदं सर्वाऽवयवार्थमस्ति।

२. द्रव्यपदार्थको गुणशब्दः—'धनधान्यसम्पन्नो देशः गुणवानयं देशः' इत्यच्युते। अत्र गुणपदेन धनादिकं विवक्षितम्। तच्च द्रव्यं विद्यते।

३. अप्रधानाऽर्थाऽभिधायि गुणपदम्—'गुणभूता वयमत्र' इति प्रयोगे गुणपदस्य अप्राधान्यमर्थः।

४. आचरणार्थको गुणशब्दः—सम्यगाचारवान् कश्चिद् 'गुणवानयमि'-त्युच्यते। आचरणार्थश्च गम्यते।

५. संस्कारार्थको गुणशब्दः—सुसंस्कृतमन्नं गुणवदिति व्यवह्रियते।

६. पृथिव्यादिषूपलभ्यमाना गन्धादयो गुणपदाऽभिधेयाः[6] सन्तीति ख्याता एव। एवञ्च क्वचिदाश्रयिरूपमर्थमपि गुणपदमभिधत्ते।

७. अभिधेयार्थकोऽपि गुणशब्दो दृश्यते। यथा—पतञ्जलिना 'यस्य गुणस्य निवेशाद् द्रव्ये शब्दनिवेशः[7]।' इति वाक्येऽभिधेयार्थकं[8] गुणपदं प्रयुक्तम्।

तत्राऽप्रधानार्थो यो गुणशब्दः स एवाऽत्र पतञ्जलिनाऽभिप्रेतः। पतञ्जलिमते गुणो द्रव्यमाश्रयते, कालान्तरे तत एव द्रव्यान्निवर्तते, भिन्नजातीयेषु च

---

१. सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः। सां०द० १।६१।
२. ···अहङ्कारात्पञ्चतन्मात्राणि···। सां०द० १।६१।
३. सत्त्वादीनि द्रव्याणि न तु वैशेषिका गुणाः। सांख्यद० १।६१, सां०प्रवचनभा०।
४. सत्त्वादीनि द्रव्याणि, न तानि द्रव्याश्रया गुणाः, तेभ्यो व्यतिरिक्तस्य गुणिनो भावाद् इति वेदितव्यम्। योगद० २।१८, व्यासभा०।
५. गुणशब्दोऽयं बह्वर्थः। अष्टा० ५।१।११९, महाभा०।
६. गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः। न्या०द० १।१।१४।
७. अष्टा०, महाभा० ५।१।११९।
८. गुणस्य शब्देन वाच्यस्याऽवाच्यस्य वा······। अष्टा० ५।१।११९, महाभा० प्र०।

दृश्यते । गुणः क्वचिदुत्पाद्यो भवति । यथा —घटादौ पाकजो रूपादिः, क्वचिच्चानुत्पाद्योऽपि, यथा आकाशादेः महत्त्वादिः । अद्रव्यस्वभावश्चाऽयं गुणः पतञ्जलिना कीर्तितः । तथाहि —

सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाऽक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः[1] ।।

अज्ञातनामा कश्चिदन्य आचार्यो गुणस्वरूपं प्रकारान्तरेण व्याचष्ट स्वाऽभिमतगुणस्वरूपं निरूप्य पतञ्जलिः तन्मतमपि निरदिशत् । तद्रीत्या शुक्लादिको गुणः अन्यद् द्रव्यम् आगच्छति, अन्यच्च जहाति, भिन्नजातीयेषु द्रव्येषु दृष्टः, सर्वलिङ्गाश्रयगतलिङ्गग्राही द्रव्यभिन्नश्च भवति, 'वोतो गुणवचनादि'ति[2] सूत्रं भाषमाणः पतञ्जलिरेतन्मतमित्थं प्रत्यपीपदत् —

अपर आह— "उपेत्यन्यज्जहात्यन्यद् दृष्टो द्रव्यान्तरेष्वपि ।
वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः[3] ।।"

पतञ्जलेरभिमतेनोक्तगुणलक्षणेन जातेः क्रियायाश्च गुणत्वं व्यावृत्तं भवति । कैयटमते जातेरपि गुणत्वम् उपवर्णितं दृश्यते । कैयटः भेदकसामान्यं गुणो भवतीति व्याचष्ट । यथा शुक्लादिभिर्गुणैः कृष्णगवादयो भिद्यन्ते तथा गोत्वादिभिः जातिभिरपि अश्वादयो भिद्यन्ते । एवञ्च पराश्रयो यः कश्चिदपि भेदकः जात्यादिरर्थः, स सर्व इह कैयटस्य गुणत्वेनाऽभिप्रेतः[4] । गुणपदस्याप्राधान्यम् अर्थमादाय कैयटेन एतन्निश्चितमिति प्रतीयते । यतो व्यवहारे द्रव्यस्यैव प्राधान्यं दृश्यते ।

'आकडारादेका संज्ञा'[5] इति सूत्रस्थं 'गुणवचनञ्च' इति कात्यायनवार्त्तिकं व्याचक्षाणो नागेशः अन्यदेव गुणस्वरूपं व्यनक्ति । तद्रीत्या व्याकरणशास्त्रे जाति-सञ्ज्ञाऽव्यय-कृदन्त-तद्धितान्त-समस्त-सर्वनाम-संख्याशब्दाऽतिरिक्तः शब्दः गुणवचनेन गृह्यते[6] ।

---

१. अष्टा०, ४।१।४४, महाभा० ।

२. अष्टा० ४।१।४४ ।

३. अष्टा०, ४।१।४४, महाभा० ।

४. गुणशब्देन यावान् कश्चित् पराश्रयो भेदको जात्यादिरर्थः स सर्व इह गृह्यते ।
अष्टा०, ५।१।११९ महाभा० प्र० ।

५. अष्टा०, १।४।१ ।

६. एवञ्चाऽत्र शास्त्रे गुणवचनशब्देन जातिसञ्ज्ञाऽव्यय-कृदन्त-तद्धितान्त-समस्त-सर्वनाम-संख्या-शब्दाऽतिरिक्तः शब्दो गृह्यते इति बोध्यम् ।
अष्टा० १।१।१, महाभा०, प्र० उद्द्यो० ।

वैयाकरणैरभिमतं गुणस्वरूपं दार्शनिकाभिमताद् गुणस्वरूपाद् भिन्नं विद्यते । दर्शनग्रन्थेषु गुणस्वरूपं तत्त्वदृष्ट्या विविच्यते । व्याकरणे तु गुण-स्वरूपं भाषातत्त्वदृष्ट्या एव सम्भवि । सम्भवव्यभिचाराभ्यां भाषाप्रयोगे विशेषणं प्रयुज्यते । तदेवाऽत्र गुणोऽभिमतः । गुणो विशेषणमिति अनर्थान्तर-मित्यभिप्रायः । 'शृङ्गी गदर्भः' इति न प्रयुज्यते । गर्दभे शृङ्गाऽसम्भवेन शृङ्गित्वगुणाऽयोगात् । 'सास्नादिरहिता गावश्चरन्ति' इत्यपि न प्रयुज्यते, गवां सास्नादिभिरव्यभिचारात् । शाब्दिकदृष्ट्या गुणो व्यावर्तको भवति । यथा रूपादयो द्रव्यमाश्रिताः संसर्गिणो गुणाः स्वीक्रियन्ते तथा अन्योऽपि परा-श्रयः सर्वो भेदको जात्यादिरत्र गुणत्वेनाऽभिमतः । अस्मादेव हेतोः कैयटः शब्दस्याऽपि गुणत्वं प्रत्यपादयत्[1] ।

विशेषणप्रयोगेण गुणगुणिनोः विशेषणविशेष्ययोर्वा प्रचयाऽपचयभावः सञ्जायते । गुणप्रचये गुणिपरिमाणमपचीयते । गुणाऽपचये च गुणिपरिमाणं प्रचीयते । भाषाशास्त्रे स्वाभाविकः खल्वेष नियमः । न ह्ययं कञ्चन वाच-निकमाधारमपेक्षते । अधोऽङ्कितया तालिकयैतत् सौकर्येणाऽवगन्तुं शक्यते—

| गुण-प्रचयापचयौ | गुणः | गुणी | गुणिप्रचयापचयौ |
|---|---|---|---|
| ० | | मनुष्याः | × × × × × × (असंख्या इत्यर्थः) |
| × | भारतीयाः | मनुष्याः | × × × × × (असंख्या इत्यर्थः) |
| × × | शिक्षिता. भारतीयाः | मनुष्याः | × × × (ततो न्यूना इत्यर्थः) |
| × × × | शिक्षिताः शाब्दिकाः भारतीयाः | मनुष्याः | × × ततोऽपि न्यूना इत्यर्थः |
| × × × × | शिक्षितः शाब्दिकः पाणिनिः भारतीयः | मनुष्यः | × (एक एव) |

(तालिकायां प्रयुक्तः × इति सङ्केत यथासंख्यं प्रचयापचययोः द्योतकः)

१. यथा शब्दादयः आश्रिताः संसर्गिणो गुणा एवमन्योऽपि जात्यादिधर्मो गुण इति ।
अष्टा० ५।१।११९, महाभा० प्र० १

निर्दिष्टतालिकायामेतत् प्रदर्शितं यद् गुणानाम् अल्पत्वे गुणिपरिमाणं प्रचीयते। यथाक्रमं गुणानां बहुत्वे च यथाक्रमं गुणिपरिमाणमपचीयते। परिकल्पितचित्रे मनुष्यत्वमात्रगुणाऽवेक्षणाद् गुणिनो मनुष्यस्य परिमाणं प्रचितं प्रदर्शितम्। क्रमशो गुणबाहुल्याच्च गुणिपरिमाणं क्रमशोऽपचितं जातम्। अन्ते च शाब्दिके पाणिनौ मनुष्यत्व-भारतीयत्व-शिक्षितत्व-शाब्दिकत्वानां गुणानां विवक्षया तस्याऽत्यल्पं परिमाणं संदर्शितम्। वैपरीत्येन च प्रदर्शिते तालिकाक्रमे गुणपरिमाणमपचेष्यते, गुणिपरिमाणञ्च प्रचेष्यते[1]।

असम्भवाऽव्यभिचारस्थले तु किञ्चिदपि गुणिपरिमाणं न भवति। यथा—

१. शृङ्गी गर्दभः, (असम्भवः) गुणिपरिमाणं नास्ति।

२. सास्नाहीनो गौरुत्पन्नः, (अव्यभिचारः) गुणपरिमाणं नास्ति।

**शब्दशास्त्रीयं द्रव्यस्वरूपम्** –

भर्तृहरिः स्वकीये वाक्यपदीये द्रव्यस्य वैज्ञानिकं स्वरूपं स्पष्टयामास। भर्तृहरिणा द्रव्यपदस्याऽनेके पर्याया निर्दिष्टाः। आत्मा, वस्तु, स्वभावः, शरीरम्, तत्त्वम् द्रव्यमित्यनर्थान्तरम्[2]। द्रव्यं हि असत्योपाधिभिराकृतिभिराच्छिद्यते। उपाधीनामपगमे च द्रव्यमेव अवशिष्यते[3]। यथा सुवर्णादिद्रव्याणि रुचकाद्याकृतिभिः आच्छिद्यन्ते। अन्ते च सुवर्णादिरेवाऽवशिष्यते। शब्दशास्त्रस्य प्रमाणभूतो व्याख्याता पतञ्जलिरपि अमुमेवाशयं महाभाष्ये सुस्पष्टमाह[4]। स एवाऽत्र भर्तृहरिणाऽनूदितः। गुणसमवेतेषु वस्तुषु गुणेभ्योऽन्यद् यदवशिष्यते तद् द्रव्यमिति पतञ्जलिराचार्यो[5] मनुते। पतञ्जलिमते गुणाऽति-

---

१. षोडश-शताब्दीप्रादुर्भूतेन तर्कशास्त्रिणा रेमस (Ramus) महोदयेन वाच्यधर्मानुदाहर्तुमेतादृशी तालिका संदर्शिता। रेमसवृक्षनाम्ना तां तालिकां विद्वांसो व्यवहरन्ति, पारफीरीत्यपि संजानन्ति।

द्र०—तर्कशास्त्र-निगमन (हिन्द्याम्) पृ० ८७।

आहोस्वित्—(Deductive Logic)

२. आत्मा वस्तु स्वभावश्च शरीरतत्त्वमित्यपि।
द्रव्यमित्यस्य पर्यायाः तच्च नित्यमिति स्मृतम्॥ वा० प०, ३।२।१।

३. सत्यं वस्तु तदाकारैरसत्यैरवधार्यते।
असत्योपाधिभिः शब्दैः सत्यमेवाऽभिधीयते॥ वा० प० ३।२।२।

४. आकृतिरन्या चाऽन्या च भवति, द्रव्यं पुनस्तदेव। आकृत्युपमर्देन द्रव्यमेवाऽवशिष्यते।
अष्टा० महाभा०, पस्पशा०।

५. [illegible]

रिक्तं द्रव्यमनुमानगम्यं भवति। समानोच्छ्रायवति समानपरिमाणवति च लौहकर्पासयोः लौहस्याऽन्यत्तुलाग्रं भवति कर्पासस्य चाऽन्यत्। तत्र वर्ष्म-परिमाणातिरिक्तं यद् विशिष्टं भवति तदेव द्रव्यम्। यस्मिन् वस्तुनि गुणान्त-रेषु प्रादुर्भवत्स्वपि यत् तत्त्वं सुरक्षितं भवति तद्[1] द्रव्यमिति अन्यदपि द्रव्य-लक्षणं पतञ्जलिनाऽभ्युपगतम्। यथा सुवर्णस्य कुण्डलाद्याकृतीनां प्रादुर्भावे-ऽपि सुवर्णत्वं न विहन्यते। कुण्डलाद्युपमर्देन पुनरावृत्त सुवर्णपिण्डः एवाऽव-शिष्यते। गुणसंद्रावो द्रव्यमित्यपि द्रव्यस्वरूपं[2] पतञ्जलिः प्रत्यपादयत्। गुणाश्रयो द्रव्यमिति तदभिप्रायो विद्यते। कैयटः स्वीकुरुते मतमिदम्[3]।

शब्दशास्त्रं हि सर्वशास्त्रोपकारकं भवति। अतोऽत्र नैकः पन्थाः संश्रयितुं शक्यते। शब्दशास्त्रस्य शब्दाऽनुशासनमात्रैकप्रयोजनकत्वेन तदर्थं यत्र यत्र यद्यदभिप्रेतं दृश्यते तत्तदुच्यते तत्र तत्र। यथा गुणस्वरूपनिर्धारणे नैकं मतमाश्रितं तथा द्रव्यस्वरूपनिर्धारणेऽपि प्रतीयते। यतः शब्दशास्त्रं तत्त्वशास्त्रं नास्ति। तत्त्वशास्त्रे एव प्राधान्येन वस्तुलक्षणानि विविच्यन्ते। शब्दशास्त्रे तु उच्चरितशब्दानां साधुत्वाऽसाधुत्वविवेकः क्रियते। द्रव्यस्वरूप-विषये वैमत्यस्येदमेव कारणम्। उक्तैः द्रव्यस्वरूपैः सह पतञ्जलिः गुण-समुदायस्याऽपि द्रव्यत्वं मनुते।[4] पतञ्जलिरीत्या सर्वैः शब्दैः गुणसमुदाया एव अभिधीयन्ते।[5] कैयटमते शाब्दबोधे विशेष्यभूतः सत्त्वभावमापन्नोऽर्थो द्रव्यपदेन[6] विवक्षितः। सत्त्वं हि नाम 'सीदन्ति जातिगुणक्रिया यस्मिन्निति' व्युत्पत्तेः जात्याश्रयो गुणाश्रयः क्रियाश्रयश्च भवति। तदेव च द्रव्यम् यावदिदं वस्तु-जातं तत्पदेन इदं पदेन वा प्राधान्येन उपादीयते तद् द्रव्यमिति स्वोपज्ञकारः स्वीकुरुते। तद्यथा—

'यावदिदं तदिति प्राधान्येनोपादीयते तद् द्रव्यम्।'[7]

शब्दस्य गुणत्वम्—

इतः प्रागस्माभिः गुणपदस्य बह्वर्थकता चर्चिता, पाणिनीयाचार्याऽभिमतं गुणस्वरूपं द्रव्यस्वरूपञ्च प्रतिपादितम्। शब्दः स्वयं गुणोऽस्ति द्रव्यं वाऽस्ति

---

१. यस्य गुणान्तरेष्वपि प्रादुर्भवत्सु तत्त्वं न विहन्यते, तद् द्रव्यम्। अष्टा०, ५।१।११९, महाभा०।

२. गुणसद्रावो द्रव्यम्। अष्टा०, ५।१।११९, महाभा०।

३. गुणानामाश्रयो द्रव्यमित्यर्थः। अष्टा०, ५।१।११९, महाभा० प्र०।

४ द्रव्ये च भवतां कः सम्प्रत्ययः? ...गुणसमुदायो द्रव्यम्। अष्टा०, ४।१।३, महाभा०।

५. सर्वे एव शब्दा गुणसमुदायेषु वर्तन्ते। अष्टा०, ५।१।११५, महाभा०।

६. द्रव्यशब्देन विशेष्यभूतः सत्त्वमापन्नः अर्थ उच्यते। अष्टा० ५।१।११९ महाभा० प्र०।

७. वा० प०, १।६४ स्वोप० टी०।

इति विषये पाणिनीयः सिद्धान्तोऽन्वेष्टव्यः। अत्र विषये आचार्याणां महद् वैमत्यमवलोक्यते। कैश्चिच्छब्दस्य गुणत्वं प्रतिपाद्यते, अन्यैः द्रव्यत्वमनेकैश्च उभयत्वम्। संक्षेपतोऽत्र तन्मतानि उद्ध्रियन्ते।

पतञ्जलिराचार्योऽनेकत्र कण्ठतः शब्दस्य गुणत्वं स्वीकुरुते।

'स्त्रियाम्।'[1] इति सूत्रं भाषमाणः पतञ्जलिः शब्दं गुणं व्याहरति। तद् यथा—'गुणानाम्। केषाम् शब्दस्पर्शरूपरसगन्धानाम्।'[2]

एष एव ग्रन्थ आनुपूर्व्या 'सरूपाणामेकशेष एकविभक्तौ।'[3] इति सूत्रभाष्येऽपि पतञ्जलिना उद्धृतः। तस्य भावः त्वतलौ।[4] इति सूत्रे पतञ्जलिः शब्दं गुणममन्यत।[5] आश्रयगतान् भेदकान् जात्यादिधर्मान् गुणत्वं व्याचक्षाणः कैयटः शब्दं गुणं व्याजहार।[6] यतः शब्दोऽपि संसर्गिणम् आकाशमाश्रितः, यथा जात्यादिधर्मः। 'नित्याः शब्दार्थसम्बन्धाः'[7] इति वाक्यपदीयकारिकां टीकमानस्याऽपि विदुषः शब्दस्य गुणत्वमभिप्रेतं दृश्यते। तत्रैतत् प्रतिपादितं यद् वृक्षशब्दे यथा शब्दत्वाकृतिः वृक्षशब्दत्वाकृतिश्च सन्निष्ठेते तथा गुणत्वस्यापि अविरुद्धः समवायो भवति। तथा हि—

वृक्षशब्देऽपि गुणत्वशब्दत्ववृक्षशब्दत्वादीनामविरुद्धः समवायः।[8] इति।

**शब्दे द्रव्यत्वास्वीकृतिः—**

पतञ्जलिरसावाचार्यो न खलु कण्ठतः शब्दस्य गुणत्वमेव स्वीकुरुते, अपि तु शब्दे द्रव्यत्वं प्रतिषेधत्यपि। 'बहुगुणवतुडति संख्या।'[9] इति सूत्रभाष्ये पतञ्जलिः शब्दे द्रव्यत्वं प्रत्याचष्ट। तथा हि—

'भवेत् द्रव्येष्वेतदेवं स्यात्। शब्दस्तु येन येन विशेषणेनाऽभिसम्बध्यते

१. अष्टा० ४।१।३।
२. अष्टा० ४।१।३, महाभा०।
३. अष्टा० १।२।६४।
४. अष्टा० ५।१।११९।
५. के गुणाः ? शब्दस्पर्शरूपरसगन्धाः गुणाः। अष्टा० ५।१।११९ महाभा०।
६. यथा शब्दादय आश्रिताः संसर्गिणो गुणाः, एवम् अन्योऽपि जात्यादिधर्मो गुण इति।
अष्टा०, ५।१।११९ महाभा० प्र०।
७. वा० प० १।२३।
८. वा० प० १।२३, स्वोप०।
९. अष्टा० १।१।२३।

तस्य तस्य विशेषको भवति ।[1]

भाष्यकारस्याऽत्राऽयमभिप्रायो विद्यते—सर्पणशीलत्वाद् अहिः सर्प इति लोके ख्यातः शाब्दिकैश्च व्युत्पादितः। एवञ्च गोधा अपि सर्पन्तीति सर्पणशीलत्वात् तेऽपि सर्पा इति प्रसिध्येरन्। तच्च न भवति, अन्यत् प्रकृतमनुवर्तनादन्यन्न भवतीति सिद्धान्तस्वीकारात्। सर्पणस्याऽनुवर्तनाद् गोधा सर्पो न भवितुमर्हति। स चाऽयं सिद्धान्तो द्रव्येष्वेव संघटते, न तु शब्देऽपि। शब्दस्तु द्रव्यं नास्ति येन तत्र स सिद्धान्तः समापतेत्। शब्दस्तु अन्यार्थकोऽपि प्रकृतोऽनुवर्तनादन्यार्थको भवति। यथा—अक्षा भज्यन्तां भुज्यन्तामित्यादौ अक्षादिशब्दाः सन्ति। एतद् भाष्यविवेचनया भाष्यकारस्य शब्देषु द्रव्यत्वाऽस्वीकृति. सुस्पष्टं प्रतीयते।

**शब्दो द्रव्यम्—**

शब्दतत्त्वस्याऽन्वेष्टा भर्तृहरिः शब्दे द्रव्यत्वं स्वीकुरुते। तन्मते श्रुतिगोचरीभूतेषु शब्देषु ह्रस्वाद्याकृतिरतात्त्विकी विद्यते। तत्राऽवशिष्टं स्फोटाख्यं शब्दतत्त्वं नित्यम्, तच्च द्रव्यमस्ति।[2] आकृतिसंहारे सति तदेव वाच्यं वाचकञ्च भवति।[3] एतत्सिद्धान्तपोषणाय 'तपरस्तत्कालस्य'[4] इति सूत्रस्थं भाष्यमपि उपयुज्यते। तत्र भाष्ये हि—

'एवं तर्हि स्फोटः शब्दः ध्वनिः शब्दगुणः।' इत्युक्तम्। ध्वनिरूपगुणाश्रयः स्फोटः इति तदाशयः। गुणाश्रयश्च द्रव्यं भवतीति सुतरां शब्दस्य द्रव्यत्वं सिध्यति। यत्र तत्र शब्दस्य गुणत्वं व्याचक्षाणस्य भाष्यकारस्य ध्वनावेव स्यात्तात्पर्यम्।

**शब्दो द्रव्यं गुणश्चाऽपि—**

नागेशभट्टः शब्दे द्रव्यत्वमपि स्वीकुरुते गुणत्वञ्चाऽपि।[5] तन्मते तारत्वमन्दत्वादिरूपगुणाः शब्देषु सन्तिष्ठन्ते। गुणाश्रयश्च द्रव्यं भवति।

---

१. अष्टा० १।१।२३ महाभा०।

२. तेष्वाकारेषु यः शब्दः तथाभूतेषु वर्तते।
तत्त्वात्मकत्वात्तेनाऽपि नित्यमेवाऽभिधीयते॥ वा० प० ३।२।६।

३. सत्यमाकृतिसंहारे यदन्ते व्यवतिष्ठते।
तन्नित्य-शब्दवाच्यं तच्छब्दतत्त्वं न भिद्यते॥ वा० प० ३।२।११।

४. अष्टा० १।१।७०।

५. यद्वा तारत्वादयो गुणाः शब्दनिष्ठाः, तदाश्रयत्वाच्छब्दस्य द्रव्यत्वम्, आकाशरूपद्रव्याश्रितत्वाद् गुणत्वञ्च। (वै० सि० ल० मं०, शक्त्या० नि०)

एवञ्च तारत्वादेराश्रयतया शब्दस्य द्रव्यत्वसिद्धिः। आकाशः शब्दाश्रय इति मन्वते आचार्याः। तन्मतानुसारेण नागेशः शब्दस्य गुणत्वं व्याचष्ट। आकाशस्य द्रव्यत्वेन शब्दस्य गुणत्वं निष्पन्नं भवति। द्रव्याश्रितो नाम गुणो भवति।

**निष्कर्षः —**

शब्दानां गुणत्वद्रव्यत्वयोर्विषयेऽत्रेदं मतमास्थेयम्। यथा सुवर्णतत्त्वात् कुण्डलाद्याकृतयः उपजायन्ते, पुनरावृत्ताः सुवर्णतत्त्वमेवाऽवशिष्यन्ते।[1] तथा स्फोटरूप शब्दतत्त्वाद् ध्वनयः सञ्जायन्ते, आवृत्ताश्च पुनः स्फोटशब्दतत्त्वमेवाऽवशिष्यन्ते। एवञ्च सुवर्णतत्त्वमिव स्फोटशब्दतत्त्वमपि द्रव्यं स्वीकर्तुं शक्यते। किञ्च यस्मिन् शास्त्रे यत् प्राधान्येन प्रतिपाद्यं भवति, यद्यद् वा कर्म येन येन सम्पाद्यते तत्तस्य शास्त्रस्य द्रव्यं[2] भवति। एतदनुसारेणैव तैत्तिरीयप्रातिशाख्ये शब्दाः द्रव्याणि उक्ताः। तथाहि —

'तत्र शब्दद्रव्याणि उदाहरिष्यामः।'[3]

शब्दप्रयोगमाश्रित्य हि शब्दशास्त्रे साधुत्वाऽसाधुत्वयोः व्यवस्था स्वीक्रियते।

बह्वर्थकगुणपदं प्रयुञ्जानस्य पतञ्जलेः शब्दगुणकत्वसाधनं नाऽभिप्रेतम्। 'स्फोटः शब्दः, ध्वनिः शब्दगुणः'[4] इत्यत्र गुणपदमुपकारार्थकं विद्यते। 'ध्वनिः शब्दगुणः' इत्यस्य शब्दोपकारक इत्येवाऽर्थः अभ्युपगन्तव्यः। निरुक्तमिदं भाष्यं टीकमानः कैयटो गुणपदमत्रोपकारार्थकमेव व्याचष्ट।[5] यथा अपक्वमन्नं पाकक्रियया संस्कृतं जायते तथा अव्यक्तस्य स्फोटाख्यस्य शब्दस्य ध्वनिना संस्कारो जायते। एवञ्च शब्दः सिद्धान्तदृष्ट्या तत्त्वमेव विद्यते। तत्र तत्र भाष्ये शब्दस्य गुणत्वकथनं ध्वनितात्पर्येण अन्येषां मतानुवादरूपेण चैवेति बोध्यम्।

इति सरस्वतीदेवीप्रसूतेन पञ्चानन्दतनूभुवाऽऽचार्यनरदेवशास्त्रिणा विरचिते अथ पाणिनीय-शब्दार्थसम्बन्धसिद्धान्त' इत्याख्ये ग्रन्थे प्रथमं शब्दकाण्डं परिसमाप्तम्।

□

---

१. सुवर्णादि यथाभिन्नं स्वैराकारैरपायिभिः।
रुचकाद्यभिधानानां शुद्धमेवैति वाच्यताम् ॥ वा० पा० ३।२।६।

२. यद्यत् कर्म येन येन क्रियते तत्तस्य द्रव्यम्। तैत्ति० प्राति० २।१०।३, पदक्र० भा०।

३. तैत्ति० प्राति०, २।१०।३।

४. अष्टा० १।१।७० महाभा०।

५. शब्दस्य गुणः उपकारो व्यञ्जकत्वेनेत्यर्थः। अष्टा० १।१।७० महाभा० प्र०।

# अथ पाणिनीयशब्दार्थसम्बन्धसिद्धान्तः

## तत्र द्वितीयमर्थकाण्डम्

—अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । —अष्टा० १।२।४५ ।

— सर्वे शब्दाः स्वेनार्थेन भवन्ति, स तेषामर्थः ।

—अष्टा० महाभा० ५।१।११६ ।

—यस्मिंस्तूच्चरिते शब्दे यदा योऽर्थः प्रतीयते ।

तमाहुरर्थं तस्यैव नान्यदर्थस्य लक्षणम ।। —वा० प० २।३२६ ।

**वर्णितविषयाः**

१. अर्थस्वरूपनिरूपणा
२. अर्थावगमहेतवः
३. अर्थविनिश्चितिसाधनानि
४. अर्थभेदाः
५. अर्थविषयिका भाषातात्त्विकी विवेचना
६. अर्थः पौरुषेयः
७. अपभ्रंशादर्थबोधः
८. अर्थपरिवर्तनम् ।

अथ शब्दार्थसम्बन्ध-सिद्धान्ते पाणिनीयके ।
समाप्यतेऽर्थकाण्डं हि समुद्देशेषु चाष्टसु ।।

—प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ।

अष्टा० १।२।५६ ।

—अर्थगत्यर्थः शब्दः प्रयुज्यते ।

अष्टा० महा० २।१।१ ।

—अन्तरेण खल्वपि शब्दप्रयोगं
बहवोऽर्थाः गम्यन्ते, अक्षिनिकोचैः
पाणिविहारैश्च । अष्टा० महा० २।१।१ ।

# अर्थकाण्डे प्रथमः समुद्देशः

## अर्थस्वरूपनिरूपणा

अर्थं सम्प्रत्याययितुं वक्तारः, प्रत्येतुञ्च श्रोतारः शब्देषु सम्प्रवर्तन्ते सततम् अर्थगत्यर्थं हि शब्दं स्वीकुर्वते वैयाकरणाः। अत एव निरर्थकेषु नाम शब्देषु नैव वैयाकरणाः सम्प्रवर्तन्ते। अर्थकाण्डेऽस्मिन् पाणिनीयेऽभिप्रेतमर्थस्वरूपं सम्यक् समुपस्थाप्यते।

**अर्थपदाऽभिधेयाः—**

अनेकेष्वर्थेषु अर्थपदं लौकिकाः प्रयुञ्जते। अमरसिंहेन पञ्चस्वर्थेषु अर्थशब्दः[1] परिगणितः–१. निवृत्तिवचनः, २. धनवचनः, ३. वस्तुवचनः(तत्त्ववचनः) ४. प्रयोजनवचनः, ५. अभिधेयवचनश्च। क्वचित् सामर्थ्यवचनमप्यर्थपदं प्रयुज्यते।

**१. निवृत्तिवचनोऽर्थशब्दः—**

'मशकार्थो धूमः' इत्यत्र मशकनिवृत्तये धूम इत्यभिधातुमिष्यते। अतोऽत्रार्थपदं निवृत्त्यर्थकं विद्यते।

**२. धनवचनः—**

'अर्थिनश्च राजानो हिरण्येन[2] भवन्ती'त्यतो धनकामिनो राजान इति बोधो भवति। अर्थशब्दोऽत्र धनवचनः।

**३. तत्त्ववचनः—**

'रोरवीत्यर्थेनाऽपि नार्थः'[3] इत्यत्र वाक्ये पूर्वेण अर्थपदेन तत्त्वमभिधीयते। रोरवीतीत्येतत्त्वेनाऽपि प्रयोजनाऽभावः प्रतिपाद्यते।

---

१. अर्थोऽभिधेय-रैवस्तु प्रयोजननिवृत्तिषु। अमरको०, ना० व०।
२. अष्टा० १।१।७ महाभा०।
३. अष्टा० १।१।५ महाभा०।

**४. प्रयोजनवचनः—**

'नार्थोऽर्थग्रहणेन'[1] इत्यत्र प्रथममर्थपदं प्रयोजनार्थकं विद्यते । अर्थग्रहणेन किञ्चित् प्रयोजनं नास्तीति प्रतिपाद्यते ।

**५. सामर्थ्यवचनः—**

सामर्थ्यवचनमर्थपदं[2] पतञ्जलिना प्रयुक्तम् । अर्थात् प्रकरणाद्वा लाके 'कृत्रिमाऽकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति' । इत्यत्र अर्थपदेन सामर्थ्यं गम्यते । अर्थात् सामर्थ्यादिति बुध्यते ।

**६. अभिधेयवचनः—**

'ग्रामशब्दोऽयं बह्वर्थः'[3] इत्यतो बह्वभिधेयं हि ग्रामपदम् इति विवक्ष्यते । प्रसिद्धः शब्दाऽभिधेयवचनोऽत्र अर्थशब्दः प्रयुक्तः ।

**अभिप्रेतोऽर्थपदार्थः—**

अत्र भाषाशास्त्रीयाऽर्थगवेषणाप्रसङ्गे शब्दाऽभिधेयवचन एवाऽर्थशब्दो गृह्यते[4] । अर्थशब्दश्च 'अर्यते प्राप्यते असावर्थः' इत्येवं व्युत्पाद्यते[5] । अभिधेयरूपोऽर्थः श्रुतेन शब्देनाऽधिगम्यते । गृहीतशक्तिकः श्रोता वक्त्रा परिकल्पितमर्थं श्रुतेन शब्देनाऽधिगच्छति । यदा चाऽगृहीतशक्तिकः श्रोता भवति तदार्थं नाधिगच्छति । तस्य तु केवलं शब्दश्रवणमात्रं जायते । अतः सङ्केतग्रहं विना अर्थाऽवबोधः खलु असम्भवी एव ।

चतुर्भिः प्रकारैः वक्तॄणां श्रोतॄणाञ्च शब्दानामर्थे प्रवृत्तिः जायते । जात्या, गुणेन, क्रियया, यदृच्छया च जनाः अर्थप्रत्यायनाय शब्दे प्रवर्तन्ते । इमां शब्दप्रवृत्तिमाधृत्य चत्वारो हि शब्दाऽभिधेयाः निश्चीयन्ते १. जातिः, २. गुणः, ३. क्रिया, ४. यदृच्छा (व्यक्तिः, चेति । प्रवृत्तिनिमित्तभेदादेव पतञ्जलिः शब्दानां चातुर्विध्यं प्रत्यपादयत्[6] । एतेषां चतुर्विधानाम् अर्थानां स्वरूपमस्माभिरग्रे सम्यग् वक्ष्यते ।

---

१. अष्टा० १।१।१९ महाभा० ।

२. अर्थः=सामर्थ्यम् । अष्टा० १।१।२३, महाभा०, प्र० ।

३. अष्टा०, १।१।२३, महाभा० ।

४. अभिधेयवचनोऽत्र अर्थशब्दः । अष्टा० १।२।४५, महाभा०, प्र० तथा अष्टा० १।२।४५, का० वृ० ।

५. उषि-कुषि गार्तिभ्यस्थन् । उणादिसू० २।४ ।

६. चतुष्टयी शब्दानां प्रवृत्तिः—जातिशब्दाः, गुणशब्दाः, क्रियाशब्दाः यदृच्छाशब्दाश्चतुर्थाः । अष्टा०, प्रत्या० सू० २, महाभा० ।

अत्रेदमप्यवधेयम्। भाषातत्त्वदृष्ट्या द्विविधं हि अर्थतत्त्वं विभज्यते[1]। १. शब्दार्थः, २. वस्त्वर्थश्च।

व्याकरणतन्त्रे विवेच्यार्थपदेन शब्दार्थ एवाऽभिप्रेतः न तु वस्त्वर्थः। शब्दार्थो हि बौद्धो भवति। बुद्ध्या परिकल्पितम् अर्थमुपादाय शाब्दो व्यवहारः सम्पाद्यते। वस्त्वर्थस्तु बाह्योऽर्थ उच्यते। वस्त्वर्थः स्वरूपे सदैव समवस्थितो भवति। शब्दार्थो हि प्रयोक्तुः प्रतिपत्तुश्च स्वीकृतः समय एव। शब्दार्थ-वस्त्वर्थयोः परस्परं तादात्म्यं स्यादेवेति आवश्यकं नास्ति। असत्यपि वस्त्वर्थे शाब्दः प्रत्ययो जायमानो दृश्यते। बहवश्च वस्त्वर्था स्वल्पशब्दसामर्थ्यादभि-धातुमपि न शक्यन्ते।

यस्य शब्दस्य यादृशमर्थं प्रयोक्ता प्रतिपत्ता च निर्धारयति तस्य शब्दस्य स एवार्थः प्रसिद्धो[2] जायते। व्यवहर्तॄणां परस्परं सांमनस्यमेव शब्दार्थ-स्वीकारे हेतुर्भवति। न तत्र किञ्चिद् अपौरुषेय सामर्थ्यं स्वीकर्तुं शक्यते। वस्तुरूपमर्थमादाय लौकिका व्यवहाराः सम्पाद्यन्ते। शाब्दे व्यवहारे तु शब्दार्थ एवाऽर्थः स्वीक्रियते। वस्त्वर्थः प्रत्यक्षादिप्रमाणैः निश्चीयते, शब्दार्थस्तु अन्वय-व्यतिरेकसहकृतया बुद्ध्या[3] परिज्ञायते।

## अर्थलक्षणम्

अर्थप्रत्यायने शब्दानां स्वाभाविकी योग्यता शब्दतत्त्वविद्भिः स्वीक्रियते। यद्यपि इन्द्रियाणामपि स्वविषयेषु स्वाभाविकी एव अनादिर्योग्यता विद्यते। अनुमितिस्थले हेतोरपि इयमेव स्थितिः जायते। तथापि अर्थप्रत्यायने शब्दैः सह इन्द्रियादीनामस्ति किञ्चित् पार्थक्यम्। शब्दा इव इन्द्रियादयोऽपि स्वा-भाविकयोग्यतयैव वस्त्वर्थरूपे बाह्यार्थे प्रत्यायनाय प्रवर्तन्ते, पुनरपि इन्द्रियादयो ज्ञानोत्पत्तौ साधनमात्रतयैव प्रवृत्ता दृश्यन्ते। नैव ते कदाचिज् ज्ञानाङ्गतया समुत्पन्ने ज्ञाने प्रविलीयन्ते। समुत्पन्नाज्ज्ञानात्तेषां ताटस्थ्यं पार्थक्य वा सुस्पष्टं द्रष्टुं शक्यते। इन्द्रियाणि सर्वथा आत्मानम् अप्रकटयन्ति एव ज्ञानं जनयन्ति। शब्देषु तु अस्मात् सर्वथा वैलक्षण्यं दृश्यते। इन्द्रियमिव लिङ्गमिव वा शब्दो नैव अर्थप्रतीतौ केवलं जनकतामात्रेण अभिसम्बन्धमेवानुभवति, अपि तु तत्र बौद्धार्थः शब्द्यमानः ध्वनिरूपशब्दमय इवाभाति। अभिधेयार्थ-

१. इह व्याकरणे न वस्त्वर्थोऽर्थः, अपि तु शब्दार्थोऽर्थः। वा० प०, ३।८।१, हेला०।

२. प्रयोक्तैवाऽभिसन्धत्ते साध्यसाधनरूपताम्।
अर्थस्य वाऽभिसम्बन्धकल्पनां प्रसमीहते॥ वा० प०, ३।१४।१९।

३. अन्वयव्यतिरेकाभ्यामर्थवान् परिकल्पितः। वा० प०, २।४२६।

बोधनात् पूर्वं शब्द आत्मानमभिव्यनक्ति । प्रतिभास्फोटनात् पूर्वं श्रोता शब्दस्वरूपं गृह्णाति । ततः वक्तुः परिकल्पितं बौद्धमर्थमधिगच्छति । अर्थप्रत्यायने नैव क्वचिच्छब्दः तटस्थो दृष्टः । अभिधेयार्थेन सह शब्द एकरूपो जायते । कम्बुग्रीवादिमदर्थं प्रत्याययितुं प्रवृत्तस्य प्रवक्तुः 'घटः शब्दः, घटश्चार्थः, घटरूपश्चैव सम्प्रत्ययो' भवति । इत्येवं श्रोतरि शब्दार्थसम्प्रत्ययानाम् इतरेतराध्याससाङ्कर्यं दृश्यते ।

पाणिनिमते व्यक्तायां वाचि त्रिप्रकारकाः स्वरूपवन्तः शब्दा अर्थवन्तो भवन्ति—१. धातवः, २. प्रत्ययाः, ३ प्रातिपदिकानि च । यद्यपि अर्थविषये पाणिनिना कियन्त एव स्वकीया महत्त्वपूर्णाः सिद्धान्ताः प्रदर्शितास्तथापि प्रत्यक्षतः क्वचिदर्थलक्षणं नाऽभिहितम् । लोकात् सिद्धं शब्दार्थसम्बन्धं विनिश्चित्य पाणिनिः शब्दशास्त्रं प्रणिनाय । परं तदुत्तरवर्तिन आचार्याः कात्यायनपतञ्जलिभर्तृहरिप्रभृतयः सुव्यवस्थितम् अर्थलक्षणमभ्यदधुः । महदस्ति प्रमोदास्पदमेतद् यद् उक्ताचार्यत्रयाणामपि अर्थलक्षणं समानार्थकमेव विद्यते ।

'तस्य भावस्त्वतलौ'[1], इति पाणिनीयसूत्रे कात्यायनः अर्थमित्थमलक्षयत् —
'सर्वे भावाः स्वेन भावेन भवन्ति स तेषां भावः[2] ।'

कात्यायनीयमिदमर्थलक्षणं व्याचक्षाणः पतञ्जलिरेतदेव शब्दान्तरेणाभ्यधात् । उक्तवार्तिके प्रथमेन भावपदेन शब्दो विवक्ष्यते उत्तरेण भावपदद्वयेन अर्थोऽभिप्रेतः । अत एव पतञ्जलिः 'सर्वे शब्दाः स्वेनार्थेन भवन्ति स तेषामर्थः'[3] इत्येवम् अर्थं पर्यभाषत । आचार्यद्वयमते सर्वे शब्दाः कस्यचन प्रवृत्तिविशेषस्याभिव्यक्तये उच्चार्यन्ते । स प्रवृत्तिविशेष एव तेषामर्थो भवति । प्रयोक्ता पूर्वं प्रत्यक्षादिभिः प्रमेयेषु प्रवर्तते । ततः तदभिव्यङ्क्तुमनसः तस्य वस्तुरूपा गुणरूपा क्रियारूपा वा प्रवृत्तिः प्रजायते । उच्चारितेन शब्देन सा प्रवृत्तिः अभिव्यज्यते । श्रोत्रा अवगता सा प्रवृत्तिरेव शब्दार्थो भवति । कम्बुग्रीवादिमत्प्रवृत्तिविशेषमाश्रित्य तदभिव्यक्तये घटशब्दः उच्चार्यते । स वस्तुविशेष एव घटशब्दस्यार्थो जायते । कदाचित् कदाचिच्च अनेकेषां प्रवृत्तिविशेषाणामभिव्यञ्जक एक एव शब्दः स्वीक्रियते । अत एवाऽनेकार्थकाः शब्दा जायन्ते । कदाचिच्च एकस्यै एव प्रवृत्त्यै अनेके शब्दाः स्वीक्रियन्ते ।

**भर्तृहरेरभिमतमर्थलक्षणम् —**

भर्तृहरिः प्रकारान्तरेणार्थलक्षणं प्रास्तावीत् । शब्दश्रवणोत्तरकालं यमर्थं

१. अष्टा० ५।१।११९।
२. अष्टा०, ५।१।११९, का वा० ६।
३. अष्टा० ४।१।११९, महाभा० ।

प्रत्येति तस्य शब्दस्य स एवाऽर्थ इति भर्तृहरिरर्थलक्षणमित्थं प्रत्यपादयत्—

'यस्मिन् तूच्चरिते शब्दे यदा योऽर्थः प्रतीयते ।
तमाहुरर्थं तस्यैव नान्यदर्थस्य लक्षणम्[1] ॥'

सामान्यतो लोके एतादृशमेवार्थस्वरूपं स्वीक्रियते । अनेनार्थलक्षणेनाऽनेकदा प्रयोक्तुरभिप्रायोऽपि विहन्यते । प्रमादादिदोषाद् उच्चारिताच्छब्दादभिप्रायोऽन्यथाऽपि प्रतीयते । अत एव शास्त्रेषु विदुषां विवादो दृश्यते । स्वं स्वमभिप्रेतार्थं कामयमानो जनः प्रयोक्तुः अभिप्रायं प्रायो न विचिन्तयति । एक एव मन्त्रः केनचित् कथञ्चिद् व्याख्यातः, अपरेण ततोऽन्यथा, अन्येन च ततोऽप्यन्यथा ।

कात्यायनपतञ्जलिभ्यां कृतेऽर्थलक्षणे भर्तृहरिणा च कृतेर्थलक्षणे एको मौलिको भेदो विद्यते । कात्यायनपतञ्जली यत्र प्रयोक्तुः प्रवृत्तिनिमित्तविशेषं शब्दस्यार्थं व्याचक्षाते, तत्र भर्तृहरिः शब्दश्रवणोत्तरं श्रोतुः प्रतीतिविशेषं शब्दस्याऽर्थं लक्षयति । यद्यपि सामान्यत उभयोरर्थलक्षणयोः कश्चित् साक्षाद् विरोधो नाऽवलोक्यते, तथापि श्रोतुः भ्रान्तत्वे स भेदः सुस्पष्टं दृश्यते । सास्नालाङ्गूलककुदखुरविषाणिरूपप्रवृत्तिनिमित्तविशेषाऽभिव्यक्तये वक्त्रा गोशब्दे उच्चारिते, भ्रमाच्च श्रोत्रा तदतिरिक्तेऽर्थे गृहीते, भर्तृहरिमते श्रोत्रा गृहीतो वस्तुविशेष एव तस्य शब्दस्याऽर्थो भविष्यति । कात्यायनपतञ्जल्योः मते तु वक्त्राऽभिप्रेत एवार्थः शब्दस्याऽर्थो भविष्यति ।

श्लोकवार्तिकस्य वाक्याधिकरणे कुमारिलभट्टेन अर्थस्वरूपं विचारितम् । तदनुसारेण योऽर्थो येन शब्देन सह वाच्यरूपमन्वयसामर्थ्यमाधत्ते स तस्य शब्दस्याऽर्थो भवति[2] । कुमारिलमते शब्दार्थयोः सम्बन्धनित्यत्वञ्चाऽपि सन्तिष्ठते । जयन्तश्चाऽपि न्यायमञ्जर्यां प्रकारद्वयेनाऽर्थमलक्षयत् । तत्राद्यम्—'यस्मिन्नर्थे यस्य शब्दस्य सङ्केतो वृद्धैः व्यवहृतः, स तस्य शब्दस्य अर्थो विद्यते ।' कम्बुग्रीवादिमदर्थे घटशब्दस्य सङ्केतो वृद्धैरनादिकालाद् व्यवहृतः, अतो घटशब्दस्य स एवाऽर्थः स्वीक्रियते । अपरञ्च व्यावहारिकमर्थलक्षणं भर्तृहरिकृतं जयन्तेनाऽनूदितम्—'येन शब्देन योऽर्थः प्रतीयते स तस्य शब्दस्यार्थ इति[3] ।'

---

१. वा० प० २।३२६ ।

२. तत्र योऽन्वेति यं शब्दमर्थस्तस्य भवेदसौ ।
अन्यथाऽनुपपत्त्या हि शक्तिस्तत्राऽवतिष्ठते ॥ श्लो० वा०, वाक्याधि० १६० ।

३. अयमस्य पदस्यार्थं इति केचित् स तेन वा ।
योऽर्थः प्रतीयते यस्मात् स तस्यार्थं इति स्मृतः ॥ न्या० मं०, पृ० २९९ ।

वक्तुः प्रवृत्तिविशेषः श्रोतुश्च प्रतीतिविशेषः प्रायोऽस्थिर एव भवति। अत एव कस्यचिदपि शब्दस्यार्थः कूटस्थो न दृश्यते। प्रचयाऽपचयशीलं हि अर्थतत्त्वं परिदृश्यते। कदाचित् कस्मिंश्चिच्छब्दे कश्चिदर्थः प्रचीयते, कालान्तरे च सोऽर्थः तस्मादपचीयते। वीणावादननैपुण्यार्थाभिधायिनः प्रवीण-शब्दस्य कौशलमात्रं प्रवृत्तिनिमित्तमवशिष्टमद्यत्वे। कुशलादिशब्देष्वपि एतादृशी एव गतिः। अर्थपरिवर्तनप्रकरणेऽस्माभिरेतत् सम्यङ् निरूपयिष्यते।

लौकिके व्यवहारे प्रायो द्विविधमपि निरुक्तम् अर्थलक्षणं सङ्गतं दृश्यते। क्वचिच्छब्दार्थनिर्धारणायां वक्तुरभिप्रायः आवश्यकत्वेनाऽङ्गीक्रियते, क्वचिच्च तस्याऽऽवश्यकत्वं नाऽनुभूयते। स्वयं पतञ्जलिरप्यन्यत्र श्रोतुः प्रतीति-विशेषमर्थं व्याचष्ट[1]। 'येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः'[2] इति अनुशासनीयशब्दं परिभाषमाणस्य पतञ्जलेः 'श्रोतुः प्रतीतिविशेष एव शब्दस्यार्थ' इत्यभिप्रायो विद्यते। अत उभयविध-स्याऽपि अर्थलक्षणस्य प्रामाण्यमेवेति बोध्यम्। भ्रमाद्यतिरिक्तस्थले श्रोता प्रायो वक्तृपरिकल्पितम् एवाऽर्थमवबुध्यते।

## अर्थस्वरूपम्

वक्तृश्रोतृबुद्धिद्वयमध्यगा व्यवसायात्मिका भवति वागिति शब्दप्रकरणेऽस्माभिरनेकत्र प्रतिपादितम्। तदत्र साकल्येन विविच्यते। अर्थप्रत्यायने वक्तुरन्तिमो व्यवसायः, श्रोतुश्च प्रारम्भिको व्यवसायः शब्दात्मको भवति। भर्तृहरिः वक्तुः प्राग्बुद्धेः प्रवृत्तिं यथा शब्देषु स्वीकुरुते तथा ग्रहीतॄणां व्यवसायमपि शब्देष्वेव सङ्गिरते[3]।

वाग्वृत्तेः प्रवृत्तिः मनसि सम्पद्यते। वेदान्तदर्शने बादरायणो वाचामाधारं मनो व्याचष्ट[4]। वक्तुः वाग्वृत्तिः मनोवृत्तावुद्भवति, श्रोतुश्च मनोवृत्तावेव सा संलीयते। वाग्व्यापारस्य भाषातात्त्विकम् इदं तथ्यं स्वपुत्राय श्वेतकेतवे वर्णयन् आरुणिरुद्दालको वाग्वृत्तेरुद्भवं मनसि स्वीकुरुते[5]। मनोवृत्तिद्वय-मध्यगा हि शब्दजन्या अर्थप्रवृत्तिः प्राणिनामिति सुस्पष्टं दृश्यते। वाग्विषये

१. अर्थगत्यर्थः शब्दप्रयोगः। अष्टा० २।१।१ महाभा०।

२. अष्टा० महाभा०, पस्पशा०।

३. यथा प्रयोक्तुः प्राग्बुद्धिः शब्देष्वेव प्रवर्तते।
व्यवसायो ग्रहीतॄणामेवं तेष्वेव जायते॥ वा० प०, १।५४।

४. वाङ्मनसि दर्शनाच्छब्दाच्च। वे० द०, ४।२।१।

५. अस्य सोम्य! पुरुषस्य प्रयतो वाङ् मनसि सम्पद्यते। छा० उ० ६।८।६।

ऐतरेयोपनिषद्यपि अयमेव महत्त्वपूर्णोऽभिप्रायः[1] प्रतीयते । तद्रीत्या वाचां प्रतिष्ठा मनसि, मनसश्च प्रतिष्ठा वाचि प्रजायते । वस्तुतो वक्तृमनः शब्द-द्वारा बौद्धाभिधेयार्थरूपं सत् श्रोतारं गच्छति । श्रोतृमनश्च पूर्वत एव वक्तृ-वाचि प्रतिष्ठितं भवति । तदैव भवति अर्थाऽवगतिः । अगृहीतशक्तिकस्य श्रोतुर्मनो वक्तृवाचि न सन्तिष्ठते । न वा तस्य शब्दबोध एव जायते ।

अर्थो हि वस्तुतः कन्दुक इव जायते, यो वक्तृश्रोतृरूपखेलार्थिद्वयमध्ये इतस्ततः परिभ्रमति । चाक्षुषादिव्यापारैः प्राणिनां बुद्धौ वस्तुबिम्बानि प्रजायन्ते । तदेव च प्राणिनां ज्ञानमुच्यते । वस्तुबिम्बप्रेरिता बुद्धिरभिव्यङ्क्तु-कामा प्राणादिना सह प्रयतते । तस्यैव परिणामो भवति शब्दः । कम्बुग्री-वादिमद्वस्तुविशेषाऽवलोकनेन प्राणिनां बुद्धौ तस्य सूक्ष्मा प्रतिकृतिराच्छाद्यते । तस्याः प्रतिकृतेः घटशब्देन सह गृहीतशक्तिकत्वाद् वक्ता घटपदमुच्चारयति । वक्त्रोच्चारितं घटपदं श्रुत्वा घटपदेन सह गृहीतशक्तिकः श्रोता बुद्धिस्थं सूक्ष्मप्रतिकृतिरूपं कम्बुग्रीवादिमद्वस्तुविशेषं स्मरति, ततश्च लोके विद्यमानं घटवस्तुविशेषं जानाति । एवञ्च श्रोतुः श्रुतेन शब्देन शाब्दबोधो जायते । कदाचिच्चाऽसत्यपि बाह्ये वस्तुनि कल्पितेन वस्तुना बुद्धौ वस्तुबिम्बं निर्मीयते । तेन चाऽसतोपि वस्तुनः शब्दबलादर्थाऽवगतिः दृश्यते । अधोऽङ्कितेन रेखाचित्रेणैतत् सुस्पष्टमवगन्तुं शक्यते —




१. वाङ् मे मनसि प्रतिष्ठिता, मनो मे वाचि प्रतिष्ठितम् । ऐत० उ०, १ अ०, १ खं० ।

वक्तृश्रोतृबुद्धिद्वयमध्यगोऽयं शाब्दव्यापारः प्रक्रियाष्टको भवति—

१. पूर्वं वक्ता चाक्षुषादिव्यवसायैः लोके वस्तु साक्षात्करोति ।

२. ततो वस्तुबिम्बरूपा वस्तुनः सूक्ष्मा प्रतिकृतिः वक्तृबुद्धौ आच्छाद्यते ।

३. वक्तृविवक्षया शब्दसंस्कृतः प्राणवायुः ऊर्ध्वमुत्थितः मूर्द्धानमाहृत्य आस्याऽवयवान् गच्छति ।

४. निश्चितं शब्दमभिव्यञ्जयितुं निश्चितास्याऽवयवमाहन्ति ।

५. ततः शब्द उच्चरितो भवति ।

६. उच्चरितं शब्दं श्रोताधिगच्छति ।

७. शब्दं संश्रुत्य श्रोता वस्तुबिम्बं स्मरति ।

८. अन्ते च वक्त्रा परिकल्पितेनाऽर्थेन तादात्म्यं प्राप्य अर्थमवबुध्यते । भ्रान्त्यादिस्थले तु स्वाऽभिप्रेतमेवाऽर्थमवगच्छति ।

अर्थस्वरूपविषये भर्तृहरिणाऽपीत्थमेव प्रतिपादितम् । तन्मते श्रोत्राऽवगतस्याऽर्थस्य कारणं वक्त्रोच्चारितः शब्दो भवति । बुद्धिविषयत्वादेव शब्दस्यार्थवत्त्वं प्रकल्प्यते । शब्दव्यापारेण वक्तृबुद्ध्यर्थः श्रोतृबुद्ध्यर्थरूपेणाऽवभासते । तथाहि --

'शब्दः कारणमर्थस्य स हि तेनोपजन्यते ।
तथा च बुद्धिविषयादर्थाच्छब्दः प्रतीयते ॥
... ... ... ।
बुद्ध्यर्थादेव बुद्ध्यर्थे जाते तदपि दृश्यते ॥'[1]

पतञ्जलिराचार्यो वागर्थौ अभिन्नौ मनुते । अर्थो हि वाचामन्तरङ्गभूता शक्तिः विद्यते । अबहिर्भूतो हि शब्दार्थ इति मनुते पतञ्जलिः[2] । श्रुतेन शब्देन तत्त्वद्वयमवगम्यते इति 'स्वं रूपं शब्दस्याऽशब्दसञ्ज्ञा[3]' इति सूत्रं भाषमाणः पतञ्जलिः[4] प्रत्यपादयत्–१. शब्दस्वरूपम्, २. अर्थश्च । व्याकरणे शब्दस्वरूपमात्रं गृह्यते, लोके तु अर्थप्राधान्यकृतो व्यवहारो भवति । लोकेऽर्था-

१. वा० प० ३।३।३२-३३ ।

२. शब्दश्च शब्दाद् बहिर्भूतः अर्थोऽबहिर्भूतः । अष्टा०, १।१।६६ महाभा० ।

३. अष्टा० १।१।६७ ।

४. अस्त्यन्यद् रूपात् स्वं शब्दस्येति । किं पुनस्तत् ? अर्थः शब्देनोच्चारितेनार्थो गम्यते । गामानय, दध्यशानेति अर्थं आनीयते, अर्थश्च भुज्यते । अष्टा०, १।१।६७ महाभा० ।

ऽवगतिः यद्यपि शब्दातिरिक्तैरन्यैः अपि साधनैः सम्भविनी,[1] तथापि शब्द-शास्त्रीयार्थव्यवस्थाप्रसङ्गे शब्दपूर्विका एवाऽर्थाऽवगतिरभिमता[2] इत्येतत् सुस्पष्टमवधेयम्। उच्चरितेषु शब्देषु अवगतेषु अर्थेषु च बुद्धिकृतमेव पौर्वापर्यमादाय व्यवहारः[3] सम्पाद्यते। एतत् सर्वं प्रतिभावशात् सम्पाद्यते। श्रुतैः शब्दैः प्राणिषु एका विलक्षणा प्रतिभा प्रजायते। प्रतिभैव च शब्दानामर्थः। प्रसङ्गात् प्रतिभास्वरूपमप्यत्र निरूप्यते।

## प्रतिभा

श्रुतैः शब्दैः प्रतिपत्तुः बुद्धिः प्रादुर्भवतीति चर्चितमनेकत्र। एषा बुद्धिरेव प्रतिभा भवति। कस्मिंश्चिदपि शब्दे कश्चिदपि अर्थविशेषः संलिप्तो न भवति। व्यवहारादिना शक्तिग्राहकसाधनेन कश्चिच्छब्दविशेषः केनचिदर्थविशेषेण गृहीतसम्बन्धो जायते। तदनन्तरञ्च तादृशेन शब्देन तादृशः शाब्दः प्रत्ययः सम्पद्यते। अत एव सम्प्रदायानुसारेण एकस्यैव शब्दस्याऽनेकानि प्रवृत्तिनिमित्तानि लोके दृष्टानि। यः सम्प्रदायो यं शब्दं येनाऽर्थेन सम्बध्नाति, तेन शब्देन तादृशमर्थं प्रत्येति[4]। एक एव मन्त्रः क्वचिदध्यात्मपरकमर्थं प्रत्याययति, क्वचिदधिभूतम्, क्वचिच्चाऽधिदैवम्[5]। अतः पदार्थाऽवगतये लोकव्यवहाराऽपेक्षणमावश्यकमिति विज्ञा वदन्ति। पदार्थाऽवगतेरनन्तरं प्रतिपत्तुः वाक्याऽर्थलक्षणा एका बुद्धिरुदेति। सा एव प्रतिपत्तुरभिधेयरूपः कृत्स्नोऽर्थो भवति। बहिरविद्यमानस्यापि वस्तुनो बुद्ध्यवस्थापितसत्तां स्वीकृत्य लोके वाग्व्यापारो विधीयते। व्यतीतस्य कर्णादिवृत्तस्य, भ्रान्तस्यालातचक्रस्य, नितराभसम्भवस्य च वन्ध्यासुतस्य शाब्दिको व्यवहारो वक्तुः प्रतिपत्तुश्च बौद्धसत्तां समादायैव सम्पाद्यते।

भर्तृहरिणा एतदेव प्रतिभापदेन व्यपदिष्टम्[6]। शब्दाः प्रतिभायाः प्रयोजका

१. अन्तरेण खल्वपि शब्दप्रयोगं बहवोऽर्था गम्यन्ते, अक्षिनिकोचैः पाणिविहारैश्च।
अष्टा० २।१।१, महाभा०।

२. शब्दपूर्वको ह्यर्थे सम्प्रत्ययः। अष्टा० १।१।६७ महाभा०।

३. बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तन्वन्नीतिः।
शब्देनाऽर्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात् पौर्वापर्यम्॥ अष्टा० १।४।१०९ महाभा०।

४. असमाख्येयतत्त्वानामर्थानां लौकिकैर्यथा।
व्यवहारे समाख्यानं तत्प्राज्ञो न विकल्पयेत्॥ वा० प० २।१३४।

५. एको मन्त्रस्तथाऽऽध्यात्ममधिदैवमधिक्रतु।
असङ्करेण सर्वार्थो भिन्नशक्तिर्व्यवस्थितः॥ वा० प० २।२५६।

६. विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते।
वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम्॥ वा० प० २।१४५।

भवन्ति। शब्दानां प्रतिभाप्रादुर्भावे साधनत्वात् प्रतिभोत्पत्त्यनन्तरं तेषां काचिदुपयोगिता नास्ति। विच्छिन्नेभ्यो यज्ञदत्तादिपदेभ्यो विच्छिन्नाः तत्तत्पदार्था गृह्यन्ते। तदानीं तादृशपदार्थप्रत्ययकाले पदार्थमिति व्यतिरिक्ता एका प्रतिभा जायते। पदार्थैरुपपादितां तां प्रतिभामेव वैयाकरणा वाक्यार्थं व्याचक्षते।

शब्दकाण्डे वाक्यस्वरूपनिरूपणावसरेऽस्माभिरष्टौ वाक्यभेदाः सप्रपञ्चं विचारिताः। तत्र स्फोटमभिलक्ष्य प्रवृत्तेऽखण्डवाक्यपक्षे त्रयो वाक्यभेदा निरूपिताः।

१. सङ्घातवर्तिनी जातिर्वाक्यम्। २. एकोऽनवयवः शब्दो वाक्यम्। ३. बुद्ध्यनुसंहृतिर्वाक्यञ्चेति।

अत्र त्रिष्वपि वाक्यलक्षणेषु प्रतिभा वाक्यार्थ इति स्वीक्रियते[1]। खण्डवाक्यपक्षे अभिहितान्वयवादाश्रितोऽन्विताऽभिधानवादाश्रितश्च वाक्यार्थो विविच्यते। अत्राऽखण्डवाक्यार्थे प्रतिभायां तु एकरसैव प्रतिपत्तिर्भवति। तत्र विच्छेदेनाऽवगतेरस्वीकाराद् अभिहितान्वयाऽन्विताभिधानवत् काचिच्चर्चा न जायते।[2] अखण्ड एकोऽनवयवः स्फोटलक्षणः शब्दो वाक्यम्, प्रतिभावाक्यार्थः, परस्परमध्यासश्च तयोः सम्बन्ध इति वैयाकरणानामभिमतः सिद्धान्तः[3]।

प्रत्यक्षादिज्ञानसाधनमपेक्ष्यैव प्रतिभा प्रजायते। वशीकृतचित्तवृत्तीनां योगिनामपि प्रतिभा प्रत्यक्षाद्यनपेक्षिणी न भवति[4]। आधिदैविकीनां विपत्तीनामवसरे क्षुद्रजन्तूनां तद्विषयिका प्रतिभा आत्मरक्षणप्रवृत्तिश्च प्रत्यक्षादिकमपेक्ष्यैव प्रवर्तते, न तु निमित्तनिरपेक्षा। प्रतिभा हि असमाख्येयतत्त्वं भवति। अनुभवमात्रसंवेद्या सर्वप्राणिषु सन्तिष्ठते। निमित्तवशात् प्रतिभा यथाभ्यासं प्रजायते। क्वचित् सद्यः परिस्फुटति, क्वचिद्विलम्बेन, संस्कारस्तत्र कारणमिति वक्तुं शक्यते। प्रत्यात्मवृत्तित्वेऽपि प्रतिभायाः स्वसंवेदनाकाले प्रतिपन्नामपि तां नियतरूपेण निरूपयितुं न शक्यते[5]।

---

१. तत्राऽखण्डपक्षे त्रिष्वपि लक्षणेषु प्रतिभा वाक्यार्थः। वा० प० २।२ पुण्य०।

२. प्रतिभायां त्वेकरसैव प्रतिपत्तिरिति न तत्र काचिदभिहितान्वयाऽन्विताऽभिधानवच्चर्चा।
वा० प० २।२, पुण्य०।

३. तत्र वैयाकरणस्याऽखण्ड एवैकोऽनवयवः शब्दः स्फोटलक्षणो वाक्यम्, प्रतिभैव वाक्यार्थः, अध्यासश्च सम्बन्धः...। वा० प० २।२ पुण्य०।

४. लौकिकी प्रतिभा यद्वत्प्रत्यक्षाद्यनपेक्षिणी।
न निश्चयाय पर्याप्ता तथा स्याद् योगिनामपि॥ मी० द०, १।१।४ श्लो० वा०।

५. इदं तदिति साऽन्येषामनाख्येया कथञ्चन।
प्रत्यात्मवृत्तिसिद्धा सा कर्त्राऽपि न निरूप्यते॥ वा० प० २।१४६।

विलक्षणायां प्रतिभायां प्रत्युत्पन्नमतित्वं भवति। प्रतिभेयम् असंसृष्टानपि पदार्थान् स्वकीयेन विलक्षणेन सामर्थ्येन सम्मेलयति। प्रतिभामेव भर्तृहरिः स्थितलक्षणम् अर्थं पर्यगणयत्[1]। प्रकृत्यर्थरूपः प्रत्ययार्थरूपश्चाऽपोद्धारपदार्थः प्रतिभारूपस्य स्थितलक्षणस्य वाक्यार्थस्योपकारको भवति[2]। वक्तुः श्रोतुर्वा भावनासंघातः प्रतिभा जायते। प्रतिभा न खलु मनुष्येष्वेव प्रादुर्भवति, अपि तु खगादीनामपि कार्यसमारम्भाः प्रतिभाबलादेव सञ्जायन्ते। प्रयोक्तारः प्रतिपत्तारश्च स्वप्रतिभाया एव प्रामाण्यमभिमत्य परस्परं व्यवहरन्ति[3]। सन्देहपदेषु वस्तुषु अन्तःकरणप्रवृत्तिरूपां प्रतिभामाश्रित्य व्यवहारनिश्चयो विधीयते सद्भिः। क्वचिच्छब्देनेयं प्रतिभा प्रजायते, क्वचिच्चाऽन्यविधेन संस्कारवशेन[4]। वसन्ते पुंसः कोकिलस्य पञ्चमस्वरविरावः, लूतादीनाञ्च जन्तूनां कुलायरचनापाटवं प्रतिभावशादेव जायन्ते[5]।

**षड्विधा प्रतिभा —**

भर्तृहरिः प्रतिभामिमां षड्विधां[6] गणयामास। तत्र—

१. स्वभावः, २. चरणम्, ३. अभ्यासः, ४. योगः, ५. अदृष्टोपपादिता, ६. विशिष्टोपहिता चेति।

वस्तुतो नाऽयं प्रतिभाभेदः, अपि तु प्रतिभाप्रयोजकभेदो विद्यते। यैः यैः हेतुभिः प्रतिभा प्रजायते तद्भेद इत्यर्थः। तदत्र क्रमशो विविच्यते।

**१. स्वभावः—**

प्राणिनां प्रतिभा स्वाभाविकी भवति। प्रत्यक्षादिभिः ज्ञानसाधनैः नहि प्रतिभा उत्पाद्यते। तानि तत्र केवलं निमित्तभावं भजन्ते। स्वभावतो विद्यमानैव प्रतिभा निमित्तवशात् परिस्फुटति। अभ्यासादिभिः

---

१. अपोद्धारपदार्था ये ये चार्थाः स्थितलक्षणाः।...वा० प० १।२४।

२. अपोद्धारश्च सामान्यमिति तस्योपकारिणः।
निमित्ताऽवस्थमेवाऽतः तत्स्वधर्मेण गृह्यते॥ वा० प० ३।१४।१४३।

३. प्रमाणत्वेन तां लोकः सर्वं समनुपश्यति।
समारम्भाः प्रतीयन्ते तिरश्चामपि तद्वशात्॥ वा० प० २।१४९।

४. साक्षाच्छब्देन जनितां भावनाऽनुगमेन वा।
इति कर्तव्यतायां तां न कश्चिदतिवर्तते॥ वा० प० २।१४८।

५. स्वरवृत्तिं विकुरुते मधौ पुंस्कोकिलस्य कः?
जन्त्वादयः कुलायादिकरणे केन शिक्षिताः॥ वा० प० २।१५१।

६. स्वभावचरणाऽभ्यास-योगादृष्टोपपादिता।
विशिष्टोपहिता चेति प्रतिभां षड्विधां विदुः॥ वा० प० २।१५४।

प्रतिभायां प्रखरता सम्पाद्यते। सर्वे शब्दव्यापाराः प्रतिभाप्रतिपादन एव हेतवो भवन्ति[1]। पशुपक्ष्यादिषु आहारान्वेषणप्रीतिद्वेषादिप्रवृत्तिः स्वाभाविक-प्रतिभाबलादेव जायते[2]। भावाऽभिव्यक्तेरर्थाऽनुभूतेश्चाधारः प्रतिभा एव विद्यते। कपेः चापल्यम्, खगादीनां कुलायकरणकौशलम्, लूतादीनां तन्तु-रचनापाटवादिकञ्च स्वभावः प्रतिभावशादेव जायते।

२. चरणम् :—

परम्परयाऽधिगतो व्यवहारः चरणपदेनाऽभिप्रेतः। अर्थग्राहकसाधनवर्णन-प्रसङ्गे व्यवहारोऽस्माभिः सम्यग् व्याख्यास्यते। व्यवहारावेक्षणाद् व्यवहार-करणाच्च प्रयोक्तुः प्रतिपत्तुश्च प्रतिभा विकासमेति। भर्तृहरिः शब्दस्यात्मानं प्रतिभां व्याचष्ट[3]। तदवगत्यर्थं व्यवहाराऽवेक्षणमत्यावश्यकम्। व्यवहारः यं शब्दं यत्राऽर्थे शक्तं करोति तेन शब्देन तादृशी भावनात्मिका प्रतिभा प्रजायते। क्रियायाः प्रकारद्वयी संदृष्टा, व्यापारात्मिका फलात्मिका च। पचतीत्युक्ते विक्लित्त्यनुकूलो व्यापारोऽपि संलक्ष्यते, पाकरूपं फलञ्चापि। उक्तं फलं व्यापारं वा विना कश्चिदपि वाक्यार्थो न भवति पूर्णः। क्रिया-त्मिकामिमां प्रवृत्तिमपि प्रतिभा व्याख्यातुं शक्यते। यतो हि प्रवृत्त्याऽनया विकासमेति प्रतिभा।

३. अभ्यासः—

अभ्यासवशात् सर्वे शब्दाः भवन्ति प्रतिभाहेतवः[4]। अनुकरणात्मिका प्रवृत्तिः भवति अभ्यासः। कश्चिदपि विषयः अभ्यासेन भावनाविषयो जायते। वक्तुरिच्छाऽनुवर्ती शब्दव्यापारः प्राप्ताऽभ्यासः प्रतिपत्तुः प्रतिभां जनयति। अर्थाऽवगतये यानि साधनानि व्याख्यातानि तानि सर्वाण्यपि अभ्यासे-नाधिगम्यानि। अनधीतशास्त्रा अपि बाला अभ्यासाद् गृहीतशक्तिका जायन्ते। जडा अपि प्राणिनः नियतपदैः शब्दैः भवन्ति अवगताऽर्थाः। प्राणिनां प्रति-भायाः प्रयोजकोऽयमभ्यासो न खलु वाचनिकः अपितु नितरां स्वाभाविक एव

---

१. अभ्यासात्प्रतिभाहेतुः शब्दः सर्वोपरैः स्मृतः।
बालानाञ्च तिरश्चाञ्च यथार्थप्रतिपादने ॥ वा० प० २।११९।
२. भावनाऽनुगतादेतदागमादेव जायते ।
आसत्तिविप्रकर्षाभ्यामागमस्तु विशिष्यते ॥ वा० प० २।१५३।
३. यन्नेत्रः प्रतिभात्माऽयं भेदरूपः प्रतीयते। वा० प० १।११८।
४. अभ्यासात्प्रतिभाहेतुः सर्वः शब्दः···। वा० प० २।११९।

भवति[1] । सर्वे एव प्राणिनः यथा स्वमनादिवासनाऽभ्यासवशेन प्रतिभातः समुचितं व्यवहारं कुर्वन्तः लोकयात्रां सम्पादयन्ति । कश्चिदपि प्राणी न भवति प्रतिभाविहीनः । मूलभूतायाः प्रतिभायाः अभ्यासेन भवति विकासः । असमाख्येयतत्त्वस्य मणिरूप्यादिविज्ञानस्य बोधोऽपि अभ्यासप्रयोज्यया प्रतिभया एव जायते[2] ।

४. योगः—

किञ्चनाऽपि अखण्डं वस्तु योगात्मकप्रवृत्त्या खण्डशः ज्ञातुं सुकरं भवति । शाब्दिकव्यापारे योगो भवति परमः सहायकः । प्रकृतिप्रत्ययप्रविभागस्य ज्ञानेन अखण्डं वाक्याऽर्थं विजानाति प्रतिपत्ता । शब्दानां तत्त्वाऽवबोधकं भवति व्याकरणमिति भर्तृहरिः व्याचष्ट[3] । प्रकृतिप्रत्ययविभागज्ञानं नाम भवति शब्दानां तत्त्वावबोधः । एवञ्च योगात्मकप्रवृत्त्या शब्दप्रयोगेन प्रतिभा जायते प्रखरा ।

५. अदृष्टोपपादिता—

अदृष्टैः अप्रत्यक्षैर्वा कारणैः समृद्धा प्रतिभा उच्यते अदृष्टोपपादिता प्रतिभा । सद्यः प्रसूतस्य गोवत्सस्य जले प्लवनसंस्कारः अदृष्टोपपादितप्रतिभावशाद् भवति । क्षुद्रजन्तवः वर्षाकाले वृष्टेः प्रागेव सपरिवारं पलायन्ते अदृष्टोपपादितप्रतिभाबलात् । आप्तानामतीन्द्रियतत्त्वेषु अव्याहता[4] गतिरपि इत्थमेव ज्ञेया ।

६. विशिष्टोपहिता—

कश्चिदपि शब्दः स्वरूपतः कञ्चनार्थं न प्रत्याययति[5] । केनचिदर्थेन विषयत्वमापन्नेनैव शब्देन अर्थः प्रकाशते[6] । एतदेव उच्यते विशिष्टोपहिता

१. अनागमश्च योऽभ्यासः समयः कैश्चिदिष्यते ।
अनन्तरमिदं कार्यमस्मादित्युपदिश्यते ॥ वा० प० २।१२०

२. परेषामसमाख्येयमभ्यासादेव जायते ।
मणिरूप्यादिविज्ञानं तद्विदां नाऽनुमानिकम् ॥ वा० प० १।३५ ।

३. तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ॥ वा० प० १।१३ ।

४. अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।
ये भावान् वचनं तेषां नानुमानेन बाध्यते ॥ व० प० १।२८ ।

५. ···न रूपादेव केवलात् । वा० प० २।३१६

६. विषयत्वमनापन्नैः शब्दैर्नार्थः प्रकाश्यते ।
न सत्तयैव तेऽर्थानामगृहीताः प्रकाशकाः ॥ वा० प० १।५६ ।

प्रतिभा। शब्दानां विशिष्टा स्थितिरेव भवति शब्दार्थप्रत्ययजनिका। अनेकदा अर्थप्रत्यायने शब्दव्यापारापेक्षया अन्यसाधनानि प्रतिभासम्पादने सक्षमाणि दृश्यन्ते। अत एव पतञ्जलिरर्थप्रत्यायने शब्दव्यापारस्य सार्वत्रिकतां निषिषेध[1]। अक्षिनिकोचादिव्यापारैरपि प्रतिभा प्रजायते। एतत्सर्वमुच्यते विशिष्टोपहिता प्रतिभा।

## अर्थनिमित्तकः शब्दः

शब्दनिमित्तको नाम अर्थो भवति, अर्थनिमित्तको वा शब्द इति रोचकं विषयं पतञ्जलिरचर्चयत्। लोके च श्रोतॄणां कृते शब्दभावाऽभावाभ्यामर्थभावाभावयोः दर्शनाच्छब्दनिमित्तकत्वम् अर्थस्येति मुह्यन्ति केचन। पतञ्जलिना सुस्पष्टमेतन्निरूपितम्। अर्थनिमित्तक एव शब्दो भवतीति[2] पतञ्जलिः मनुते। वक्त्रा परिकल्पितस्याऽर्थस्य उच्चरितः शब्दो ज्ञापकमात्रं भवति। कदाचिदपि शब्दोऽर्थस्य कारको न भवति। अर्थप्रतिपादनाय खलु शब्दाः प्रयुज्यन्ते[3] अर्थश्च खलु शब्दस्य प्रयोजको विद्यते। यत्प्रवृत्तिनिमित्तस्याऽभिव्यक्तये वक्ता शब्दं प्रयुङ्क्ते, गृहीतशक्तिकः श्रोता तेन शब्देन तमर्थमधिगच्छति। अत्र श्रोता शब्देनाऽर्थं विजानाति, वक्ता तु अर्थेन शब्दं प्रयुङ्क्ते। न हि शब्दस्य सद्भावेन वाऽर्थस्य सद्भावाऽसद्भावौ गम्येते। सामयिकी खलु शब्दार्थसम्प्रत्ययव्यवस्था भवति। योऽर्थो येन शब्देन विषयीकृतो भवति, सोऽर्थः तेन शब्देनाऽभिधीयते। यश्चार्थः तेनाऽविषयीकृतः, सोऽर्थो नाऽभिधीयते। एवञ्च अर्थप्रतिपादनेच्छया शब्दस्य विषयीकरणाकरणाभ्यामेव प्रयोगनियमः सञ्जायते। शब्दस्योच्चारणाऽनुच्चारणलक्षणः भावाऽभावव्यपदेशो लोके स्वीक्रियते[4]। एतदेव भर्तृहरिरित्थं प्राह—

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः।
एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते[5]॥

□

---

१. अन्तरेण खल्वपि शब्दप्रयोगं बहवोऽर्था गम्यन्ते। अक्षिनिकोचैः पाणिविहारैश्चेति।
अष्टा० २।१।३४, महाभा०।

२. युक्तं पुनर्यच्छब्दनिमित्तको नामार्थः स्यान्नार्थनिमित्तकेन नाम-शब्देन भवितव्यम्, अर्थनिमित्तक एव शब्दः। अष्टा०, १।१।४६ महाभा०।
द्र०—अष्टा० २।१।१, २।३।५०, ७।१।३३, महाभा०।

३. अर्थगत्यर्थः शब्दप्रयोगः। अष्टा० २।१।१, महाभा०।

४. नहि शब्दस्य भावाऽभावाभ्यामर्थस्य भावाऽभावौ क्रियेते। किं तर्हि? अर्थस्य प्रतिपिपादयिषया विषयीकरणाभ्यां शब्दस्योच्चारणाऽनुच्चारणलक्षणौ भावाऽभावावित्यर्थः।
अष्टा० २।३।५०, महाभा० प्र०।

५. वा० प० १।४४।

# अर्थकाण्डे द्वितीयः समुद्देशः

## अर्थाऽवगमहेतवः

**लोकः—**

लोकोऽर्थाऽवगतौ सर्वतो महिष्ठं कारणं विद्यते। लोकादवगतसामर्थ्यो हि श्रोता शब्दानामर्थं विजानाति। येन वृद्धव्यवहारादिना शब्दार्थोऽवलोक्यते स लोक इत्येवमभियुक्तैः लोकशब्दो व्युत्पादितः। तथाहि –

लोक्यते येन शब्दार्थो लोकस्तेन स उच्यते।
व्यवहारोऽथवा वृद्धव्यवहर्तृपरम्परा[1] ॥

प्रवृत्तिनिमित्तस्याऽभिव्यक्तये वक्तृभिः शब्दाः प्रयुज्यन्ते इति प्रागवोचाम। लोके वृद्धव्यवहारादिना गमनादिरूपायाः प्रवृत्तेः पर्यवेक्षको वक्ता तदभिव्यङ्क्तुकामो गच्छतीति शब्दविशेषं प्रयुङ्क्ते। तेन शब्देन गृहीतशक्तिकः श्रोता तादृशं गमनरूपं प्रवृत्तिनिमित्तमादत्ते। प्रवृत्तिनिमित्ते तदभिव्यञ्जनार्थम् उच्चारिते शब्दे च तादात्म्यग्रह आवश्यको[2] भवति अर्थावबोधाय। तदभावेऽर्थावगतिर्न दृश्यते। अत एव पचतीति पदेन गमनरूपं प्रवृत्तिनिमित्तं न गृह्यते। हन्तावुपदिष्टोऽपि गत्यर्थो[3] लोकेऽप्रसिद्धत्वान्नाऽवबुद्ध्यते अद्यत्वे। वाच्यवाचकयोः तादात्म्यावग्रहाय लोको हि प्रमाणभूतं साधनं विद्यते। टि-घु-भादि-शास्त्रीयकृत्रिमसञ्ज्ञां विहाय व्याकरणे प्रायः शब्दशास्त्रीया व्यवहाराः लोके प्रतीतपदार्थकैरेव शब्दैः सम्पाद्यन्ते[4]। पशुरपत्यं देवतेत्यादिनिदर्शनम्।

व्याकरणेन कृतेऽर्थनियमे लौकिकव्यवहारे च व्यभिचारे सति पतञ्जलिः लोकव्यवहारस्यैव प्राधान्यं स्वीकुरुते[5]। यत्किञ्चिद् व्युत्पत्तिनिमित्तमादृत्य

---

१. अष्टा०, ४।१।३, महाभा०, प्र०, उद्द्यो०।

२. विषयत्वमनापन्नैः शब्दैः नार्थः प्रकाश्यते। वा०प० १।५६।

३. हन हिंसागत्योः (पा०धा०पा०, अदा०ग० १०१२।

४. इह हि व्याकरणे ये वैते प्रतीतपदार्थकाः शब्दास्तैः निर्देशाः क्रियन्ते।
अष्टा०, १।४।२३, महाभा०।

५. दर्शनं वै हेतुः। न हि स्वसरि भ्रातृशब्दो दृश्यते।

व्याकरणेन शब्दा व्युत्पाद्यन्ते। भ्रातृशब्दव्युत्पत्तौ भरणरूपं व्युत्पत्तिनिमित्तं स्वीकृत्य 'बिभर्तीति भ्राता' शाब्दिकैः व्युत्पाद्यते। भरणकर्मणि संलग्नायां स्वसरि भरणरूपस्य व्युत्पत्तिनिमित्तस्य सत्त्वादपि सा भ्राता नोच्यते। लोकव्यवहारादस्य तत्र प्रामाण्याऽभ्युपगमात्। 'पुनाति पुष्णातीति वा पुत्र' इत्युच्यते। दुहितर्यपि एतस्य व्युत्पत्तिनिमित्तस्य दर्शनाद् व्यभिचरतीदं व्युत्पत्तिनिमित्तम्। गच्छतीति गौरुच्यते, महिषादिष्वपि समानेऽस्मिन् व्युत्पत्तिनिमित्ते सुस्पष्टो व्यभिचारः। लोकव्यवहारेणैतन्निर्णीयते। कस्मिन्नर्थे कः शब्दः प्रयोक्तव्यः, कस्य शब्दस्य किं वा व्युत्पत्तिनिमित्तमित्यत्र लोको वै प्रमाणम्। यस्मिन्नर्थे यं शब्दं लौकिकाः प्रयुञ्जते तस्य शब्दस्य स एवाऽर्थः। अविद्यमानसम्बन्धस्य शब्दस्य कस्मिंश्चिदर्थे शक्तिः व्याकरणेन नियन्तुं न शक्यते[1]। यद्यपि भरणाद्यथा भ्राता भवति तथा स्वसापि सम्भवति, तथापि लोके तथा प्रसिद्धेरभावात् प्रयोगो न भवति। न हि लोके भरणार्थरूपेण व्युत्पत्तिनिमित्तेन स्वसृशब्दस्य स्वस्रर्थे सम्बन्धोऽभ्युपगतः। तस्माद् भ्रात्रर्थे स्वसृशब्दो न प्रयुज्यते।

अर्थनिमित्तकेन हि शब्देन वक्तारो[2] भवन्तीति सद्य एव प्रागस्माभिः प्रतिपादितम्। लौकिके व्यवहारेऽर्थकृतं प्राधान्यं परिदृश्यते[3]। स्वाऽभिमतमर्थमभिव्यङ्क्तुं शब्दप्रयोगोऽङ्गीक्रियते। शब्दानामर्थबोधनसामर्थ्यं लौकिकप्रयोगादेवाऽवधार्यते। अतः शब्दप्रयोगमिच्छता अवश्यं लोकोऽनुसर्तव्यः। वृद्धव्यवहारमवलोकमानो हि वक्ता आवापोद्वापाभ्यां वस्तूनां व्यवहारसम्पादनार्थं शब्दव्यपदेशं कुरुते। श्रोता चाऽपि तथा गृहीतशक्तिकः सञ्जायते। एवञ्चोभयोः वक्तृश्रोत्रोः तादात्म्यापन्नयोः शब्दव्यपदेशेन एकस्मिन्नर्थे बुद्ध्यैक्यं प्रजायते। एतदेव हि अर्थावगतिरुच्यते। शब्दादर्थावगतिः स्वाभाविकी भवति। न तत्र किञ्चिच्छास्त्रीयं वचनमपेक्षते[4]। स्वभावश्चाऽत्र लोकव्यवहार एवावबोध्यः। शास्त्रीयवचनाऽभावेऽपि लोकव्यवहारादेव एतत् सुसम्पद्यते।

लोकव्यवहारः खलु प्राणिनामर्थबोधनप्रवृत्तिं प्रयोजयति। व्यवहारकाले जना बाह्येषु वस्तुषु यतमाना विलोक्यन्ते, परमार्थाऽभिव्यक्तिं कामयमाना न काञ्चन शास्त्रीयां पद्धतिमपेक्षन्ते। न वा कश्चिच्छब्दान् प्रयुञ्जानो वैया-

---

१. न ह्यविद्यमानसम्बन्धस्य शब्दस्य शक्तिः शास्त्रेण नियम्यते।
(अष्टा०, १।२।७१, महाभा० प्र०)

२. अर्थनिमित्तकेन नाम शब्देन भवितव्यम्। अष्टा० ७।१।३३, महाभा०।

३. लोकेऽर्थकृतं प्राधान्यम्। अष्टा० ३।१।१ महाभा०।

४. अवचनाल्लोकविज्ञानात्सिद्धम्। अष्टा०, ६।१।१, महाभा०, तथा १।१।२१।

करणाच्छब्दानानयति । पतञ्जलिना अर्थावगतौ व्याकरणापेक्षया लोकव्यवहारस्य प्राधान्यं प्रतिपादितम्[1] । स्वयं पाणिनिनिनाऽऽचार्येणाऽपि शब्दानामर्थनिर्धारणे सङ्कोचमञ्जता[2] अर्थप्रत्यायने लोकस्य प्राधान्यं स्वीकृतम् । कार्येषु भावेषु लौकिकानां यादृशी प्रवृत्तिर्भवति, शब्देषु न तादृशी प्रवृत्तिर्दृश्यते[3] । ये लौकिका भावाः शिक्षापूर्वकाः ते शिक्षामन्तरेण सम्पादयितुमशक्या भवन्ति । घटादौ प्रवर्तितुं कामयमानाः दैनिकव्यावहारादिना शिक्षिता एव घटकरणे कुशलं कर्त्तारं कुम्भकारमुपेयन्ति–'कुरु घटं कार्यमनेन करिष्याम' इति । शब्दप्रयोगे न तथा वैयाकरणः समाद्रियते ।[4] शब्दं प्रयुज्यैव पूर्वं लोकः पश्चात् साधुत्वाऽसाधुत्वविज्ञानाय व्याकरणपदं स्पृशति ।

शब्दव्युत्पत्तौ शाब्दिकैरन्वाख्यानभेदाः प्रस्तूयन्ते[5] । व्युत्पत्तिदृष्ट्या एकस्य शब्दस्यानेकेषामर्थानां सम्भवेऽपि लोके कश्चिदेक एवाऽर्थः प्रवृत्तिनिमित्तरूपेण प्रवृत्तिनिमित्ताश्रयरूपेण वा स्वीक्रियते । गौरित्येतच्छब्दस्वरूपं सास्नादिमति प्रवृत्तिनिमित्ते रूढम्[6] । शाब्दिकैश्च 'गच्छतीति, गर्जतीति, गरतीति' वेत्यादिरूपेण गोशब्दो व्युत्पाद्यते[7] । एवञ्च महिषादिष्वपि एतेषां व्युत्पत्तिनिमित्तानां सम्भवाद् महिषादीनामपि गोशब्दवाच्यत्वप्रसङ्ग आपद्यते । लोकप्रामाण्यादत्र समाधीयते–यः शब्दो यत्रार्थे लोकेन स्वीकृतः स एव तस्य शब्दस्याऽर्थो विद्यते । न हि महिषादिष्वर्थेषु गोशब्दः कदाचित् प्रयुक्तः । अतः एवोच्यते –शब्दानामन्यद्धि व्युत्पत्तिनिमित्तम् अन्यच्च प्रवृत्तिनिमित्तम्[8] ।

प्रसङ्गादत्र शब्दानां व्युत्पत्तिनिमित्तभेदे हेतुरप्यन्वेष्टव्यः । एकस्यैव शब्दस्य एकस्मिन्नेवार्थेऽनेकानि व्युत्पत्तिनिमित्तानि दृश्यन्ते । यथा सास्नादिमदर्थे गोपदस्य बहूनि व्युत्पत्तिनिमित्तानि उपरि प्रदर्शितानि । यस्मिन् जन-

---

१. लोकतोऽर्थप्रयुक्ते ··· । अष्टा० महाभा०, पस्पशा० ।
२. प्रधानप्रत्ययार्थवचनमर्थस्याऽन्यप्रमाणत्वात् । अष्टा०, १।२।५६ ।
३. यादृशी लोकप्रवृत्तिः कार्येषु भावेषु तादृशी न शब्देषु ।
अष्टा०, महाभा०, पस्पशा०, महाभा०टी० ।
४. न तद्वच्छब्दान् प्रयोक्ष्यमाणे वैयाकरणकुलं गत्वाऽऽह कुरु शब्दान्, प्रयोक्ष्य इति ।
अष्टा०, महाभा०, पस्पशा० ।
५. अन्वाख्यानानि भिद्यन्ते शब्दव्युत्पत्तिकर्मसु ।
बहूनां सम्भवेऽर्थानां निमित्तं किञ्चिदुच्यते ॥ वा०प०, २।१७० ।
६. गौरित्येव स्वरूपाद्वा गोशब्दो गोषु वर्तते । वा०प०, २।१७५ ।
७. कैश्चिन्निर्वचनं भिन्नं गिरतेर्गर्जतेर्गमेः ।
गुवतेर्गदतेर्वाऽपि गौरित्यत्राऽनुदर्शितम् ॥ वा०प०, २।१७४ ।
८. अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम् । सा०द०, २।५ ।

समुदाये यस्याऽर्थस्य योऽवस्थाविशेषो, गुणविशेषः, क्रियाविशेषो वा प्राधान्येन परिदृश्यते, तस्मिन् जनसमुदाये तस्याऽर्थस्य स एवाऽवस्थाविशेषः, गुणविशेषः, क्रियाविशेषो वा व्युत्पत्तिनिमित्तं स्वीक्रियते। गोपदस्य व्युत्पत्तिनिमित्तानि परिदृश्य एतत् सुस्पष्टं ज्ञातुं शक्यते। यत्र निर्बद्धा गाव इतस्ततः प्रचरन्ति स्म, यस्मिन् जनसमुदाये च गोगतं तदेव कर्म प्राधान्येन परिदृष्टम्, तत्र गमन-रूपेण व्युत्पत्तिनिमित्तेन गोपदं जनेषु प्रवृत्तम्। अतो गच्छतीति गौरुच्यते। प्रायेण गौः पूर्वमचर्वितं सस्यं निगिरति, पश्चादुद्गिल्य चर्वणं विधत्ते। यत्र जनसमुदाये गोगत एव निगरणस्वभाव एव प्राधान्येन परिदृष्टस्तत्र निगरण-रूपेण व्युत्पत्तिनिमित्तेन गोपदं जनेषु प्रवृत्तम्। अतो गरतीति गौरुच्यते। केनचिद् हिंस्रेणाक्रान्तं स्ववत्सं दृष्ट्वा गावो हिंस्राः सञ्जायन्ते गर्जन्ति च। यत्र जनसमुदाये गोषु गर्जनकृत एषोऽवस्थाविशेष एव प्राधान्येन परिदृष्टस्तत्र गर्जनरूपेण व्युत्पत्तिनिमित्तेन गोपद जनेषु प्रवृत्तम्। अतो गर्जतीति गौरुच्यते। एवमेव अन्येषामपि शब्दानां व्युत्पत्तिषु निमित्तानि अन्वेष्टव्यानि। क्वचिच्छब्देषु गुणक्रियादिः प्रत्यक्षं लक्ष्यते, क्वचित् परोक्षम्, क्वचिच्चाऽतिपरोक्षम्। व्युत्पत्तिनिमित्तं शब्दानां प्रवृत्तिनिमित्तस्य निर्धारणे प्रत्यक्षतः परोक्षतश्च हेतुर्भवति।

### अर्थाऽवगतावन्ये केचन हेतवः

अर्थाऽवगतयेऽन्येऽपि हेतवोऽभियुक्तैः परिगणिताः प्रसङ्गादत्र तेऽपि निरुच्यन्ते। शब्दशक्तिगवेषकैः शब्दशक्तिनिरूपणाप्रसङ्गे बहुचर्चितोऽधोऽङ्कितोऽयं श्लोक उद्ध्रियते—

शक्तिग्रहं व्याकरणोपमान-कोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः[1]॥

अत्र पद्येऽष्टभिः साधनैरर्थाऽवगतिरुपवर्णिता:—

१. व्याकरणम्,
२. उपमानम्,
३. कोशः,
४. आप्तवाक्यम्,
५. व्यवहारः,
६. वाक्यशेषः,
७. विवृतिः,
८. पदसान्निध्यम्। इति।

यद्यप्येषु अनेकेषां लोकेऽन्तर्भावाद् लोकाधीनान्येव एतानीति वक्तुं शक्यते

१. बहुभिः ग्रन्थकारैरभियुक्तादिनाम्ना सुपरिचितोऽयं श्लोकः समुद्धृतः (ले०)।
द्र०—न्या० सि० मु०। श० खं०, श० श० प्र०।

तथापि समेषामर्थानां लोकव्यवहारैरुपलब्धेरभावात् साधनभेदः स्वीक्रियते। तदत्र प्रत्येकं विविच्यते।

## १. व्याकरणम्—

उपर्यस्माभिरर्थस्य द्वैविध्यमुपवर्णितम्—

१. वस्त्वर्थः, २. अभिधेयार्थश्चेति। अभिधेयार्थस्याऽपि द्वैविध्य[1]मुपस्थाप्यते अर्थतत्त्वविद्भिः–१. लौकिकः, २. शास्त्रीयश्चेति। सामान्यतो लौकिकाः अविचारित-प्रकृति-प्रत्ययार्था भवन्ति। गौर्हस्तीत्येवमादिशब्दैः लौकिकोऽर्थोऽभिधीयते। अयञ्च लौकिकोऽर्थः प्रकृतिप्रत्यययोः खण्डशोऽर्थविभागाऽभावादखण्ड[2] उच्यते। व्याकरणातिरिक्तैरन्यैः सप्तभिः साधनैः लौकिकस्यैवाऽर्थस्योपलब्धिः भवति। शास्त्रीयस्याऽर्थस्य कृते व्याकरणस्योपयोगो विद्यते। व्याकरणमन्तरा शास्त्रीयोऽर्थो ज्ञातुं न शक्यते।

अयं हि प्रकृत्यर्थोऽयं वा प्रत्ययार्थ इत्येवम् अर्थविभागपूर्वकः पदार्थबोधो वाक्यार्थबोधो वा शास्त्रीयोऽर्थो भवति। अर्थतत्त्वज्ञैरन्वयव्यतिरेकाभ्यां प्रकृत्यर्थः प्रत्ययार्थश्च निश्चीयते। 'पचतीत्युक्ते' कश्चित् पाकोऽर्थो गम्यते कश्चिच्च एककर्तृकोऽर्थः। 'पचत' इत्युक्तौ च कश्चित् पाकोऽर्थः कश्चिच्च द्विकर्तृकोऽर्थो गम्यते। पाकश्च पचेरर्थो विद्यते, प्रत्ययार्थश्च एकत्वम्, द्वित्वमिति। गच्छतीत्युक्तो पाकोऽर्थोऽपैति, गत्यर्थश्च उपजायते। तेन गमेः गत्यर्थः कल्प्यते। अत एव शास्त्रीयः अर्थ आवापोद्धारिक[3] उच्यते। स च व्याकरणेन साध्यते।

## २. उपमानम्—

वक्तृश्रोत्रोः बुद्धेरैक्यप्रतिपादनं खल्वर्थजननं भवतीति सुस्पष्टं प्रतिपादितमतः प्रागस्माभिः। तद्रीत्या शब्देन प्रतिपाद्येऽर्थे उभयोः ज्ञानतादात्म्यं नितरामपेक्ष्यते। परं कदाचिद् इत्थमपि भवति यद् यदा विवक्षितमर्थं जानन् वक्ता तदर्थम् अजानन्तं श्रोतारम् अवबोधयितुं कृतसङ्कल्पो विजायते, श्रोता तदर्थं तच्छब्दस्याऽगृहीतशक्तिकत्वादवगन्तुमसमर्थो भवति, तदा अर्थाऽवगतेरुपमानाऽऽख्यसाधनेन वक्ता स्वकीयं प्रतिपाद्यमर्थं श्रोतारमवबोधयति। उपमानप्रयोगात् प्राग् एतदावश्यकं भवति यद वक्तुः, प्रतिपाद्यमर्थमजानतश्च श्रोतुः तद-

---

१. अभिधेयोऽपि द्विधा—शास्त्रीयो लौकिकश्च। वा०प०, २।८१, प्र०टी०।

२. लौकिकस्त्वखण्डः। वा०प०, २।८१, प्र०टी०।

३. तत्र शास्त्रीय आवापोद्धारिकः। वा०प०, २।८१, प्र०टी०।

'तिरिक्ते कस्मिंश्चिदन्यस्मिन् तत्सदृशेऽर्थे उभयो: बुद्धयोरैक्यं भवेत्।'[1] यथा वक्ता गवयमजानन्तं श्रोतारं गवयपदार्थं बोधयितुं कामयते, अदृष्टपूर्वत्वाच्छ्रोता गवयपदस्य प्रवृत्तिनिमित्तेन अपरिचितो भवति। अतो वक्ता गोपदद्वारा तत्सदृशं गवयं प्रत्याययति, यत उभौ गोशब्दस्य सास्नादिमद्रूपं प्रवृत्तिनिमित्तं जानीत:। उपमानप्रयोगेणात्र गवयपदार्थमजानन्नपि श्रोता गोसादृश्यात् तमवगच्छति। यतो हि गोपदस्य गवयपदस्य चोभयो: प्रवृत्तिनिमित्ताश्रययो: सादृश्यं सन्तिष्ठते। अत उपमानप्रयोगेण गोसदृशे गवये श्रोत्रेऽर्थप्रत्यायनं वक्तु: कृते सुकरं भवति।

उपमाने ह्यत्र निमित्तवशेनाऽन्यस्याऽर्थस्य अन्यस्मिन्नर्थे रूपविपर्यास: परिकल्प्यते। यथा ह्यत्र श्रोता गवयनिमित्तेन गोरूपस्याऽर्थस्य गवयरूपेऽर्थे विपर्यासं कुरुते। ज्ञातार्थेन तत्सदृशेऽज्ञातार्थे शक्तिग्रह उपमानस्य प्रत्यक्षं प्रयोजनं विद्यते[2]। उपमानोपमेययो: क्वचिद् भागे सादृश्यग्रह: क्वचिच्च भेदग्रह आवश्यको भवति[3]।

शब्दार्थसम्बन्धवित् पतञ्जलिराचार्योऽर्थोपग्राहकम् उपमानं सम्यग् व्यचारयत्। पतञ्जलिमते यत्र व्यवहारस्थले किञ्चित् सामान्यं भवति कश्चिच्च विशेषो भवति, तत्रैव उपमानोपमेयभाव: प्रवर्तते[4]। 'गौरिव गवय' इति सम्प्रत्यये गो: सामान्यं गवयश्च विशेषो विद्यते। एवञ्च सामान्यविशेषभावादत्र उपमानोपमेये भवत:। उभयोरैक्ये उपमानोपमेये न भवत:। यत्र यदेवोपमानं तदेव यदि उपमेयं भवति तत्र कश्चिदुपमार्थो न जायते। यथा—गौरिव गौरित्युक्ते उपमानोपमेययोरैक्यात् सामान्यविशेषभावो नोपपद्यते। उपमानोपमेययो: परस्परं भिन्नत्वेऽपि तद्गतभूयोधर्मसादृश्यमपेक्ष्यते। उभयो: सर्वथाऽन्यत्वे कश्चनोपमार्थो न दृश्यते। यथा—गौरिवाश्व इत्यत्र उभयो: परस्परं सर्वथा वैपरीत्येन उपमानोपमेयभावो न प्रवर्तते।

लोके प्रस्थादिना मानेन मेयम् अन्नादिसाकल्येन परिच्छिद्यते। तत्र प्रस्थादिना मानेन अनिर्ज्ञातं मेयस्य मानं परिज्ञायते। परिच्छेदसादृश्याद्

१. गवये नरसिंहे वाऽप्येकज्ञानावृते यथा।
भागं जात्यन्तरस्यैवं सदृशं प्रतिपद्यते ॥ वा०प०, २।९०।

२. अप्रसिद्धं तु यद्भागमदृष्टमनुपश्यति।
तावत्संविदं मूढ: सर्वत्र प्रतिपद्यते ॥ वा०प०, २।९१।

३. एकस्य भागे सादृश्यं भागे भेदश्च लक्ष्यते।
निर्भागस्य प्रकाशस्य निर्भागेनैव चेतसा ॥ वा०प०, २।९३।

४. यत्र किञ्चित् सामान्यं कश्चिच्च विशेषस्तत्रैवोपमानोपमेयभाव:।
अष्टा०, २।१।५५, महाभा०।

मानसादृश्येन एतदर्थग्राहकं तत्त्वमुपमानमुच्यते[1]। प्रस्थादिमानमिव उपमानेनाऽपि अनिर्ज्ञातमर्थतत्त्वं परिज्ञायते । परं प्रस्थादिना मानेन यथा मेयं साकल्येन परिच्छिद्यते, न तथोपमानेन गवादिनोपमेयं गवयादिसाकल्येन ज्ञायते । अपितु उपमानगतः कतिभिश्चिदेव धर्मैरुपमेयं ज्ञाप्यते । उपमानोपमेययोः भूयोधर्मगतसादृश्यज्ञानमेव उपमानोपमेयभावो बोध्यः[2]।

उपमानोपमेयभावोऽयमपेक्षानिमित्तको भवति[3]। यथा पितापुत्रादिव्यवहारोऽपेक्षानिमित्तको भवति तथैवोपमानोपमेयव्यवहारोऽपि । हर्षितमुनेः सुतो न्यायवित् पञ्चानन्दो नारायणस्य पितेत्यत्र पितापुत्रव्यवहारोऽपेक्षानिमित्तकः एव । यस्य गौर्निर्ज्ञातो भवति गवयश्चाऽनिर्ज्ञातः, स गौरिव गवय इति प्रयुङ्क्ते । यस्य तु गवयो निर्ज्ञातो गौश्चाऽनिर्ज्ञातो विद्यते, स गवय इव गौरित्येव प्रयुङ्क्ते । चन्द्र इव मुखम् इत्याद्यपि अपेक्षानिमित्तक एव प्रयोगः ।

३. कोशः —

शब्दार्थनिर्देशपुरःसरं शब्दानां सङ्ग्राहको ग्रन्थः कोश उच्यते । स्वं स्वं प्रवृत्तिनिमित्तमुपादाय वक्तारः शब्दानुच्चारयन्ति । गृहीतशक्तयश्च श्रोतारः तत्प्रवृत्तिनिमित्तम् अधिगच्छन्ति । कस्य शब्दस्य किमस्ति प्रवृत्तिनिमित्तमित्यत्र लोकस्य प्रामाण्यमिति प्राक् प्रतिपादितं सम्यक् । लोको ह्यस्ति शब्दानां प्रयोग विषयः[4]। लोके व्यवहारसम्पादनार्थं शब्दाः प्रयुज्यन्ते । लौकिकं वैदिकञ्च वाङ्मयं लोके सन्तिष्ठते । तत्र देशभेदात् कालभेदाद् वक्तृभेदाच्च एकस्यैव प्रवृत्तिनिमित्तस्याऽभिव्यक्तये अनेके शब्दाः प्रयुज्यन्ते । सास्नादिमदर्थरूपप्रवृत्तिनिमित्ताऽभिव्यक्तये कैश्चिद् गोशब्दः प्रयुज्यते, अन्यैः माहेयी, एकैः सौरभेयी अपरैः शृङ्गिणी, बहुभिश्च माता, रोहिणी इत्यादिकाः शब्दाः प्रयुज्यन्ते[5]।

---

१. मानं हि नामाऽनिर्ज्ञातज्ञानार्थमुपादीयते—अनिर्ज्ञातं ज्ञास्यामीति । तत्समीपे यन्नात्यन्ताय मिमीते तदुपमानम्—गौरिव गवय इति । गौर्निर्ज्ञातः, गवयोऽनिर्ज्ञातः । अष्टा०, २।१।५५, महाभा० ।

२. द्वयोः समानो यो धर्म उपमानोपमेययोः ।
समास उपमानानां शब्दैस्तदभिधायिभिः ॥ वा०प०, ३।१४, ३६१ ।

३. कामं तर्ह्यनेनैव हेतुना यस्य गवयो निर्ज्ञातः स्याद् गौरनिर्ज्ञातः, तेन कर्तव्यं स्यात्—गवय इव गौरिति ? बाढं कर्तव्यम् । अष्टा०, २।१।५५, महाभा० ।

४. महान् हि शब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्याः बहुधा विभिन्नाः······· इतिहासः पुराणं वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः । अष्टा०, महाभा०, पस्पशा० ।

५. माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी ।
अर्जुन्यघ्न्या रोहिणी स्यादुत्तमा गोषु नैचिकी ॥ अ०को०, कां० २, वै०व० ।

एषां शब्दानामर्थाऽवबोधाय कोशस्य आवश्यकताऽनुभूयते । यतो नहि सर्वे शब्दाः एकत्रैव देशे प्रयुज्यन्ते येन व्यवहारादिना तेषामर्थाऽवबोधः सम्भवः स्यात् ।

किञ्च एकेनैव गोशब्देन प्रयोगभेदात् प्रवृत्तिनिमित्तभेदाच्च अनेकेऽर्था बुध्यन्ते । केचन गोशब्दात् पशुविशेषमर्थमवगच्छन्ति, एके वाचम्, अपरे वज्रम्, बहवो नेत्रम् अन्ये च स्वर्गाद्यर्थमपि जानन्ति[1] । महति खल्वस्मिन् शब्दस्य प्रयोगविषये प्रयुक्ताः शब्दाः स्वस्मिन् स्वस्मिन्नर्थे नियतविषया भवन्ति[2] । येन सम्प्रदायेन यत्रार्थे यः शब्दः स्वीकृतः, तस्य शब्दस्याऽर्थः तदनुसारेणैव अनुसन्धेयः । तत्र कोशस्य साहाय्यमपेक्षते । गुणपदेन वैयाकरणा 'अदेङ्' गृह्णन्ति[3], 'सत्त्वरजस्तमांसीति' कापिलाः[4], 'रूपरसादयश्चतुर्विंशति-संख्याका[5]' इति न्यायवैशेषिकाः, 'व्यावर्तकत्वेन विशेषका' इति लौकिका अभ्युपगच्छन्ति, तत्र तत्र गुणपदस्य नियतविषयत्वात् । एतदतिरिक्तमपि गुणपदं बह्वर्थकमस्ति[6] । गुणपदस्य बह्वर्थकताऽस्माभिः शब्दानां गुणत्वपरीक्षणाऽवसरे शब्दकाण्डे सम्यक् प्रतिपादिता । आयुषोऽल्पीयस्त्वाच्छब्दप्रयोग-क्षेत्रस्य च महत्त्वात् सर्वे शब्दाः कवलीकर्त्तुं न शक्यन्ते । अतः कोशबलेन एषां शक्तिग्रहो जायते ।

४. आप्तवाक्यम् --

लोके बहवो व्यवहारा आप्तवचांसि आश्रित्यैव सम्पाद्यन्ते । न हि सर्वे पदार्था लोकव्यवहारैरेवाऽवगन्तुं शक्यन्ते । प्रायो हि आकारवतां बाह्यार्थाना-मेव लोकव्यवहारेण बोधो जायते । आकारवति बाह्यार्थेऽपि वस्तुनि विप-श्चितोऽपि मुह्यन्तो दृश्यन्ते । चक्षुष्मद्भिरपि व्योमतलवद् विलोक्यते । खद्योतश्च स्फुलिङ्ग इव परिदृश्यते[7], का तर्हि कथा संवेदनामात्रसमधिगम्ये

---

१. स्वर्गेषु पशु-वाग्वज्र - दिङ्-नेत्र-घृणि-भू-जले ।
लक्ष्यदृष्ट्या स्त्रियो पुंसि गौर्लिङ्गचिह्नशेफयोः ॥ अ०को०, कां० ३, ना०व० ।

२. एतस्मिन्नति महति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते ।
अष्टा०, महाभा०, पस्पशा० ।

३. अदेङ् गुणः । अष्टा० १।१।२ ।

४. सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः…… । सां०द० १।६१ ।

५. गुणाश्चतुर्विंशतिसंख्याकाः कणादेन कण्ठतश्च-शब्देन च दर्शिताः ।
न्या०सि०मु०, प्र०खं०, का० ५० ।

६. गुणशब्दोऽयं बह्वर्थः । अष्टा० ५।१।११९, महाभा० ।

७. तलवद् दृश्यते व्योम खद्योतो हव्यवाडिव ।
न चैवाऽस्ति तलं व्योम्नि न खद्योते हुताशनः ॥ वा०प० २।१४० ।

वस्तुनि। अतः प्रत्यक्षमपि वस्तु विदुषा युक्तितः परीक्षणीयं भवति[1]। धर्माऽधर्मजीवेश्वरादीनां बाह्यार्थशून्यानां पदार्थानामवगतिराप्तवाक्यादेव सम्भविनी। छात्राणामध्ययनम्, रुग्णानामौषधसेवनादिकञ्चाऽपि आप्तवाक्यादेव सञ्जायते। आचार्यगौतमेन आप्तवाक्यसामर्थ्याद् अर्थावगतिः व्याख्याता[2]। आत्मादिषु असमाख्येयवस्तुषु आप्तोपदेशमन्तरा अर्थावगतेः कश्चिदन्य उपायो नास्ति।

वस्तुतत्त्वस्य कात्स्र्न्येन यथार्थवादी आप्त उच्यते। रजस्तमोभ्यां विनिर्मुक्तो, रागादिवशादपि नाऽन्यथावादी, अर्थतत्त्वस्य याथातथ्येन निश्चयवान् पुरुष आप्तो भवतीति पतञ्जलिः प्रत्यपादयत्[3]। ऋष्यार्यम्लेच्छानाम् आप्तत्वमेतत् समानमिति वात्स्यायनो व्याचष्ट[4]। साधनान्तरेणाऽधिगतोऽपि विवेक आप्तवाक्येन परिपुष्टो जायते—

प्रज्ञा विवेकं लभते भिन्नैरागमदर्शनैः।
कियद्वा शक्यमुन्नेतुं स्वतर्कैरनुधावता॥ वा० प० २।४८६।

५. व्यवहारः—

अर्थग्राहकेषु लोकः खलु मूर्द्धाऽभिषिक्तं साधनं विद्यत इति प्रागतः प्रपञ्चितमस्माभिः। व्यवहारपदेनाऽत्र लोकव्यवहार एवाऽभिप्रेतः। अर्थाऽवबोधकेषु लोकव्यवहारो हि सर्वतो गरीयान् हेतुर्विद्यते। शब्दगतमर्थजननसामर्थ्यं खलु लौकिकप्रयोगादेव निश्चीयते[5]। प्रसिद्धशब्दार्थसम्बन्धज्ञा हि प्रयोजकवृद्धाः प्रयोज्यवृद्धेभ्यः शब्दान् व्यवहरन्ति। तेषां वाक्ये केचन शब्दाः प्रयुज्यन्ते। अग्रिमे वाक्ये केचन शब्दाः त्यज्यन्ते, केचनाऽनुवर्तन्ते, केचन चोपजायन्ते। केचिदर्था अपि त्यज्यन्ते, केचिदनुवर्तन्ते, केचिच्चोपजायन्ते।

---

१. तस्मात् प्रत्यक्षमप्यर्थं विद्वानीक्षेत युक्तितः।
न दर्शनस्य प्रामाण्याद् दृश्यमर्थं प्रकल्पयेत्॥ वा०प०, २।१४१।

२. आप्तोपदेशसामर्थ्याच्छब्दार्थसम्प्रत्ययः। न्या०द०, २।१।५२।

३. रजस्तमोभ्यां निर्मुक्तास्तपोज्ञानबलेन ये,
येषां त्रैकालममलं ज्ञानमव्याहतं सदा।
आप्ताः शिष्टास्ते तेषां वाक्यमसंशयम्,
सत्यं वक्ष्यन्ति ते कस्मादसत्यं नीरजस्तमाः॥ च०सं० २०।१९-२०।

४. आप्तः खलु साक्षात्कृतधर्मा—ऋष्यार्यम्लेच्छानां समानमाप्तलक्षणम्।
न्या०द०, १।१।७, वात्स्या०भा०।

५. स्वसामर्थ्येन हि शब्दोऽर्थं प्रत्याययति। तच्च सामर्थ्यं लौकिकप्रयोगादवधार्यम्।
अष्टा० ७।१।३३, महाभा०प्र०।

एवञ्च पार्श्वस्थो बालः, तं शब्दव्यवहारं पश्यन् आवापोद्वापाभ्यां कस्मिन्नर्थे कः शब्दः प्रयुक्त इति विजानाति। वाक्ये त्यक्तो हि अर्थः, त्यक्तस्य शब्दस्यार्थः, अनुवर्तमानोऽर्थः अनुवर्तमानस्य शब्दस्य, उपजायमानश्चोपजायमानस्य।

व्यवहारो नाम न केवलं मनुष्याणामेव शक्तिग्राहकः, अपि तु अव्यक्तवाचां तिर्यगादीनामपि व्यवहारबलाच्छब्देषु शक्तिग्रहोऽवलोक्यते। प्रथमम् अर्थाऽवबोधोऽयं वाक्याद् एव भवति। शनकैः शनकैः व्यवहारग्रहणस्य सञ्जात सामर्थ्ये पदानामावापोद्वापाभ्यां पदार्थाऽवबोधोऽपि जायते[1]। पदार्थेऽवगते च कृत्स्नो वाक्यार्थोऽवगम्यते। तत एव पदार्थोपनिबन्धना अभेदादिसंसर्गादयो वाक्यधर्मा अपि अवगम्यन्ते[2]।

अदृष्टव्यवहारस्याऽर्थनिर्णयो दुष्कर एव जायते। शतकृत्वः शृण्वतोऽपि श्रोतुः व्यवहारदर्शनाऽभावे अर्थज्ञानं सन्दिग्धं भवति। अत एव पदं श्रुत्वाऽपि तदर्थमजानन् श्रोता वक्तारं व्याहरति—'पदस्याऽस्य वाक्ये प्रयोगं कुरु' इति। वाक्ये प्रयोगानन्तरमवापोद्वापबलेन श्रोता पदार्थं विनिश्चेतुं समर्थो भवति। लोकपदेनाऽत्र वृद्धव्यवहारः, व्यवहर्तृसमुदायो वा विवक्षितः। तस्यैव अर्थाऽवबोधे उपयोगित्वात्, लोक्यतेऽवगम्यते शब्दार्थोऽनेनेति लोकशब्दव्युत्पत्तेश्च[3]।

६. वाक्यशेषः—

वाक्यशेषात् प्रकरणाद्वाऽपि अर्थाऽवगतिः दृश्यते। अर्थविनिश्चायकेषु प्रकरणमपि भर्तृहरिणा परिगणितम्[4]। पूर्वापरसङ्गतिमनुसन्धाय प्रकरणं वा विलोक्य श्रोताऽर्थे प्रवर्तते। सैन्धवमानयेति स्वामिना प्रयुक्तः सेवको यात्राकाले घोटकं भोजनाऽवसरे च लवणं प्रस्तौति। द्वारमिति कर्ममात्रे श्रुते यथाप्रकरणं 'पिधेहि उद्घाटय वेति' गम्यते[5]। वाक्यशेषेण बह्वर्थके शब्दे प्रयुक्ते

---

१. अस्य वाक्यान्तरे दृष्टाल्लिङ्गाद् भेदोऽनुमीयते।......वा०प०। २।८६।

२. इति वाक्येषु ये धर्माः पदार्थोपनिबन्धनाः।
सर्वे ते न प्रकल्पेरन् पदं चेत् स्यादवाचकम्॥ वा०प०, २।८७।

३. लोक्यते येन शब्दार्थो लोकस्तेन स उच्यते।
व्यवहारोऽथवा वृद्धव्यवहर्तृपरम्परा॥ अष्टा०, ४।१।३, महाभा०, प्र०, उद्द्यो०।

४. वाक्यात् प्रकरणादर्थादौचित्याद् देशकालतः।
शब्दार्थाः प्रविभज्यन्ते न रूपादेव केवलात्॥ वा०प०, २।३१४।

५. यथा प्रकरणं द्वारमित्यस्यां कर्मणः श्रुतौ।
बधान देहि वेत्येतदुपायादधिगम्यते॥ वा०प०, २।३३४।

शब्दार्थविषये श्रोतुः सन्देहो विनिवर्तते । अन्ये पदे वा प्रयोक्तव्ये वाक्यैकदेशे पदैकदेशे वा प्रयुक्ते परिशिष्टस्याऽर्थस्य गमको वाक्यशेषो विद्यते ।

७. विवृतिः—

विवृतिः, विवरणं व्याख्येत्यनर्थान्तरम् । शब्दार्थाऽवबोधे विवरणं सहायकं भवति । कश्चिदनिर्ज्ञातार्थो मन्त्रः श्लोको वा विवरणेन अवगतार्थो जायते । गोपदार्थमजानन्तं श्रोतारं सास्नादिमान् पशुविशेष इति व्याख्यायते । प्रायो हि शास्त्रीयाः पारिभाषिकाः शब्दाः विवृतिमपेक्षन्ते । शास्त्रे क्वचित् सन्देहे सति व्याख्यानतः खलु शास्त्रार्थो विनिर्णेय इति पतञ्जलिना स्वाऽभिमतं मतमुपस्थापितम्[1] ।

गुण-वृद्धिदीर्घादिशब्दाः तत्तच्छास्त्रे नियतविषया दृश्यन्ते । विवृतिमन्तरा तेषामर्थाववोधोऽशक्य एव । अवयवशो वस्तुनो वर्णनं व्याख्यानं भवति । यथा सास्नाद्यवयवैः गोपदार्थो व्याख्यायते । पतञ्जलिमते विव्रियमाणस्य पदार्थस्य उदाहरणं प्रत्युदाहरणम् अपेक्षितपदानामन्यतः प्रयोगश्च विवरणेऽपेक्षते[2] ।

८. **प्रसिद्धपदसान्निध्यम्** —

अनेकदा लोके प्रयोक्तृभिरनैकार्थका दुर्बोधार्थकाश्च शब्दाः प्रयुज्यन्ते । तत्र कोशादिभिरपि सारल्येन अर्थाववोधो न भवति । तत्र प्रसिद्धपदसान्निध्याद् अर्थाऽवगतिः जायते। शब्दान्तराऽभिसम्बन्धाद्धि विशेषशब्दानामर्थाः प्रतिपत्तृभिरवगम्यन्ते[3] । यथा—'कृन्मेजन्तः[4]' इत्यत्र कर्तुमित्यादि असत्त्ववचनं मान्तकृदन्तं शब्दस्वरूपम् अव्ययत्वेन विवक्ष्यते । तत्सान्निध्याद् एजन्तमपि कृदन्तं शब्दस्वरूपम् असत्त्ववाचि एव गृह्यते अव्ययत्वेन । तेन पिबध्यै इत्यादेरसत्त्ववचनस्यैव कृदन्तस्य शब्दस्य अव्ययसञ्ज्ञा भवति । न तु 'गो'-इत्यादिकस्याऽपि । अन्यथा गोशब्दस्यापि एजन्तकृदन्तत्वेन अव्ययत्वमापद्येत । ततः सुब्लुक् प्रसज्येत । पदसान्निध्यबलेन तथा न भवति । □

१. व्याख्यानतो विशेषप्रतिपत्तिः नहि सन्देहादलक्षणम् । अष्टा० महाभा० पस्पशा० ।

२. उदाहरणं प्रत्युदाहरणं वाक्याऽध्याहार इत्येतत्समुदितं व्याख्यानं भवति ।
अष्टा०, महा० पस्पशा० ।

३. विशेषशब्दाः केषाञ्चित् सामान्यप्रतिरूपकाः ।
शब्दान्तराऽभिसम्बन्धाद् व्यज्यन्ते प्रतिपत्तृषु ॥ वा०प०, २।१७।

४. अष्टा०, १।१।३९ ।

# अर्थकाण्डे तृतीयः समुद्देशः

## अर्थविनिश्चितिसाधनानि

व्युत्पत्तिनिमित्तसाम्यात् केचन यौगिकाः शब्दा अनेकार्थकाः सञ्जायन्ते[1]। सञ्ज्ञाशब्दाः प्रारम्भे अन्वर्था अपि कालान्तरे रूढशब्दवत् तद्वस्तुमात्राऽभिधायका दृश्यन्ते। एवं सति प्रयुक्तेन शब्देन सम्भावितेष्वपि बहुष्वर्थेषु अभिप्रेतोऽर्थः कथमाप्येत इति समस्यानिदानमावश्यकं विनिश्चित्य शब्दशास्त्रिभिः प्रयत्नो विहितः। भर्तृहरिणाऽर्थसंशयस्थले अर्थविनिश्चितये चतुर्दशप्राया विशेषस्मृतिहेतवः परिगणिताः[2]। सव्याख्यानमत्र त उपवर्ण्यन्ते।

**१. संयोगः—**

प्रसिद्धवस्तुसंयोगाद् अनेकार्थाभिधायिनः शब्दादभिप्रेतोऽर्थो बुध्यते। कस्यचन वस्तुनः केनचिदर्थेन सह सम्बन्धः प्रसिद्धो भवति। अतः तत्सम्बन्धाद् निश्चितोऽर्थोऽवगम्यते। हरिशब्दस्य त्रयोदशाधिकाः प्रवृत्तिनिमित्ताश्रया विलोक्यन्ते[3]। परम् 'सशङ्खचक्रो हरिः' इत्यत्रत्येन हरिपदप्रयोगेण शङ्खचक्रसंयोगाद् विष्णुरूपोऽर्थोऽवबुध्यते।

**२. विप्रयोगः—**

'सशङ्खचक्रो हरिः' इत्यत्रैव प्रयोगे नञ्समासे कृते 'अशङ्खचक्रो हरि'रिति प्रयोगे हरिशब्देन विष्णुरूप एवाऽर्थोऽभिधीयते। तत्सम्बद्धस्य प्रसिद्धवस्तुनः शङ्खस्य तत एव विप्रयोगसम्भवात्। गोशब्दस्य बह्वर्थकत्वेऽपि अवत्सा गौरित्युक्ते गोपदेन धेनुरेवाऽर्थो गृह्यते। वत्सस्य तयैव सम्बद्धत्वात्।

---

१. एकस्याऽपि शब्दस्य निमित्तैरव्यवस्थितैः।
एकेन बहुभिश्चाऽर्थो बहुधा परिकल्प्यते॥ वा०प०, २।१३९।

२. संयोगो विप्रयोगश्च साहचर्यं विरोधिता,
अर्थः प्रकरणं लिङ्गं शब्दस्याऽन्यस्य सन्निधिः।
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः,
शब्दार्थस्याऽनवच्छेदे विशेषस्मृतिहेतवः॥ वा०प०, २।३१७-१८।

३. यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु।
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु॥ अमरको०, कां०३, ना०व०। पृ० २६८४-८५।

३. साहचर्यम् —

'सहचरिताऽसहचरितयोः सहचरितस्यैव ग्रहणमिति[1]' लोकसिद्धो न्यायः। शब्दद्वयप्रयोगे एकस्य बह्वर्थकत्वे द्वितीयसहचारेण तस्य निश्चितोऽर्थोऽवगम्यते। रामलक्ष्मणौ इत्यत्र लक्ष्मणसाहचर्याद् रामपदेन दाशरथी राम एव ज्ञायते, न तु जामदग्न्यः, परशुरामो बलरामो वा।

शब्दस्य खल्वयं स्वभावो यद् विवक्षिताऽर्थप्रत्यायनेन सह स्वावाच्यभूतान् अन्यानपि अर्थान् सङ्केतयति। साहचर्यं हि तत्राऽनभिप्रेतार्थानां व्यवच्छेदको भवति—

यथा शब्दोऽपि कस्मिंश्चित् प्रत्याय्येऽर्थे विवक्षिते।
अविवक्षितमप्यर्थं प्रकाशयति सन्निधेः[2]॥

४. विरोधिता —

ययोः पारस्परिको विरोधः प्रसिद्धो भवति, तयोः प्रयोगे प्रसिद्धविरोधिन एव ग्रहणं भवति। अतो विरोधित्वमपि अर्थविनिश्चितौ हेतुः स्वीक्रियते। 'कर्णार्जुनौ' इत्यत्र अर्जुनपदेन कर्णस्य प्रसिद्धविरोधिनः कौन्तेयस्यैवोपादानं भवति, न त्वन्यस्य। 'रामार्जुनौ' इत्यत्र तु रामपदेन परशुरामः, अर्जुनपदेन च कार्तवीर्यो गृह्यते, परस्परं प्रसिद्धविरोधित्वात्।

५. अर्थः—

६. प्रकरणञ्च—

शब्दानां बह्वर्थकत्वे सम्भवेऽपि पतञ्जलिः अर्थं प्रकरणञ्च नियताऽर्थस्य विनिश्चायकं समाचष्ट[3]। 'सैन्धवमानय भृत्य!' इति प्रयुक्तो भृत्यो यथाप्रकरणं लवणमश्वं वा आनयति। यात्राकालेऽश्वं भोजनकाले च लवणं समाहरति। 'गोपालकमानय, माणवकमध्यापयिष्यति' इत्यत्र गोपालकशब्दस्य अर्थद्वयं सम्भावितम्, १. यष्टिहस्तोऽज्ञः, २. शिष्टश्च। अध्यापनप्रसङ्गाच्छिष्ट एवानीयते, न तु गवामनुचरो यष्टिहतो वाहीकः।

प्रकोष्ठे पत्न्या सह स्थितः पतिरेकान्तं कामयमानो द्वारमिति ब्रूते। प्रकरणज्ञा पत्नी सद्य एव पिधेहीत्यर्थमवगच्छति[4]। यस्मिन् शब्दे श्रुते श्रोतुः

---

१. परि० शे०, परि० ११२।

२. वा०प०, २।३०३।

३. अर्थात् प्रकरणाद् वा लोके द्वयोरेकस्याऽभिनिवृत्तिः। अष्टा०, ६।१।८४, महाभा०।

४. यथा प्रकरणं द्वारमित्यस्यां कर्मणः श्रुतौ।
बधान देहि वेत्येतदुपायादधिगम्यते॥ वा०प०, २।३३४।

यः प्रत्ययो जायते, स शब्दार्थ इति भर्तृहरिरर्थं पर्यभाषत[1]। एकस्यैवाऽर्थस्य कृते वक्तृभिः अनेके शब्दाः प्रयुज्यन्ते। अनेकैः शब्दैश्चैक एवार्थः प्रतीयते[2]। एवं स्थितौ श्रोतुः कृते नियतार्थबोधो दुष्कर एव भवति। अर्थेन प्रकरणेन च एतादृशस्थले नियताऽर्थाऽवगतिः विजायते—

यौगपद्यमतिक्रम्य पर्याये व्यवतिष्ठते।
अर्थ-प्रकरणाभ्यां वा योगाच्छब्दान्तरेण वा[3]॥

शब्दार्थसंशयस्थले वस्त्वर्थस्य पर्यवेक्षणमपि संशयनिवारकं भवतीति वस्तुरूपोऽर्थो नियतार्थस्याऽवबोधकः स्वीक्रियते।

७. लिङ्गम् —

लोके यस्य शब्दस्य यल्लिङ्गं प्रसिद्धं भवति, तत्सम्बन्धात् तदर्थस्यैव ग्रहणं न तु सम्भावितस्याऽन्यस्य अपि। पीताम्वरपदेन वासुदेवः कृष्णो गृह्यते, तस्य पीतपटधारित्वेन नियतलिङ्गत्वात्। 'कुपितो मकरध्वजः' इत्यत्र मकरध्वजपदेन कामदेव एवाऽवबुध्यते, तस्य ध्वजे मकरचिह्नस्य नियतत्वात्। न तु मकराकारध्वजविशेषोऽपि।

८. अन्यशब्दसन्निधिः —

अन्यशब्दस्य सान्निध्येन सामान्यार्थकः शब्दो विशेषार्थको भवति। तत्र प्रकरणमपि हेतुत्वेन कल्प्यते —

'सामान्यशब्दाश्च नान्तरेण विशेषं प्रकरणं वा विशेषेष्ववतिष्ठन्ते[4]।' 'हे कृष्ण ! हे माधव! हे सखे! इति प्रयोगे कृष्णशब्दसान्निध्यात् सखिशब्दः कृष्णाऽर्थमभिधत्ते। 'रामो जामदग्न्यः' इति प्रयोगे जामदग्न्यशब्दसन्निधानाद् रामशब्देन परशुराम एव गृह्यते। सर्वमपि पदजातं स्वार्थं प्रत्याय्य विनिवर्तते। परं तस्मिन् पदार्थेऽवगतेऽपि आकाङ्क्षा न समेति। इयमाकाङ्क्षैव अन्यशब्द-सन्निधिमनुसन्धत्ते —

स्वार्थमात्रं प्रकाश्याऽसौ साकाङ्क्षो विनिवर्तते।
अर्थस्तु तस्य सम्बन्धी प्रकाशयति सन्निधिम्[5]॥

---

१. यस्मिन्नुच्चारिते शब्दे यदा योऽर्थः प्रतीयते।
तमाहुरर्थं तस्यैव नान्यदर्थस्य लक्षणम्॥ वा०प०, २।३३०।

२. बहवो हि शब्दा एकार्था भवन्ति।…एकश्च शब्दो बह्वर्थः।
अष्टा०, १।२।४५, महाभा०।

३. वा०प०, २।३५१।

४. अष्टा, १।२।४५ महाभा०।

५. वा०प०, २।३४०।

९. सामर्थ्यम् —

अनेकार्थकेऽपि शब्दे यस्याऽर्थस्य यत्र कार्यजननसामर्थ्यं भवति, स एवाऽर्थः तत्र गृह्यते । 'मधुना प्रमत्तः पिकः' इत्यत्र मधुशब्दस्याऽनेकार्थकत्वेऽपि पिकस्य समादकत्वसामर्थ्यं वसन्त एवेति मधुपदेनाऽत्र सामर्थ्याद् वसन्तर्तुरर्थः ।

१०. औचित्यम् —

यत्र यस्य शब्दस्य यथाप्रकरणं योऽर्थं उचितः प्रतिभाति, तत्र स एव तच्छब्दवाच्यः स्वीक्रियते । सैन्धवम् आनयेति भुञ्जानेन प्रयुक्ते लवणाऽश्वयोः लवण एवाऽवबुध्यते, औचित्याद्, न तु अश्वः । भोजनकालेऽश्वस्यासङ्गतत्वात् । 'निम्बं परशुना' इत्युक्तौ परशुना-पदेनौचित्याच्छब्देनार्थोऽनुविज्ञायते । शब्दार्थसन्देहनिर्णयहेतुम् औचित्यं व्याचक्षाणः पुण्यराज औचित्यस्योदाहरणभूतो रोचकोऽयं श्लोकः समुद्धृतवान्—

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः[1] ॥

११. देशः—

देशपदेन स्थानमभिप्रेतम् । अर्थविनिश्चयाय देशोऽपि हेतुरुच्यते । 'विभाति गगने चन्द्र' इत्यत्र चन्द्रपदस्य इन्दुरेवाऽभिधेयः । कर्पूरे सम्भावितेऽप्यर्थे गगन-देशस्य निर्देशादिन्दुरेव गृह्यते, तस्यैवौचित्यात् । कर्पूरस्य गगनेऽसङ्गतत्वात् स नाऽवगम्यते ।

१२. कालः—

शब्देनाऽनेकार्थे सम्भाविते कालविवक्षणेन अनभिप्रेताऽर्थो व्यवच्छिद्यते । 'प्रकाशतेऽसौ निशि चित्रभानुः' इत्यत्र चित्रभानुपदेनाऽग्निरेव गृह्यते, रात्रौ सूर्यस्य असम्भवात् । देशस्य कालस्येन्द्रियगतस्य च भेदस्य सत्त्वाद् वस्त्वर्थस्य अपि सामर्थ्यमन्यथा विज्ञायते[2] । मरणादेः निमित्तं मुख्या विषादयः स्वप्नादिषु स्वस्य तद्वदर्थस्य साधकाः न भवन्ति । 'पश्य ! कियानवशिष्टो रविरित्युक्ते प्रवक्तुः कालोऽभिप्रेतो भवति । प्रस्थातुं कालोऽस्ति न वेति श्रोत्राऽवगम्यते—

गन्तव्यं दृश्यतां सूर्य इति कालस्य लक्षणे ।
ज्ञायतां काल इत्येतत् सोपायमभिधीयते[3] ॥

---

१. वा०प०, २।३१६, पुण्य० ।
२. देशकालेन्द्रियगतैः भेदैर्दृश्यतेऽन्यथा ।
यथा प्रसिद्धिर्लोकस्य तथा तदवसीयते ॥ वा०प०, २।२९=
३. वा०प०, २।३१२ ।

**१३. व्यक्तिः—**

व्यक्तिपदेन पुंल्लिङ्गादिभेदो विवक्षितः। नियतार्थाऽवगतये शब्दगतं लिङ्गं कारणं भवति। 'मित्रो विभाति' इत्युक्ते पुंलिङ्गेन मित्रपदेन सूर्यार्थोऽवगम्यते। मित्रं विभातीति क्लीबे तु मित्रपदं सुहृदर्थमभिधत्ते।

**१४. स्वरः—**

स्वरदोषादानर्थक्यं विजायत इति पतञ्जलिरचर्चयत्[1]। एक एव शब्दोऽन्तोदात्ते सति अन्यमर्थमभिधत्ते, आद्युदात्ते चाऽन्यम्। 'इन्द्रशत्रुर्वर्धस्व' इत्यत्रेन्द्रशत्रुपदे आद्युदात्ते सति बहुव्रीहिः समासः कृतो भवति। तत इन्द्र एव शातयिता सम्पन्नः। अन्तोदात्ते च तत्पुरुषः समासोऽवगतो भवति। तत्राऽन्तोदात्ते प्रयोक्तव्ये आद्युदात्तप्रयोगः सापराधः स्वीकृतः। एवञ्च स्वरभेदोऽर्थभेदस्य कारणम्। नियतार्थाऽवगतये नियतः स्वरः कार्यः।

'सामर्थ्यमौचिती देशः०' इति अर्थविनिश्चायकहेतुसङ्ग्राहकश्लोके भर्तृहरिणा प्रयुक्तेन आदिपदेनाऽन्येऽपि अर्थविनिश्चायका हेतवः शिष्टैरुद्भाविताः[2]। तथाहि—

**(क) सत्वषत्वे—**

सत्वं षत्वञ्चाऽर्थभेदहेतुः। नियतार्थाऽभिव्यक्तये नियतो वर्णः प्रयोक्तव्यः। 'सुसिक्तमि'त्यत्र सुपदेन पूजार्थो गम्यते। सोः कर्मप्रवचनीयत्वेन[3] उपसर्गत्वप्रतिषेधात् सिचो षत्वं न भवति। सुषिक्तमित्यत्र तु सिचौ सोरुपसर्गत्वात्[4] सम्यक्त्वं गम्यते।

**(ख) णत्वनत्वे—**

नत्वे णत्वे चाऽर्थो भिद्यते। प्रणायक इति णकारयुक्तेन प्रणयनकर्ताऽभिधीयते। प्रनायक इति नकारयुक्तेन प्रवासिराजको देशोऽवबुध्यते। इत्येवं वर्णभेदोऽर्थभेदकः।

**(ग) इङ्गितादिः—**

अभिनयादौ सर्वेऽर्थाः शब्दैरेव नाऽभिधीयन्ते। तत्राऽक्षिनिकोचैः हस्त-

---

१. दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥ अष्टा० महाभा०, पस्पशा०।

२. आदिना षत्वसत्वणत्वनत्वादि। वै०सि०ल०मं०, शक्तिनि०।

३. सुः पूजायाम्। अष्टा० १।४।९४।

४. उपसर्गाः क्रियायोगे, अष्टा० १।४।५९।

चालनादिभिरपि साधनैः दर्शका अभिनेतुरभिप्रायमवगच्छन्ति। तथ्यमिदं पतञ्जलिनाऽपि स्वीकृतम्—

"अन्तरेण खल्वपि शब्दप्रयोगं बहवोऽर्था गम्यन्ते। अक्षिनिकोचैः पाणिविहारैश्च[1]।"

इङ्गितमर्थगमकमिति प्रतिपादयितुं विश्वनाथेन रुचिरमुदाहृतम्। नायिकां वर्णयन् कश्चिदभिनेता शब्दव्यापारेण सह करपुटेन सङ्केतयत्यपि—

'एतावन्मात्रस्तनिका, एतावन्मात्राभ्यामक्षिभ्याम्, एतावन्मात्राऽवस्था। एतवन्मात्रैः दिवसैः...।'[2] इति।

(घ) वाक्यम्—

अन्यत्र श्लोके भर्तृहरिः वाक्यमपि शब्दार्थस्य विनिश्चायकं समाचष्ट—

वाक्यात् प्रकरणादर्थाद् औचित्याद्देशकालतः।
शब्दार्थाः प्रविभज्यन्ते न रूपादेव केवलात्॥[3]

कृत्स्नं वाक्यं खलु अभिप्रेतमर्थमभिधायाऽनभिप्रेतमर्थं व्यवच्छिनत्ति। 'कटं करोति भीष्ममुदारं दर्शनीयम्।' इत्यत्र भीष्मपदं नहि शान्तनुसुतं गाङ्गेयमभिधत्ते अपि तु दीर्घमर्थम्। सामान्येऽर्थे वर्तमानानां पदानां परस्परमभिसम्बन्धेन विशेषेऽवस्थानं हि वाक्यार्थो निरुच्यते—

'एतेषां पदानां यद्विशेषेऽवस्थानं स वाक्यार्थः'[4]।

वाक्यं खलु व्यक्तार्थाऽभिधायकं भवतीति पतञ्जलिः समाचष्ट[5]। 'देवदत्तस्य कम्बलः सन्तिष्ठते।' इत्यत्र कश्चिच्छाब्दबोधक्लेशो न भवति। 'देवदत्तकम्बलः सन्तिष्ठते।' इत्यत्र समस्ते तु संशयो भवति—सम्बुद्धिर्वा षष्ठीसमासो वेति।

अनेकधा वाक्येन पदार्थव्यतिरिक्तः कश्चिद् विलक्षणोऽर्थः समाख्यायते। तत्र पदार्थाऽवगत्या सविलक्षणः शाब्दः प्रत्ययो नाऽभिव्यज्यते, अपि तु प्रकरणादिसाहाय्येन वाक्यमेव तस्य विलक्षणस्याऽर्थस्याऽवगमहेतुर्भवति। स्तुतिनिन्दाऽभिव्यक्तिमिच्छता ईदृश एव विलक्षणोऽर्थो वाक्येनाऽभिधीयते। 'देवानां

---

१. अष्टा०, २।१।१, महाभा०।
२. वा०प०, २।३१६।
३. सा० द०, २ परि०।
४. अष्टा० १।२।४५, महाभा०।
५. व्यक्ताऽभिधानं भवति वाक्ये। अष्टा०, २।१।१, महाभा०।

प्रियो भवानि'त्यत्र पदानां शिष्टार्थकत्वेऽपि वाक्येन पदार्थव्यतिरिक्तो निन्दार्थोऽभिधीयते–

या प्रवृत्तिनिवृत्त्यर्था स्तुतिनिन्दाप्रकल्पना ।
कुशलः प्रतिपत्ता तामयथार्थां प्रतीयते[1] ॥

पण्डितविश्वनाथेन विलक्षणार्थप्रतिपादकस्य वाक्यस्य मनोरञ्जकमुदाहरणमित्थं प्रदत्तम्—

उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ॥

अत्र पद्ये सामान्यतः पदार्थाऽवलोकनेन मित्रप्रशस्तिः चिरायुष्यकामना च प्रतीयते, परमत्र व्यङ्ग्येनाऽपकारिणो वर्णनं विद्यते । यत्र च वाक्ये प्रयोक्तव्ये वाक्यैकदेशः प्रयुज्यते तथाऽपि वाक्यमेव शाब्दप्रत्यये हेतुर्भवति ।

(ङ) व्याख्यानम्—

पतञ्जलिमतेऽर्थविनिश्चायकेषु व्याख्यानं खलु[3] स्पष्टो हेतुर्भवति । सन्देहपदेषु व्याख्यानं द्रष्टव्यम् । नहि सन्देहाल्लक्षणमलक्षणं भवति । वस्तुतस्त्वेषु शिष्टानां प्रामाण्यमभ्युपगम्यते । अतस्तेषां व्याख्यानं सन्देहनिवारकमर्थग्राहकञ्च भवति ।

(च) सारूप्यम्–

भर्तृहरिणाऽर्थाऽवगतये सारूप्यमप्येको हेतुः निर्दिष्टः[4] । प्रकरणादिसाहाय्येन प्रतिपत्तारः शब्दसारूप्यादर्थसारूप्याच्च नियतं शाब्दप्रत्ययं प्रतिपद्यन्ते ।[5] प्रायेणाऽपभ्रंशशब्दाः साधुशब्दसारूप्यादनुमानेन शब्दार्थं प्रत्याययन्ति[6] । अनेकदा सारूप्यात् कृतोऽर्थनिर्णयो भ्रान्तो भवति । वेदार्थनिर्णये प्रायः संस्कृताऽनभिज्ञानां कृतो यत्न एतादृश एव संल्लक्ष्यते ।

---

१. वा०प०, २।३२० ।
२. सा०द०, २ परि० ।
३. व्याख्यानतो विशेषप्रतिपत्तिः नहि सन्देहादलक्षणम् । अष्टा० महाभा०, पस्पशा० ।
४. भेदपक्षेऽपि सारूप्याभिन्नार्था प्रतिपत्तृषु ।
नियता यान्त्यभिव्यक्तिं शब्दाः प्रकरणादिभिः ॥ वा०प०, २।३१८ ।
५. आवृत्तेरनुमानं वा सारूप्यात्तत्र गम्यते ।
शब्दभेदाऽनुमानं वा शक्तिभेदस्य वा गतिः ॥ वा०प०, २।३६६ ।
६. ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ।
तादात्म्यमुपगम्येव शब्दार्थस्य प्रकाशकाः ॥ वा०प० १।१४९ ।

**१५. कानिचिदन्तरङ्गभूतानि कारणानि–**

अतोऽतिरिक्तान्यपि कानिचिदन्यानि शाब्दबोधस्य कारणानि अर्थतत्त्व-विद्भिः स्वीकृतानि—

अ. आकाङ्क्षा, आ. योग्यता, इ. आसत्ति, ई. तात्पर्यञ्चेति। एतानि शब्दार्थज्ञानस्याऽन्तरङ्गभूतानि कारणानीति वक्तुं शक्यते। यथा प्रकरणं तान्यप्यत्र विविच्यन्ते।

**(अ) आकाङ्क्षा—**

वाक्यार्थसङ्केतस्य ग्राहिका आकाङ्क्षा भवतीति नागेशः समाचष्ट[1]। एकस्मिन् पदार्थेऽवगते तदन्वयिनोऽन्यस्य पदार्थस्य ज्ञातुमिच्छा आकाङ्क्षा कथ्यते। अस्य पदार्थस्य अन्वयिपदार्थः कः? इत्येवंरूपा जिज्ञासा हि आकाङ्क्षाज्ञानस्य सुगमोपायो विद्यते। पदार्थद्वयस्थितामाकाङ्क्षां पतञ्जलि-रपि अचर्चयत्[2]। 'देवदत्तः' इत्युक्ते क्रियापदमाकाङ्क्ष्यते। 'यज्ञदत्तस्य' इत्युक्ते सम्बन्धी आकाङ्क्ष्यते।

**(आ) योग्यता—**

तर्कालङ्कारो जगदीशः शाब्दबोधजनिकां योग्यतां व्याचष्ट[3]। जगदीशमते योग्यताभावे शाब्दबोधोऽपि न भवति। 'वह्निना सिञ्चती'त्यत्र वह्नेः सेचन-कर्मणि अयोग्यत्वाच् छाब्दः प्रत्ययो न जायत इति तन्निष्कर्षः। नागेशो मतमिदं प्रत्यवदत्[4]। नागेशमते बाधज्ञानाऽभावः खलु योग्यता कथ्यते। बाधज्ञानञ्च शाब्दबोधे प्रतिबन्धकं न जायते। यदि बाधज्ञानं शाब्दबोधे प्रतिबन्धकत्वेन कल्प्येत तदा विवादे प्रतिवादिनो वाक्यादर्थज्ञानाऽभावे वादिना तत्खण्डनाऽसम्भवः स्यात्[5]।

बाधज्ञाने सत्यपि शाब्दबोधो भवत्येव। केवलं शाब्दबोधोत्तरं प्रवृत्तिर्न

---

१. वाक्यसमयग्राहिका च आकाङ्क्षा। वै०सि०ल०म०, आ०नि०।

२. परस्परव्यपेक्षा सामर्थ्यमेके। का पुनः शब्दयोर्व्यपेक्षा?
न ब्रूमः शब्दयोरिति। किं तर्हि? अर्थयोः। अष्टा०, २।१।१ महाभा०।

३. योग्यतार्थगताकाङ्क्षा पदनिष्ठाऽनुभाविका।
प्रत्येकं वा मिलित्वा वा नैते लिङ्गमसिद्धितः॥ शब्द० प्रका०, ११४।

४. तन्न, शाब्दप्रयोज्ये बोधे बाधज्ञानस्याप्रयोजकत्वात्। (वै०सि०ल०मं०, योग्यतानि०)

५. किञ्चैवं वादे प्रतिवादिशब्दस्याऽबोधकत्वे तत्खण्डनकथोच्छेदः।
(वै०सि०ल०मं०, योग्यतानि०)

भवति । एवञ्च बाधज्ञानं प्रवृत्तावेव बाधकं न तु शाब्दबोधेऽपीति ज्ञेयम् ।

अस्य क्षोणिपतेः परार्द्धपरया लक्षीकृता संख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्याः किला कीर्तयः ।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरात्
मूकानां प्रवरेण कूर्मरमणीदुग्धोदधेः रोधसि[1] ॥

अत्र श्लोके प्रत्येकस्मिन्नपि वाक्ये बाधज्ञाने सत्यपि शाब्दः प्रत्ययो नाऽवरुध्यते। हरिणा कार्यशक्तिमत्त्वरूपा योग्यताऽनुमोदिता[2] । अत एव 'घटेन जलमाहर' इति यस्य वाक्यस्य घटपदेन सच्छिद्रेतरकम्बुग्रीवादिमान् वस्त्वर्थोऽवबुध्यते ।

(इ) आसत्तिः—

अनभ्यस्तानां कृते शीघ्रतयाऽर्थाऽवगमाय आसत्तिः कारणं भवति । वाक्येऽन्वयिनां पदानां यथायथमव्यवधानेन उपस्थितिरासत्तिरुच्यते । आसत्तेः मुख्य आधार आकाङ्क्षा योग्यता च भवति । आसत्तिबलाद् दूरस्थस्याऽपि पदार्थस्याऽर्थतः सम्बन्धो गृह्यते । पतञ्जलिना आसत्तेः मनोरञ्जकमेकमुदाहरणं प्रदत्तम्

अनड्वाहमुदहारि या त्वं हरसि शिरसा ।
कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीः[3] ॥

अत्र कश्चिदर्थो नाऽवगम्यते । आसत्तिबलादस्याऽन्वयः पतञ्जलिनैव इत्थं विहितः—

उदहारि भगिनि या त्वं कुम्भं हरसि शिरसा अनड्वाहं साचीनमभिधावन्तमद्राक्षीः[4] ।

अनेनाऽन्वितेन वाक्येनार्थः सुस्पष्टमवगम्यते । अतएव कैयटः पाठक्रमादार्थक्रमस्य बलीयस्त्वं व्याचष्ट[5] ।

अत्राऽभिज्ञैः पक्षद्वयमुपपादितम् । तत्राद्यः खले कपोतन्यायेनाऽन्वयिनां पदार्थानां स्मरणादेकदैव क्रियाकारकभावेनाऽन्वयरूपः शाब्दबोधो जायते ।

---

१. महीपतिमण्डलीककवेरिदं पद्यम् । (ले०)

२. केषाञ्चित् साहचर्येण जातिः शक्त्युपलक्षणम्,
खादिरादिष्वशक्तेषु शक्तः प्रतिनिधीयते ।
अस्वातन्त्र्यफलो बन्धः प्रमाणादौ च शिष्यते,
अतो जात्यभिधानेऽपि शक्तिहीनं न गृह्यते ॥ (वा०प० ३।१।३-४)

३-४. अष्टा०, १।१।५७ महाभा० ।

५. द्र०—अष्टा०, १।१।५६, महाभा०, प्र० ।

तथाहि—"वृद्धा युवान: शिशव: कपोता: खले यथाऽमी युगपत् पतन्ति, तथैव सर्वे युगपत् पदार्था: परस्परेणान्वयिनो भवन्ति[1]।" द्वितीयपक्षे च घटादि-पदार्थ: आकाङ्क्षितै: योग्यै: पदैरन्वित: शाब्दं प्रत्ययं जनयति। तद्यथा—

यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते।
तेन तेनाऽन्वित: स्वार्थ: पदैरेवाऽवगम्यते[2]॥

आद्य: पक्षोऽभिज्ञानां कृते द्वितीयश्चाऽनभ्यस्तानां कृते इति बोध्यम्।

**(ई) तात्पर्यम्**—

नानार्थकपदप्रयोगस्थले प्रकरणं हि नियतार्थबोधकं भवतीति प्राक् प्रतिपादितमस्माभि:। वक्तु: तात्पर्याऽवबोधेऽपि प्रकरणमिदं कारणं विद्यते। अत: तात्पर्यमपि शाब्दबोधे कारणमस्तीति केचन स्वीकुर्वते। तात्पर्याऽनुपपत्ते: शब्दप्रवृत्तिनिमित्तं परित्यज्य लक्ष्यार्थ: स्वीक्रियते[3]। प्रवक्तु: तात्पर्याऽनवबोधा-देव शास्त्रेषु अर्थविवादो दृश्यते। तात्पर्यं शब्दस्य निश्चितमर्थं प्रतिपादयति। 'सैन्धवमानय' इत्युक्ते यदि वक्तु: सैन्धवपदेनाऽश्वे तात्पर्यं भवति तदाऽश्व आनीयते। यदि लवणेऽभिप्रायस्तदा लवणमाह्रियते।

परं वस्तुत: तात्पर्यज्ञानं शाब्दबोधे कारणं नाऽस्ति। यदि तात्पर्यं शाब्द-बोधे कारणं स्यात्तदा शुकादिवाक्यात् पूर्वजन्मसंस्कारेण भूतबालकोक्तोत्तम-काव्याच्च शाब्दबोधो न सम्भवेत्। तात्पर्यज्ञानं केवलं शाब्दबोधस्य प्रामाण्यं प्रस्तौति।

---

१-२. श्लोकद्वयमिदमभियुक्तैरनेकत्रोदाहृतम्। द्र०—वै०सि०ल०मं०: आ०नि०, २०३०।

३. लक्षणाशक्यसम्बन्ध: तात्पर्याऽनुपपत्तित:। न्या०सि०मु०, शब्दखं०।

# अर्थकाण्डे चतुर्थः समुद्देशः

## अर्थभेदाः

स्फोटलक्षण आन्तर शब्द आस्यावयवैरुच्चारितः सन् ध्वन्यात्मको जायते । स्फोटलक्षणस्य शब्दस्य प्रयोजिका प्रतिभा भवति । प्रतिभैव च शब्दानामर्थं इति अर्थस्वरूपनिरूपणायां सुस्पष्टं प्रतिपादितमस्माभिः । शब्द-प्रयोगद्वारा वक्तुः प्रतिभया श्रोतुः प्रतिभायाः स्फोटनं जायते । प्रयोक्तुः प्रति-पत्तुश्च प्रतिभाद्वयस्य तादात्म्यं खलु शब्दार्थो भवति । अर्थो वाक्संश्लिष्टो जायते । एतत् संलक्ष्यैव भर्तृहरिः वागर्थौ अभिन्नौ स्वीकुरुते । एकस्यैव तत्त्वस्य शब्दार्थौ भेदौ भवतः—

एकस्यैवात्मनो भेदौ शब्दार्थावपृथक्स्थितौ[1] ।

प्रतिभाविभेदादर्थेषु भेदमभ्युपगच्छन्ति आचार्याः । सम्प्रत्ययदृष्ट्या चतुर्विधा नाम अर्थाः सन्तीति पतञ्जलिः निर्दिदेश ।[2] चतुर्भिः प्रकारैरर्थेषु शब्दानां प्रवृत्तिः जायते । अर्थाच्चतुर्भिः प्रकारैः प्रतिभा आत्मानमभिव्यङ्क्तु शब्दान् प्रयोजयति, १. जात्या, २. यदृच्छया (व्यक्त्या), ३. गुणेन, ४. क्रियया चेति, अर्थचतुष्टयं शब्दानामिति तन्निष्कर्षः । क्रमशोऽत्र इमेऽर्थ-भेदा निरूप्यन्ते ।

### (१, २) जातिव्यक्ती पदार्थौ—

जातिपदेनाऽत्र शब्दानां प्रवृत्तिनिमित्तमभिप्रेतम् । जात्यर्थे आकृतिपदमपि विद्वद्भिः[3] प्रयुज्यते । श्रुते शब्दे प्रथमं प्रवृत्तिनिमित्तरूपोऽर्थो ज्ञायते । गवादि-शब्दे श्रुते पूर्वं जातिरूपोऽर्थः परिज्ञायते । तदनन्तरमेव नीलादिगुणको देवदत्तादिस्वामिकः प्रवृत्तिनिमित्ताश्रयो द्रव्यात्मकोऽर्थबोधो भवति । प्रवृत्ति-निमित्तस्य प्रवृत्तिनिमित्ताश्रयस्य च स्वरूपनिर्वचनमस्मिन्नेवाऽर्थकाण्डे सद्य एवाग्रे सम्यग् विधास्यते ।

---

१. वा०प०. २।३१ ।

२. चतुष्टयी शब्दानां प्रवृत्तिः । जातिशब्दाः, गुणशब्दाः, क्रियाशब्दाः, यदृच्छाशब्दाश्चतुर्थाः । अष्टा० प्रत्या०सू० २, महाभा०, आ० २ ।

जातिमेवाकृतिं प्राहुर्व्यक्तिराक्रियते यया ।
सामान्यं तच्च पिण्डानामेकबुद्धिनिबन्धनम् ॥ श्लोकवा०, आकृतिवादे ३ श्लो० ।

उपदिष्टं हि प्रातिपदिकं क्रियापदञ्च पूर्वं सामान्यभूतम् अर्थं प्रत्याययति। सामान्ये वर्तमानस्य चार्थस्य व्यक्ति: उपजायते। लिङ्गसंख्याभ्यामन्वितस्य व्यक्तिरूपस्य पदार्थस्य बाह्यार्थेन योगो भवतीति पतञ्जलिर्व्याचष्ट[1]। लौकिका व्यवहारा हि व्यक्त्यन्वितेनैव पदार्थेन सम्पाद्यन्ते। जातौ खलु शब्दस्याऽन्तरङ्गभूता शक्ति: सन्तिष्ठते, व्यक्त्यादिषु च बहिरङ्गा। प्रत्यङ्ग-वर्तिनि लोकेऽस्मिन् बहिरङ्गमुपेक्ष्य पूर्वम् अन्तरङ्गे प्रवृत्तिर्लक्ष्यते। लौकिका: प्रातरुत्थाय यान्येषां प्रतिशरीरं कार्याणि, तानि तावत् पूर्वं कुर्वन्ति। तत: सुहृदादीनाम्। तथा शब्दोऽपि प्राक् सामान्यभूतमन्तरङ्गम् अर्थं बोधयति, ततो व्यक्ततादि-बहिरङ्गम्।[2]

चक्षुरादीनि जातिनिरपेक्षं रूपाद्यर्थं बोधयन्ति। शब्दस्तु गृहीतजाति-सम्बन्ध एवार्थं प्रत्याययति। अत: शब्दानां जातिरर्थं इति केचनाऽऽहु:। सम्बन्धग्रहो व्यक्तिषु न सम्भवति। तासामानन्त्यात्।

शब्दानां जातिवाच्यत्वे आचार्याणामैकमत्यं न विद्यते। जातिरेवाऽर्थ: शब्दानामित्येके स्वीकुर्वते, व्यक्ति: एवेत्यपरे। प्रसङ्गादत्र विवादोऽयं विचार्यते, पाणिनेराचार्यस्याऽभिमतञ्च समुपस्थाप्यते।

**जातिवादी वाजप्यायन:—**

कात्यायन:[3] पतञ्जलिश्च[4] जातिवादिनं वाजप्यायनं समस्मरताम्। जाते: शब्दार्थत्वप्रसाधनाय वाजप्यायनेन युक्तिचतुष्टयमित्थं समुपस्थापितम्—

(क) प्रख्याऽविशेषात्,[5] (ख) अव्ययपवर्गगतेश्च,[6] (ग) ज्ञायते चैको-पदिष्टम्[7], (घ) धर्मशास्त्रञ्च तथा[8]। एकैकमत्र विविच्यते—

---

१. प्रातिपदिकञ्चाऽप्युपदिष्टं सामान्यभूतेऽर्थे वर्तते। अष्टा०, १।१।५७, महाभा०।

२. व्यक्तिराकृतिश्च पदार्थ:, उभयपरत्वेन लौकिकै: शब्दा: प्रयुज्यन्ते।
अष्टा०, महाभा० पस्पशा०, महाभा०टी०।

३. आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायन:। अष्टा०, १।२।६४, वा० ३५।

४. आकृत्यभिधानाद्वैकं शब्दं विभक्तौ वाजप्यायन आचार्यो न्याय्यं मन्यते।
अष्टा०, १।२।६४, महाभा०।

५. अष्टा०, १।२।६४, वा० ३६।

६. अष्टा०, १।२।६४, वा० ३७।

७. अष्टा०, १।२।६४, वा० ३८।

८. अष्टा०, १।२।६४, वा० ३९।

(क) प्रख्याऽविशेषात्—

प्रख्या नाम बुद्धिरुच्यते । अनेकासु व्यक्तिषु बुद्धेरेकरूपत्वात् प्रतीयते—जातिः शब्दार्थ इति । गुणप्रमाणादिभिन्नेष्वपि गोपिण्डादिषु गौर्गौरित्येकाकारा प्रतीतिरुत्पद्यते । एकरूपमेव सास्नादिमदर्थरूपं प्रवृत्तिनिमित्तं सञ्जायते । तस्मादाचार्यो वाजप्यायनो जातेः शब्दार्थत्वं प्रत्यपादयत् । अयमेवाऽभिप्रायो भर्तृहरिणेत्थमनूदितः—

स्वा जातिः प्रथमं शब्दैः सर्वैरेवाऽभिधीयते ।
ततोऽर्थजातिरूपेषु तदध्यारोपकल्पना[1] ॥

(ख) अव्यपवर्गगतेश्च—

जातिजातिमतोरविशेषाऽवगतेरुभयोरभेदोपचाराद्वा जातिः शब्दानामर्थ इति वाजप्यायनो मनुते । जातावभिधीयमानायां द्रव्यद्वारका वाहदोहादयो लौकिका व्यवहाराः सम्पाद्यन्ते । 'गौः रक्तः' इति सामानाधिकरण्यादिकार्यमपि समुपपद्यते । प्रतिव्यक्ति तद्गता जातिरविच्छिन्नैव समुपलभ्यते । गौरित्युक्ते कश्चिद् व्यपवर्गो नोपलभ्यते—नीला, शुक्लेति वा । शब्दे श्रुते एकाकाराया बुद्धेरुपलम्भाज्जातिः शब्दार्थ इति वाजप्यायनस्याशयः ।

(ग) ज्ञायते चैकोपदिष्टम्—

एकस्यां व्यक्तावुपदिष्टायां सर्वा अपि व्यक्तयो विज्ञाता भवन्ति । व्यक्तौ पदार्थेऽभ्युपगते एतन्न सम्भवति, व्यक्तीनाम् आनन्त्यात् । जातेरेकत्वादेतत् सुष्ठु समुपपद्यते । महानसे कस्यचिद् धूम उपदिष्टो भवति । अन्यस्मिन् पर्वतादिदेशे, यस्मिन् काले अन्यदीयञ्च तं धूमं दृष्ट्वा प्रतिपत्ता जानाति यदयं धूम इति । पतञ्जलिनाऽस्यां हेतुनिरूपणायां गोपदार्थः समाश्रितः[2] । प्रयोजकवृद्धेन प्रयोज्यवृद्धाय कदाचिद् गौरुपदिष्टो भवति । स तं गोपदार्थमन्यस्यामपि वयोऽवस्थायाम् अन्यस्मिन् देशेऽन्यस्मिन् काले चाऽपि दृष्ट्वाऽवगन्तुं समर्थो भवति । जातेः पदार्थत्वाऽभावे व्यक्तीनामानन्त्यादेकत्र गृहीतशक्तित्वेऽपि अन्यत्रागृहीतत्वादुपदिष्टादन्यं गोपदार्थमवगन्तुं सामर्थ्यं न भवेत् । अतो जातेः पदार्थत्वेऽयमपि हेतुः ।

(घ) धर्मशास्त्रञ्च तथा—

जातेः शब्दार्थत्वे स्वीकृते धर्मशास्त्रमपि सङ्गतं जायते इति वाजप्याय-

१. वा०प० ३।१।६ ।
२. द्र०—अष्टा०, १।२।६४, महाभा० ।

नस्याऽऽचार्यस्याऽत्र विषयेऽन्तिमस्तर्कोऽस्ति । 'सुरा न पेया' इति स्मर्यते । अत्र सुरापदस्यैकत्वेन उद्देश्यत्वेऽपि जातेः पदार्थत्वात् सुरामात्रं पातुं निषिध्यते । अन्यथा व्यक्तेः पदार्थत्वे एकां सुरामपीत्वैव शास्त्रं चरितार्थं भवेत् । तथा न भवति । अतो जातिः शब्दार्थः सिध्यति ।

एभिरेव हेतुभिराचार्यो वाजप्यायनः "सरूपाणामेकशेष एकविभक्तौ[1]" इति पाणिनीयम् एकशेषशास्त्रमपि प्रत्याचख्यौ । तन्मते जातेः शब्दार्थत्वे सिद्धे, जातेरेकत्वादेकस्यैव शब्दस्य प्रयोगो भविष्यति । नाऽनेकशब्दप्रयोगप्रसङ्ग इति सुस्पष्टम् एकशेषशास्त्रस्य वैयर्थ्यम् ।

**व्यक्तिवादी व्याडिः—**

वाजप्यायनेन यादृशैः प्रबलैस्तर्कैः जातिः शब्दार्थः इति समुपस्थापितम् एकशेषश्च प्रत्याख्यातः, ततोऽपि प्रबलतरैस्तर्कैः ख्यातनामा व्याडिराचार्यः तन्मतं दूषयन् द्रव्यस्य (व्यक्तेः) पदार्थत्वं समुपस्थापयत्[2] । कात्यायनः[3] पतञ्जलि[4]श्चोभावेव द्रव्याऽभिधानवादिनं व्याडिं समस्मरताम् । व्याडिना द्रव्याभिधानपक्षसिद्धौ तर्कचतुष्टयं समाश्रितम् । तथाहि—

(अ) तथा च लिङ्गवचनसिद्धिः[5] ।
(इ) चोदनासु च तस्यारम्भात्[6] ।
(उ) न चैकमनेकाऽधिकरणस्थम्[7] ।
(ऋ) विनाशे प्रादुर्भावे च सर्वं तथा स्यात् ।[8]

पतञ्जलिनेमे हेतवः सम्यक् समुपवृंहिताः[9] । किञ्चिदत्र विविच्यन्ते ।

**(अ) तथा च लिङ्गवचनसिद्धिः—**

व्याकरणतन्त्रे लिङ्गाऽनुशासनं वचनाऽनुशासनञ्च विधीयेते । यदि च शब्दानां जातिरर्थः स्वीक्रियेत तदैतन्नोपपद्यते । जातेरेकत्वादयमजः, इयमजा

१. अष्टा०, १।२।६४।
२. द्र०—अष्टा०, १।२।६४, महाभा० ।
३. द्रव्याऽभिधानं व्याडिः । अष्टा०, १।२।६४, वा० ४७ ।
४. द्रव्याऽभिधानं व्याडिराचार्यो न्याय्यं मन्यते । अष्टा० १।२।६४, महाभा० ।
५. अष्टा० १।२।६४, वा० ४७ ।
६. अष्टा०, १।२।६४, वा० ४८ ।
७. अष्टा०, १।२।६४, वा० ४९ ।
८. अष्टा०, १।२।६४, वा० ५० ।
९. अष्टा०, १।२।६४, महाभा० ।

इत्यादिको व्यपवर्गव्यवहारो नोपपद्यते। व्यक्तेः पदार्थत्वे तु तस्या अनेकत्वाद् व्याडिमते लिङ्गवचनसिद्धिः विजायते। जातेः पदार्थत्वस्वीकारे 'स्त्रियाम्[1]।' 'सरूपाणामेकशेष एकविभक्तौ।'[2] इत्यादिविधिशास्त्राणां वैयर्थ्यं सुस्पष्टमेव। पतञ्जलिप्रामाण्याद् द्रव्याश्रित एवाऽर्थे द्विवचनबहुवचनानि भवन्ति[3]। वक्तुरभिधेयरूपः अर्थो यद् द्रव्यं श्रितो भवति तस्य भेदाद् वचनभेदो भवति।

### (इ) चोदनासु च तस्यारम्भात्—

आकृतौ चोदितायाम् आरम्भणाऽऽलम्भनादीनि द्रव्येऽनुष्ठीयन्ते। न हि जात्या कश्चित् कार्यसमारम्भो दृश्यते। अतो द्रव्यमेव शब्दार्थ इति व्याडिराचार्यः स्वीकुरुते। गामानयेत्युक्ते नहि गोमात्रमानीयते, अपि तु कश्चिदेको गौः। न वा, 'देवदत्त ! भुङ्क्ष्व सक्तुमि'त्यत्र सक्तुमात्रं भोक्तुमादिश्यते। वाहदोहादयो व्यवसाया द्रव्य एव सम्पद्यन्ते। अतो द्रव्यमेव शब्दवाच्यं विद्यते।

### (उ) न चैकमनेकाऽधिकरणस्थं युगपत्—

एकोऽयं देवदत्तो युगपत् पाटलिपुत्रे प्रयागे चाऽवस्थातुं नार्हति। यदि जातिः शब्दानामर्थः तर्हि तस्या एकत्वादनेकत्र युगपदुपलब्धिः न भवेत्। लोके च तथा व्यवहारः प्रतीतिश्च दृश्यते जातौ चैतन्न सम्भवति। अतो द्रव्यं पदार्थ इति ज्ञायते। यत एकेनोच्चारितेन एकस्यैव बोधो भवति।

### (ऋ) विनाशे प्रादुर्भावे च सर्वं तथा स्यात्—

एका सर्वत्रगा च जातिः भवति[4]। यदि सैव पदार्थः स्यात्तदा एकस्मिन् पदार्थे प्रादुर्भूते सर्वोऽपि स पदार्थः प्रादुर्भूतः स्यात्। एकस्मिन् विनष्टे च सर्वो विनष्टः स्यात्। श्वा मृत इत्यवगते श्वा नाम लोके न प्रचरेत्। गौर्जात इति वोक्ते च सर्वमपि गोजातमनवकाशमाप्नुयात्। द्रव्ये च पदार्थे यदुत्पन्नं तदतिरिक्तं सर्वमनुत्पन्नमेव। यद् वा द्रव्यं विनष्टं तदतिरिक्तं सर्वमविनष्टमेवेति व्यवहारः सम्पद्यते। द्रव्यपदेनाऽत्र सत्त्वभावमापन्नो विशेष्यभूतो वस्तुविशेष[5] उच्यते। तेनोक्तव्यवहारेषु काचित् क्षतिर्न जायते।

---

१. अष्टा०, ४।१।३।

२. अष्टा० १।२।६४।

३. यदसौ द्रव्यं श्रितो भवति भावः, तस्य भेदाद् द्विवचनबहुवचनानि भवन्ति। (अष्टा० १।२।६४, महाभा०)

४. नित्या जातिरेका सर्वत्रगा। (अष्टा० १।२।६४, महाभा० प्र०)

५. द्रव्यपदेन विशेष्यभूतः सत्त्वमापन्नोऽर्थ उच्यते। अष्टा०. ५।१।११९, महाभा०, प्र०।

## पाणिनीयः सिद्धान्तः

शब्दार्थविषये परस्परं विवदमानो वाजप्यायनो व्याडिश्चोपरि सम्यगस्माभिश्चर्चितः तन्मतञ्च प्रतिपादितम्। उक्ताचार्यद्वयविवादस्य निर्णयं पतञ्जलिः साऽधिकारमभ्यधात्। तेन शब्दार्थविषयकः पाणिनीयः सिद्धान्तो विज्ञायते। पतञ्जलिमते कश्चिदपि आकृतिपदार्थवादी 'द्रव्यं न पदार्थः' इति इदमित्थन्तया वक्तुं नार्हति।[1] न वा कश्चन द्रव्यपदार्थवादी एव 'आकृतिर्न पदार्थः' इति निश्चप्रचं वक्तुं समर्थः। एतत्तु अर्हति यदाकृतिपदार्थिकस्य आकृतिः प्रधानभूता भवेद् द्रव्यञ्च गुणभूतम्। द्रव्यपदार्थिकस्य च द्रव्यं प्रधानभूतं भवेद् आकृतिश्च गुणभूता। नहि आकृतिपदार्थवादी द्रव्यमन्यथा वक्तुं समर्थः, न वा द्रव्यपदार्थवादी आकृतिम्। एवञ्चोभयोः उभयं पदार्थो भवति।

जातेर्व्यक्तेर्वा पदार्थत्वे स्वीकृते व्यवहारे कश्चिद् फलभेदो न भवति। सामान्यप्रतिबद्धा हि व्यक्तिः कार्यं प्रतिपद्यते। व्यक्तिसमवेता च जातिः व्यक्तिद्वारेणैव कार्यभाग् भवति। 'स्वं रूप शब्दस्याऽशब्दसञ्ज्ञा[2]' इति सूत्रस्थं पातञ्जलं टीकमानेन कैयटेन एतदभ्यव्यज्यत[3]।

'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्[4]।' इति सूत्रे कात्यायनो जातिशब्देन द्रव्याऽभिधानं भवतीति सुष्पष्टं व्याचष्ट[5]। इममेवाऽभिप्रायं पतञ्जलिरपि शब्दान्तरेणाऽभ्यधात्[6]। जातिशब्देन न केवलं जातिरेवाऽभिधीयते, न वा द्रव्यशब्देन केवलं द्रव्यमेव। उभाभ्यामपि शब्दाभ्यां जातिरप्यभिधीयते द्रव्यमपि। गाः पश्यति वाहीके कश्चित् तं वाहीकं पृच्छति—'अस्त्यत्र काञ्चिद् गां पश्यसीति।' पश्यति चाऽयं प्रष्टा यदयं वाहिको गाः पश्यतीति, पृच्छति च 'पश्यसि काञ्चिद गामिति'। सत्यं तस्य प्रष्टुः जातिः विवक्षिता भवति। लोके यदा वक्तुः द्रव्यं विवक्ष्यते तदा स बहुवचनान्तं पदं प्रयुङ्क्ते—'पृथिव्यां सर्वमानवाः', 'पञ्च भूतानि' इत्यादि। यदा च सामान्यं विवक्षितं तदैकवचनान्तं पदं प्रयुङ्क्ते—'अभक्ष्यो ग्राम्यकुक्कुटः[7]', 'नाऽनृतं वदेत्[8]',

---

१. नहि आकृतिपदार्थिकस्य द्रव्यं न पदार्थः, द्रव्यपदार्थिकस्य आकृतिर्न पदार्थः। उभयोरुभयं पदार्थः। अष्टा० १।२।६४ महाभा०।

२. अष्टा०, १।१।६८।

३. व्यक्तिः कार्यं प्रतिपद्यमाना सामान्यप्रतिबद्धैव प्रतिपद्यते। सामान्यमपि कार्यं प्रतिपद्यमानं व्यक्तिद्वारेणैव प्रतिपद्यते इति फले न कश्चिद् भेदः। अष्टा० १।१।६८, महाभा० प्र०।

४. अष्टा०, १।२।५८।

५. जातिशब्देन द्रव्याऽभिधानम्। अष्टा० १।२।५८। वा० ६।

६. जातिशब्देन द्रव्यमप्यभिधीयते जातिरपि। अष्टा० १।२।५८, महाभा०।

७. अष्टा० महाभा०, पस्पशा०।

८. शत० ब्रा०, २।२।२।२०।

"सुरा न पेये'त्यादि जातिशब्देन गुणशब्देन वा यत्र जात्यर्थो गुणार्थो वाऽभिधीयते तत्र मूर्तिभेदो नाऽवबुध्यते। जातिशब्दाः जात्यर्थसम्बन्धं व्याचक्षते, गुणशब्दाश्च गुणाऽर्थसम्बन्धम्—

न जातिगुणशब्देषु मूर्तिभेदो विवक्षितः।
ते जातिगुणसम्बन्धाः भेदमात्रनिबन्धनाः[1] ॥

स्वयं पाणिनिराचार्यं उभयपदार्थपक्षे स्वसम्मतिं प्रादर्शयत्। जातिं शब्दार्थमभिमत्य 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्[2]।' इति सूत्रयाञ्चकार। द्रव्यं पदार्थञ्च संलक्ष्य 'सरूपाणामेकशेष एकविभक्तौ'[3] इत्यसूत्रयत् अस्मादेवाऽर्थविवादादात्मानं परित्रातुकामः पाणिनिः 'प्रधानप्रत्यार्थ-वचनमर्थस्यान्यप्रमाणत्वाद्'[4] इति सूत्रेण प्रधानप्रत्ययार्थवचने समकोचत्। वामनो जयादित्यश्च काशिकावृत्तौ[5] सूत्रस्थमन्यपदं लोकार्थकं व्याचष्ट। अवश्यं हि शब्दार्थविषये लोकव्यवहारस्य प्रामाण्यमभ्युपगन्तव्यम्। शब्दं प्रयुयुक्ष-माणाय लोकाऽनुसरणमावश्यकमिति कैयटोऽप्यभ्यधात्[6]।

शब्दार्थविषयकं मतभेदं व्याचक्षाणो हरदत्तः पाणिनिमुभयवादिनं स्वीचकार। केवलव्यक्तिपक्षे कथञ्चित् सम्बन्धग्रहो न सम्भवति, व्यक्तीनामानन्त्यात्। केवलजातिपक्षे च वाहदोहादिकं व्यक्त्याश्रितं कार्यमसम्भवि। अतः पतञ्जलिरिव हरदत्तोऽपि पाणिनीये तन्त्रे उभयमपि शब्दार्थं व्याचष्ट। तथा हि—

इह केषाञ्चिज्जातिः पदार्थः। गृहीततत्सम्बन्धो हि शब्दः अर्थं बोधयति, न चक्षुरादिवत्तन्निरपेक्षम्।—केषाञ्चिद् व्यक्तिः पदार्थः तत्रैव वाहदोहादिक-कार्यसम्भवात्।—पाणिनेस्तूभयम्[7]।'

## (३) गुणः पदार्थः

शब्दकाण्डे शब्दानां द्रव्यत्वगुणत्वपरीक्षणाऽवसरे गुणस्वरूपमस्माभिः सम्यगुपस्थापितम्। पराश्रयो भेदको व्यावर्तको वा यावान् जात्यादिरर्थः, स

---

१. वा० प०, ३।१४।४८८।
२. अष्टा०, १।२।५८।
३. अष्टा० १।२।६४।
४. अष्टा० १।२।५६।
५. अन्यो लोकः। अष्टा० १।२।५६, का० वृ०।
६. शब्दं प्रयुयुक्षमाणेन लोकस्याऽनुसरणात्। अष्टा० १।२।५६, महाभा० प्र०।
७ अष्टा० प्रत्या० सू० ५, का० वृ०, पदमं०।

सर्व इह गुणपदार्थत्वेन अभिप्रेत इति तत्रत्यो निष्कर्षः। गुणवाचकेन पदेन गुणार्थः अभिधीयते। प्रसङ्गादत्र गुणपदार्थः प्रस्तूयते।

अर्थकृतेन नाम शब्देन लोका भवन्ति[1]। यादृशोऽर्थो वक्तुरभिमतो भवति, तदभिव्यक्तये स तादृशं पदमुच्चारयति। नहि शब्दमुच्चार्य ततोऽर्थं वक्ता निर्धारयति। श्रोता तु शब्दं संश्रुत्यैवाऽर्थमभिगच्छति। यदा गुणविषयकं प्रवृत्तिनिमित्तं भवति, तदा वक्ता तदभिव्यक्तये गुणवाचकं पदमुच्चारयति। तस्य पदस्य गुण एवार्थः। गुणवाचकं पदं द्विविधं दृश्यते—

१. गुणमात्रवृत्ति,     २. गुणगुणिवृत्ति चेति[2]।

तत्र ये गुणमात्रवृत्तयो रूपादयः शब्दाः तेषां गुणमात्रमर्थः। यथा—'पटस्य रूपमित्यादौ।' ये तु गुणगुणिवृत्तयः तेषां गुणोऽप्यर्थो गुणी चाऽपि। यथा - पटस्य शुक्लं रूपमित्यत्र शुक्लपदं गुणपदार्थकं विद्यते, 'पटः शुक्लः' इत्यत्र च शुक्लपदं गुणिरूपमर्थमभिधत्ते।

गुणवृत्तिभ्यः शब्देभ्यो भावप्रत्यये गुणो वाच्यो भवति। यथा–पटस्य शुक्लत्वमित्यत्र भावप्रत्ययान्तेन शुक्लत्वपदेन शुक्लरूपो गुणार्थोऽभिधीयते। गुणवृत्तिभ्यः शब्देभ्यो भावप्रत्यये तु गुणसमवायि सामान्यमभिहितं भवति, यथा–रूपत्वमित्यादिभावप्रत्ययान्तेन पदेन रूपगताऽऽकृतिरभिधीयते। अणुमहद्दीर्घादयः शब्दा नित्यं परिमाणिवृत्तयः सन्ति[3]। तस्मात्तेषां परिमाणी एवाऽर्थः। यथा—अणु मनः, पटो दीर्घः, इत्येवमादि। अत एभ्यो भावप्रत्ययेऽणुत्वादिना भावप्रत्ययान्तेन पदेन परिमाणं गुणोऽभिधीयते। क्वचिच्च गुणवाचकपदप्रयोगं विनाऽपि गुणार्थो गम्यते। यथा–गोमन्तमानयेत्यादौ स्वस्वामिभावादिसम्बन्धः दण्डिनमानयेत्यादौ संयोगादिसम्बन्धः।

अत्रेदमवधेयम्—यत्र शब्दस्य स्वस्वामिभावादिसम्बन्धः प्रवृत्तिनिमित्तं भवति तत्रोपसर्जनस्य कार्ययोगो न दृश्यते। यथा—राजपुरुष आगच्छतीत्यत्रोपसर्जनत्वाद् राज्ञः पुरुषेण सह आगमनक्रियायां योगो न भवति। राजधान्यवस्थितेनाऽपि राज्ञा पुरुषस्य स्वस्वामिभावादिसम्बन्धः सम्भवति। यत्र तु समवायः संयोगो वा सम्बन्धः शब्दस्य प्रवृत्तिनिमित्तं भवति, तत्र तु उप-

---

१. नहि शब्दकृतेन नामाऽर्थेन भवितव्यम्। अर्थकृतेन नामशब्देन भवितव्यम्। अष्टा० २।१।१ महाभा०।

२. तेभ्यो गुणवृत्तिभ्यो गुणसमवायिनि सामान्ये भावप्रत्ययः। गुणवृत्तिभ्यस्तु गुणे। अष्टा० ५।१।११९, महाभा०, प्र०।

३. अणु-महद्दीर्घादयो नित्यं परिमाणिनि वर्तन्ते। अष्टा०, ५।१।११९, महाभा० प्रदीपः।

सर्जनस्यापि कार्ययोगो भवत्येव। यथा—'दण्डी आगच्छती'त्यत्र पुरुषेण सह दण्डस्याऽपि कार्ययोगो भवत्येव नहि गृहाऽवस्थितेन दण्डेन कदाचित् पुरुषो दण्डी उच्यते। हरदत्तः तदेवमाह—

'यत्र स्वस्वामिभावादिसम्बन्धः प्रवृत्तिनिमित्तम्, न तत्रोपसर्जनस्य कार्ययोगः…। यत्र संयोगसमवाययोः अन्यतरत् प्रवृत्तिनिमित्तं तत्र स्वभावादेवोपसर्जनस्यापि कार्ययोगः[1]।'

गुणिनं विना गुणाऽस्तित्वं नावलोक्यते। गुणिषु भेदको गुण एवाऽर्थः। गुणपदार्थेषु स्वतः कश्चिद् मूर्तिभेदो नाऽभिमतः। गुणपदं गुणाऽर्थेन सम्बन्धमात्रं ग्राहयति—

न जातिगुणशब्देषु मूर्तिभेदो विवक्षितः।
ते जातिगुणसम्बन्धाः भेदमात्रनिबन्धनाः॥[2]

## (४) क्रिया-पदार्थः

क्रियाशब्देभ्यः क्रियार्थोऽवगम्यते। पतञ्जलिमते धात्वर्थः क्रिया भवति[3]। क्रिया हि अनुमानसंवेद्या जायते। पिण्डीभूता क्रिया तु भाषाशास्त्रिभिरपि प्रदर्शयितुम् अशक्या विद्यते[4]। 'भूवादयो धातवः'[5] इति सूत्रं भाषमाणः पतञ्जलिः कारकाणां प्रवृत्तिविशेषं क्रियां व्याचष्ट[6]।

धातुः फलस्य व्यापारस्य च वाचकत्वेन स्मर्यते। प्रयुक्तया कयाचित् क्रियया एतत् सुस्पष्टमवगम्यते। पचतीत्युक्ते अन्नविक्लेदन-दर्विसंघट्टनादिरूपो व्यापारोऽवबुध्यते, पाकरूपं फलञ्चाऽप्यवगम्यते। अत एव भट्टोजिदीक्षितेन[7] फलव्यापारयोः वाचको धातुरिति व्याख्यातम्। परिनिष्ठितेन क्रियापदेन प्रतिपत्तुः फलात्मिका व्यापारात्मिका च प्रतीतिद्वयी स्पष्टं दृश्यते।

---

१. अष्टा०, १।१।२७, का०वृ० पदमं०।

२. वा० प०, ३।१४।४८८।

३. कः पुनः धात्वर्थः ? क्रिया। अष्टा०, ३।१।११५, महाभा०।
द्र०—अष्टा० ३।२।८४, महाभा०।

४. क्रिया नामेयमत्यन्ता परिदृष्टा। अशक्या क्रिया पिण्डीभूता निदर्शयितुम्।
अष्टा०, १।३।१ महाभा०।

५. अष्टा०, १।३।१।

६. कारकाणां प्रवृत्तिविशेषः क्रिया। अष्टा०, १।३।१, महाभा०।

७. फलव्यापारयोः धातुराश्रये तु तिङः स्मृताः।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्॥ वै०भू० धा० नि० का० १।

लिखतीत्युक्ते गृहीतलेखनीकस्य हस्तस्य सञ्चालनरूपो व्यापारो ज्ञायते, अङ्किताक्षररूपं फलञ्चाऽपि प्रतीयते। कालो व्यापारान्वयी भवति।[१] अत एव 'पचति रुद्रदत्तः, पक्ष्यति रुद्रदत्तः, अपाक्षीद्वा रुद्रदत्तः' इत्यादौ एक एव कर्ता विभिन्नकालिकया क्रिययाऽन्वेति। क्रियायां लिङ्गपुरुषादिभेदो बुद्धया परिकल्प्यते। क्रिया हि अव्यवच्छिन्नः प्रवाहो भवति। समेष्वपि पुरुषेषु समानाऽवगतिजनिका एकफलोद्देशेन प्रवृत्तानां क्रमवतां क्षणानां सङ्कलना-बुद्धया समासादितैक्यव्यवहारमूलिका क्रिया भवति।[२]

वाक्यपदीयं टीकमानो हेलाराजः परिस्पन्दस्वभावा क्रिया भवतीति लौकिकीं क्रियां पर्यभाषत।[३] परं स स्वयमेव स्वकृतं क्रियालक्षणमव्याप्तं स्वीचकार। यतो हि अस्तिविद्यतिप्रभृतिक्रियासु लक्षणमिदं कथञ्चिदपि न सङ्गच्छते।[४] न हि अस्त्यादिषु कश्चिद् परिस्पन्दः परिलक्ष्यते। पतञ्जलिकृतं क्रियाया लक्षणं सकलधातुव्यापकमस्तीति हेलाराजः कण्ठतः अन्वमोदत।

क्रियाया विस्तृतः पाणिनीयः परिचयोऽस्माभिः शब्दकाण्डे अनुशासनीय-शब्दस्वरूपनिरूपणायां सम्यक् प्रदर्शितः। सर्वमेतत् समीक्ष्य भर्तृहरिणा क्रियेत्थमुपवर्णिता—

यावत्सिद्धमसिद्धं वा साध्यत्वेनाऽभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेति प्रतीयते॥[५]

## ५. यदृच्छा पदार्थः

अर्थगतं प्रवृत्तिनिमित्तमनपेक्ष्य प्रयोक्त्र्यभिप्रायेणैव यदृच्छाशब्दः प्रवर्तते। यथा निर्धनस्य जनस्य लक्ष्मीपतिरिति नाम। अन्धस्य वा नयनसुख इत्य-भिधानम्। प्रायो हि सञ्ज्ञाशब्दा यदृच्छाशब्दा एव भवन्ति।[६] न हि सर्वेषु सञ्ज्ञापदेषु व्युत्पत्तिनिमित्तमेव प्रवृत्तिनिमित्तं सञ्ज्ञासु व्युत्पत्तिनिमित्तम् अन्यद् भवति, अन्यच्च प्रवृत्तिनिमित्तं भवति। व्यवहारलाघवाऽर्थं सञ्ज्ञा क्रियते।[७] वस्तुविशेष एव तस्य शब्दस्याऽर्थो भवति। अनुकरणशब्दानाम्

---

१. वर्तमाने लट्। अष्टा०, ३।२।१२३।
२. गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्धया प्रकल्पिताऽभेदः क्रियेति व्यपदिश्यते॥ वा० प०, ३।८।४।
३. परिस्पन्दस्वभावा लोके क्रिया प्रसिद्धा। वा०प०, ३ कां० क्रि०समु० १, हेला०।
४. अस्ति भवति विद्यतीनाञ्च न परिस्पन्दस्वभावोऽर्थं इति
सकलधातुव्यापकं क्रियालक्षणं भाष्ये प्रणीतम्। वा०प० ३ कां०, क्रि०सं० १, हेला।
५. वा० प० ३ कां०, क्रि०स० १।
६. देवदत्तशब्दो यदृच्छाशब्दः। अष्टा०, १।२।५८, का० वृ० न्या०।
७. सञ्ज्ञा च नाम यतो न लघीयः। कुत एतत्? लघ्वर्थं हि सञ्ज्ञाकरणम्। अष्टा०, १।१।२७, महाभा०।

अपि अनुकार्यस्वरूपमात्रार्थकत्वेन यदृच्छाशब्दत्वम् । यथा— ऋतकशब्दे प्रयोक्तव्येऽशक्त्या कश्चिद् लृतकशब्दम् उच्चारयति । ऋतकशब्दः प्रयोक्त्रा ऽर्थमाश्रित्य प्रयुक्तः । अतः स लृतकशब्दस्याऽनिवर्तक एव ।[१] लृतकशब्दस्य तु ऋतकशब्द एवाऽर्थः ।

## भर्तृहरिकृतोऽर्थभेदः

वाक्यपदीयस्य द्वितीये काण्डे भर्तृहरिणा विस्तृतं विचारितम् । अर्थभेदमाश्रित्य भर्तृहरिणा द्वादश मतानि उल्लिखितानि तद् विलोक्य तदानीन्तनी अर्थविषयिका सूक्ष्मा गवेषणा सुतरां प्रतीयते । अर्थविज्ञानक्षेत्रे भर्तृहरेः तत्प्रतिपादनं महत्त्वपूर्णं विद्यते । तानि मतान्यत्र विव्रियन्ते ।

### १. निराकारोऽर्थः शब्दानाम् —

सर्वैः शब्दैरपरामृष्टाकारविशेष एव अर्थोऽभिधीयते । एतत् सर्वेषां शब्दानां वाच्यस्य लक्षणमस्तीति केचनाचार्या मन्वते ।[२] यथेश्वरजीवादिशब्दैः कश्चिदाकारो नाऽवबुध्यते तथा गवादिपदैरपि निराकार एवार्थः प्रतीयते । अभिधेयरूपेण निराकारेणार्थेन सम्प्रतीतो बाह्यो वस्त्वर्थो व्यवहारं सम्पादयति । यस्तु लोके कैश्चिच्छब्दैराकाराऽवग्रहो दृश्यते, सोऽभ्यासात् सम्प्रतीयते ।[3] तस्मादेवाकृतयत्नो जनः शब्देन गृहीतशक्तिकोऽपि शब्दं संश्रुत्य कञ्चनाऽपि आकारं नाऽभिलक्षयति ।

स्वयं पतञ्जलिनाऽऽचार्येण अर्थानां बौद्धत्वम् अभ्युपगतम् ।[४] वक्तुः बुद्धिस्थेनाऽर्थेन श्रोतुः बुद्धिस्थः अर्थः प्रस्फुटितो भवति । अत एवाऽसत्यपि बाह्येऽर्थे शब्दैरर्थाऽभिधानं दृश्यते । अन्यथा तादृशैः शब्दैः कश्चनाऽर्थो नाऽवबुध्येत । उक्तेन निराकारार्थविषयकमतेन सह पतञ्जलेः बौद्धार्थमतस्य सामञ्जस्यं सङ्गच्छते। शब्दं प्रतिभाहेतुं स्वीकुर्वाणोऽपि भर्तृहरिरभ्यासं शक्तिग्रहे कारणं मनुते ।[५]

---

१. ऋतकशब्दस्तु अर्थाश्रयणेनैव विनियुक्त इति लृतकशब्दस्य अनिवर्तकः ।
अष्टा० प्रत्या० सू० २ । महाभा० । प्र० ।

२. अस्त्यर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणम् ।
अपूर्वदेवतास्वर्गैः सममाहुर्गवादिषु ॥ वा० प०, २।१२१ ।

३. प्रयोगदर्शनाभ्यासादाकाराऽवग्रहस्तु यः ।
न स शब्दस्य विषयः स हि यत्नान्तराश्रयः ॥ वा० प० २।१२२ ।

४. बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तन्वन्नीतिः ।
शब्देनाऽर्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात् पौर्वापर्यम् ॥ अष्टा० १।४।१०९ महाभा० ।

५. अभ्यासात् प्रतिभा हेतुः शब्दः सर्वो परैः स्मृतः । ......वा० प० २।११...

अतोऽभ्यासादेवाऽर्थेषु आकारस्याऽध्याहारो पदार्थेषु आकारप्रतीतिर्भवति ।

एतत् समीक्ष्यैवाऽर्थतत्त्वविद्भिः वस्त्वर्थाच्छब्दार्थस्य पार्थक्यं व्याख्यातम् ।[१] व्याकरणशास्त्रे अनुशासनीयेनाऽर्थतत्त्वेनाऽभिधेयरूपः शब्दार्थ एवाऽभिप्रेतः, न तु वस्त्वर्थः । शब्दार्थो बौद्धो भवति, वस्त्वर्थस्तु बाह्यो भवति । अभिधेयरूपेणाऽर्थेन शाब्दो व्यवहारः सम्पद्यते । वस्त्वर्थेन च लौकिको व्यवहारः साध्यते । अभिधेयरूपे शब्दार्थे वाहदोहादिलौकिको व्यवहारः सर्वथा सम्भवी एव । वस्त्वर्थः शाब्दबोधस्य विषयो न भवति ।[२] अतोऽभिधेयोऽर्थो निराकारो भवतीति स्वीक्रियते ।

२. साकारोऽर्थः शब्दानाम्—

केचनाऽऽचार्याः साकारमर्थम् अभ्युपगच्छन्ति ।[३] कांश्चिदाकारान् शब्दः प्रत्याययति, केचन चाकारा जात्यादिषु अविनाभावेन सन्तिष्ठन्ते । शब्दः तानपि व्यक्तिभेदान् बोधयति । भर्तृहरिणा मतमिदं प्रत्याख्यातम् ।[४] भर्तृहरिमते जातिशब्दा जातिमात्रमर्थं बोधयन्ति । व्यक्तिस्तु तत्राऽऽनुषङ्गिणी भवति, निरधिकरणाया जातेरसम्भवात् । तद्व्यक्तिगतानाकारभेदान् जातिशब्दो नाऽवलम्बते । अतो जातिशब्दानां जातिमात्रमेवाऽर्थः । जातेः निराकारत्वाद् भर्तृहरिः केषाञ्चनाचार्याणां साकारार्थविषयकं मतं नाऽनुमनुते । किञ्च वस्तुवाचको घटादिशब्दोऽपि तदाकाराणां प्रत्यायको न भवति ।[५] यतो ह्याकारो वस्तुमात्रसंनिवेशी विद्यते । बुद्धिकृतपौर्वापर्येणैव आकारोऽभिलक्ष्यते । अतः शब्दानामर्थः साकार एवेति इदमित्थन्तया वक्तुं न शक्यते ।

३. आकाराऽऽकारवन्तावित्युभयं शब्दार्थः —

जातेः व्यक्तेश्च शब्दार्थत्वं व्याचक्षाणस्य पतञ्जलेर्मतमस्माभिः प्रागेवोपन्यस्तम् । यत्राकृतिः प्रधानभूता भवति, तत्र व्यक्तिः गुणभूता । यत्र चाऽर्थे

---

१. नाऽत्र शब्दार्थो निरूप्यते, अपि तु वस्त्वर्थः । वा० प०, ३।८।१ हेला० ।

२. बाह्यः पदार्थो न शाब्दबोधे विषयः, किन्तु बौद्धः ।
अष्टा० महाभा०, पस्पशा०, प्र० उद्द्यो० ।

३. केचिद् भेदाः प्रकाश्यन्ते शब्दैस्तदभिधायिभिः ।
अनुनिष्पादिनः कांश्चिच्छब्दार्थं इति मन्यते ॥ वा० प०, २।१२५ ।

४. जातिप्रत्यायके शब्दे या व्यक्तिरनुसङ्गिणी ।
न तान् व्यक्तिगतान् भेदान् जातिशब्दोऽवलम्बते ॥ वा० प०, २।१२४ ।

५. घटादीनां न चाकारान् प्रत्याययति वाचकः ।
वस्तुमात्रनिवेशित्वात्तद्गतिर्नान्तरीयकी ॥ वा० प०, २।१२३।

व्यक्तेः प्राधान्यं विवक्ष्यते तत्र जातिः गुणभावं भजते। तन्मतम् एवाऽत्र भर्तृहरिणाऽनूदितम्। भर्तृहरेरनुसारेणाकारः क्वचिद् गुणभूतः, क्वचिच्च प्रधानभूतः।[1] जातौ पदार्थे गुणभूतः, व्यक्तौ च प्रधानभूतः। भर्तृहरिमतं प्रतिपादयन् पुण्यराजः सर्वानेवाऽऽकारान् गुणप्रधानभावेन पदस्याऽर्थानवोचत।[2]

### ४. समुदायोऽर्थः शब्दानाम्–

केचिदाचार्या अवयविनमर्थं व्याचक्षते। शब्दा अविकल्पितमसमुच्चितञ्च समुदायमभिदधत[3] इति तेषामाशयः। यदि आकारसमुदायं समुच्चितमेव प्रत्याययेच्छब्दस्तदाऽवयवबाहुल्याद् बहुवचनमापद्येत। शब्दः कदाचिदवयविनं कदाचिच्च समुच्चितं समुदायमभिदध्यादिति विकल्पिते तु कदाचिदेकवचनं कदाचिच्च बहुवचनमिति व्यवस्थाहानिः स्यात्। अतो विकल्पसमुच्चयः समुदायः शब्दाऽभिधेयः।

### ५. संसृष्टः शब्दार्थः –

गवादिभिः शब्दैः गवादीनां जात्यादिसंसर्ग उच्यते[4]। वस्तुनिर्देशदृष्ट्या त्रिविधानां[5] चतुर्विधानां[6] शब्दानां त्रिविधश्चतुर्विधो वाऽभिधेयोऽभिमतः, जातिः, गुणः, क्रिया, यदृच्छा (व्यक्तिः) च। तत्र शब्दैः घटादिवस्तूनां जात्याद्यभिधेयसंसर्गः बोध्यते। अतः संसर्गविशिष्टः पदार्थः शब्दाऽभिधेयः इति अन्येषामाचार्याणामाशयः।

### ६. असत्योपाधि सत्यं पदार्थः —

अयथार्थोपकरणैराच्छिन्नं यथार्थमर्थं शब्दा अभिदधतीति[7] परैराचार्यैः स्वीक्रियते। सम्भवत एतदेवाधृत्य कैयटः सर्वेषां शब्दानां वाच्यं ब्रह्मतत्त्वं व्याचष्टे।[8] आचार्यो रामानुजोऽपि सर्वेषां शब्दानामभिधेयं परमात्मानं स्वीकुरुते।[9] भर्तृहरिवाक्यं टीकमानः पुण्यराजोऽसत्योपाधिविचित्रितं सत्यं

---

१. नियतास्तु प्रयोगा ये नियत यच्च साधनम्।
तेषां शब्दाभिधेयत्वमपरैरनुगम्यते ॥ वा० प०, २।१२७।

२. सर्वे एवाकाराः गुणप्रधानभावेन पदस्याऽर्थः। वा० प०, २।१२७, पुण्य०।

३. समुदायोऽभिधेयः स्यादविकल्पसमुच्चयः। ......वा० प० २।१२७।

४. असत्यो वाऽपि संसर्गः शब्दार्थः कैश्चिदिष्यते। वा० प० २।१२८।

५. त्रयी शब्दानां प्रवृत्तिः।...न सन्ति यदृच्छाशब्दाः। अष्टा० महाभा०, आ० २।

६. चतुष्टयी शब्दानां प्रवृत्तिः। अष्टा० महाभा०, आ० २।

७. असत्योपाधि यत्सत्यं तद्वा शब्दनिबन्धनम्। वा० प०, २।१२८।

८. सर्वे शब्दाः परमात्मन एव वाचकाः। तत्त्व०मुक्तावली, ४।८२।

९. सत्यमेवाऽसत्योपाधिविचित्रितं शब्दवाच्यम्। वा० प०, २।१२८ पुण्य०।

पदार्थ इत्येवं सिद्धान्तमिमं व्याचष्ट ।

७. शब्दस्वरूपं शब्दस्याऽर्थः—

बुद्धिद्वयोरैक्यापादनं वाचः प्रयोजनमिति शब्दकाण्डे शब्दस्वरूपनिरूपणायां सम्यगुपपादितम् । बौद्धेन शब्देन बौद्धोऽर्थोऽभिव्यज्यते । वक्तृस्था बुद्धिः श्रोतृस्था सती अर्थो भवति । एवञ्च शब्दार्थयोः अभेदाद् य एव शब्दः स एवार्थ इति शब्दतत्त्वविद्भिरुच्यते । शब्दरूपमर्थश्च इति उच्चरितस्य शब्दस्य स्वरूपद्वयं पतञ्जलिनाऽपि प्रतिपादितम् ।[1] अतः शब्दस्य स्वरूपं शब्दाऽभिधेयोऽस्तीति[2] वहव आचार्या अभ्युपगच्छन्ति । अभिधेयरूपादर्थादभिन्नरूपः शब्दोऽर्थं प्रत्यायतीत्याशयः । आंशिकसत्याऽभिधायी पक्षोऽयम् ।

८. असर्वशक्तिमानर्थः शब्दस्य—

९. शब्दमाहात्म्योपस्थापितश्चार्थः—

अर्थनिमित्तकं शब्दं स्वीकुर्वाणः पतञ्जलिः केषाञ्चिद् आचार्याणाम् 'शब्दनिमित्तकोऽर्थः' इति मतमनूद्य प्रत्याचख्यौ ।[3] तदेव प्रत्याख्यातं मतमिह भर्तृहरिणोपवर्णितम् । एतन्मतरीत्या असर्वशक्तिरर्थो भवति ।[4] अर्थावगत्यर्थं शब्दः प्रयुज्यते ।[5] शब्दप्रयोगं विना श्रोतुरर्थावधारणमसम्भव्येव । अतोऽर्थाऽवगतिः शब्दाधीना एवेति असर्वशक्तिमत्त्वमर्थस्योच्यते । पुण्यराजेन मतमिदमित्थमुपवर्णितम्—

"शक्त्यर्थः कदाचित् क्रियारूपतयाऽभिधीयते, कदाचित् सिद्धरूपतयेति नियता क्रियादिरूपता शब्दार्थतया प्रतिपाद्यते ।[6]

असर्वशक्तिमानर्थ इव शब्दमाहात्म्योपस्थापितः पदार्थोऽपि भवति ।

१०. बौद्धः शब्दार्थः—

बौद्धेनार्थेन वक्तुः श्रोतुश्च परस्परं व्यवहारः सम्पद्यते । यदा यदा श्रोता

---

१. अस्त्यन्यद् रूपात् स्वं शब्दस्येति । किं पुनस्तत् ? अर्थः । अष्टा०, १।१।६८, महाभा० ।

२. शब्दो वाऽप्यभिजन्यत्वमागतो याति वाच्यताम् । वा०प०, २।१२९ ।

३. नहि शब्दकृतेन नामाऽर्थेन भवितव्यम् । अर्थकृतेन नाम शब्देन भवितव्यम् ।
अष्टा०, २।१।१, महाभा० ।

४. अशक्तेः सर्वशक्तेर्वा शब्दैरेव प्रकल्पिता ।
एकस्यार्थस्य नियता क्रियादिपरिकल्पना ॥ वा०प०, २।१३३ ।

५. अर्थगत्यर्थः शब्दप्रयोगः । अर्थं सम्प्रत्याययिष्यामीति शब्दः प्रयुज्यते ।
अष्टा०, २।१।१, महाभा० ।

६. वा०प०, २।१३३, पुण्य० ।

शब्दं शृणोति तदा तदा तस्य अर्थाकारा बुद्धिरुपजायते ।[1] अतो बुद्धिगत एवाऽर्थः शब्दानामप्यर्थं—इति कैश्चिदाचार्यैरभ्युपगम्यते ।[2] वक्ता स्वबुद्धौ यमर्थं परिकल्पयति, अभिव्यञ्जकशब्देन श्रोतृबुद्धौ सोऽर्थः परिस्फुटति । यतो बुद्धिप्रतिभासः शब्दार्थो भवति । पतञ्जलिना वक्तुः श्रोतुश्च परस्परं बुद्धिकृतं पौर्वापर्यमित्थमुपवर्णितम्—

बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तन्वन्नीतिः ।
शब्देनाऽर्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात् पौर्वापर्यम् ।।[3]

बाह्ये जगति विभिन्नरूपेण परिदृश्यमानः वस्त्वर्थः बुद्धौ एकत्वेनाऽभिन्नरूपः सन्तिष्ठते ।[4] स एव चोच्चरितेन शब्देन बोध्यते । शब्दानां कश्चिद् बाह्योऽर्थो न भवति, अपि तु बुद्ध्युपारूढ एवाऽर्थो वक्त्राऽभिव्यज्यते, श्रोत्रा च परिगृह्यते इति पुण्यराजेन सिद्धान्तोऽयं व्याख्यातः ।[5] बौद्धोऽर्थोऽन्यैरपि भाषाशास्त्रिभिरनुमन्यते ।

११. साकारो निराकारश्च शब्दार्थः—

शब्दार्थविषये साकारार्थवादिनां निराकारार्थवादिनाञ्च मतमस्माभिरतः प्राग् व्याख्यातम् । एतन्मतानुसारेण केषाञ्चन शब्दानामाकारविशेषोऽर्थः, केषाञ्चन शब्दानाञ्च संविन्मात्रमर्थः । प्रायो हि बालैरज्ञतमैश्च संवेदनामात्रम् अर्थोऽवबुध्यते । गवादिशब्दैरुच्चारितैः सास्नालाङ्गूलादिमदादिराकारविशेषोऽर्थोऽवबुध्यते । संविन्मात्रावबोधकैः ईश्वरजीवादिशब्दैस्तु निराकारः संवेदनाविशेष एवाऽर्थो जनैः ज्ञायते[6] । अतः शब्दार्थः साकारो निराकारश्च स्वीक्रियते कैश्चिदाचार्यैः । वस्तुमात्रज्ञानात्मकं निर्विकल्पकं ज्ञानं संविन्मात्रं ज्ञानमुच्यते । प्रायः प्रौढानां ज्ञानं सविकल्पकमेव जायते । मनोवृत्तिसंयमात् संविन्मात्रं ज्ञानं सम्भवति ।

१२. अनियतः शब्दार्थः—

भर्तृहरिणोपवर्णितेषु मतेषु मतमिदम् अर्थभेदविषयकमन्तिमं विद्यते ।

---

१. बुद्धिप्रतिभासः शब्दार्थः । यदा यदा शब्द उच्चरितः, तदा तदाऽर्थाकारा बुद्धिरुपजायते । अष्टा०, महाभा०, पस्पशा० ।

२. यो वाऽर्थो बुद्धिविषयो बाह्यवस्तुनिबन्धनः ।
स बाह्यवस्त्विति ज्ञातः शब्दार्थः कैश्चिदिष्यते ॥ वा० प० २।१३४ ।

३. अष्टा०, १।४।१०९, महाभा० ।

४. प्रज्ञायां सर्वाणि भूतानि एकं भवन्ति । कौ० ब्रा० उ०, ३।४ ।

५. बुद्ध्युपारूढ एव शब्दस्यार्थो न बाह्यः । वा० प० २।१३४, पुण्य० ।

६. आकारवन्तः संवेद्या व्यक्तस्मृतिनिबन्धनाः ।
ये ते प्रत्यवभासन्ते संविन्मात्रं त्वतोऽन्यथा ॥ वा० प० २।१३५ ।

एतन्मताऽनुसारेण शब्दस्य कश्चनाऽपि अभिधेयो नाऽस्ति। श्रोतुः वासनावासितं मनोऽर्थं निश्चिनोति। यथेन्द्रियमविपरीतमप्यर्थं करणवैकल्यादिदोषवशाद् नानारूपमवभासयति तथा नियतवासनावासितचेतसां शब्दार्थप्रतीतिरपि तथैव भवति[1]। कश्चिन्नियतः शब्दार्थो निश्चेतुं न शक्यते। अतएव एकेनैव शब्देन कश्चित् कञ्चनाऽर्थं प्रत्येति, कश्चिच्च अन्यम्। एतन्मताऽनुसारेणैव कैयटः 'सर्वे सर्वार्थवाचकाः' इति स्वीकृत्य 'सर्वे शब्दाः सर्वानर्थान् वक्तुं समर्थाः, सर्वे चाऽर्थाः सर्वैः शब्दैः प्रत्येतुं शक्याः' इति समाचष्ट[2]। अतएव देवदत्तादिसंज्ञाशब्दा नियमार्था उच्यन्ते।[3] अन्यथा देवदत्तादिशब्देन यज्ञदत्तादिपिण्डस्याऽप्यवगतिरापद्यते।[4] नागेशेन नियमस्वरूपमिदमित्थमुपवर्णितम्—

अनेन शब्देनाऽयमेवाऽर्थो ग्राह्यः।
अयमर्थोऽनेनैव शब्देन बोधनीयः।[5]

## पुण्यराजकृतोऽर्थविभागः

पुण्यराजकृतोऽर्थविभागो भाषातत्त्वदृष्ट्याऽतीव महत्त्वपूर्णो विद्यते। पुण्यराजेनाऽष्टादशविधानामर्थानाम् उल्लेखो विहितः।[6] अर्थविज्ञानक्षेत्रे तद्विभागस्याऽद्याऽपि वैशिष्ट्यमङ्गीक्रियते। सर्वोऽप्यर्थजातः पुण्यराजेन पूर्वं द्वेधा प्रविभक्तः— १. वस्तुमात्रम्, २. अभिधेयश्च। ततोऽभिधेयरूपोऽर्थो नानारूपेण प्रविभक्तः। तदत्र संक्षेपतो नामनिर्देशपुरःसरं विविच्यते।

### १. वस्तुमात्रम् —

अर्थो यावच्छब्दवाच्यतां नायाति तावत् सर्वोऽपि अर्थजातो वस्तुमात्रमभिधीयते। बाह्यो बौद्धो वाऽर्थः सद्रूपेण वर्तमानः शब्दैरप्रतिपाद्यमानः सन् वस्तुमात्रं भवति। एवञ्च शब्दाऽतिरिक्तैरन्यैः ज्ञानकरणैः ज्ञायमानोऽपि अर्थो वस्तुमात्रमेव विद्यते, शब्देनाऽप्रतिपाद्यमानत्वात्।[7] अत्र शब्दार्थविवेच-

---

१. यथेन्द्रियं सन्निपतद्वैचित्र्येणोपदर्शकम्।
तथैव शब्दादर्थस्य प्रतिपत्तिरनेकधा॥ वा० प० २।१३६।

२. द्र०—अष्टा० महाभा०, पस्पशा०, प्र०।

३. देवदत्तादिसञ्ज्ञाशब्दा नियमार्था इति सिद्धान्तः।
अष्टा० १।१।६८, महाभा० प्र०।

४. सर्वार्थप्रत्यायनशक्तियुक्तो हि शब्दः, सर्व-शब्दप्रत्याय्यशक्तिश्चाऽर्थं इति व्यवहाराय नियमः क्रियते। अष्टा०, १।१।६८, महाभा०, प्र०।

५. अष्टा०, १।१।६८, महाभा० प्र०, उद्द्यो०।

६. अर्थोऽष्टादशधा। तत्र वस्तुमात्रमभिधेयश्च। वा०प० २।८१ पुण्य०।

७. तत्र वस्तुमात्रं बाह्यार्थो यो वक्तुः प्रतिपादयितुं न समीहितः। वा० प० २।८१, पुण्य०।

नायां वस्तुमात्रमर्थो नाऽधिक्रियते, यथा अभिनयदिदृक्षायामुत्पन्नायामपि अन्धो दर्शने नाऽधिक्रियते ।

**२. अभिधेयः—**

वस्तुमात्रामेवाऽर्थो यदा शब्दैः प्रतिपाद्यमानो भवति तदासौऽभिधेय उच्यते।[१] स एवाऽर्थो वाच्यः बोध्यो वेत्यादि नामभाग् भवति । अभिधेय एवाऽर्थे शब्दस्याऽधिकारः स्वीक्रियते । द्विविधो ह्यभिधेयोऽर्थः स्वीकृतः[२]— १. शास्त्रीयः, २. लौकिकश्च ।

**३. शास्त्रीयः—**

पदानामवापोद्वापाभ्यामधिगतः, प्रकृतिप्रत्ययप्रविभागपुरःसर वा प्राप्तोऽर्थः शास्त्रीय उच्यते।[३] यतः प्रकृत्यर्थस्य प्रत्ययार्थस्य चाऽवगतिः शास्त्रेणैव समधिगम्यते। शास्त्रीयार्थस्य लौकिकोपयोगो नैव दृश्यते । लौकिका हि प्रायः शास्त्रीयमर्थं नाऽवधारयन्ति । अतः शास्त्रीयेऽर्थे पुण्यराजः शब्दस्याऽधिकारं नाऽनुमनुते । शास्त्रीयस्याऽर्थस्यादिमः कश्चनाचार्यः प्रयोक्ता भवति । ततो गृहीतसङ्केता अन्ये प्रतीयन्ति । शास्त्रीयोऽर्थः साम्प्रदायिको विद्यते ।

**४. लौकिकः—**

लौकिकोऽर्थो वाक्यात्मकेन शब्देनाऽभिव्यज्यते । वक्ताऽर्थविशेषमभिव्यङ्क्तुं शब्दान् प्रयुङ्क्ते । श्रोता तान् शब्दान् संश्रुत्याऽर्थविशेषमधिगच्छति। अत एवाऽखण्डं लौकिकार्थं स्वीकुरुते पुण्यराजः ।[४] लौकिके एवाऽर्थे शब्दस्याऽधिकारः स्मर्यते ।

**५. विशिष्टाऽवग्रहसम्प्रत्ययहेतुः—**

'कंसं घातयति, बलिं बन्धयति, कर्णो विजयते' इत्येवमादिविशिष्टाऽवग्रहसम्प्रत्ययहेतोरर्थस्योदाहरणम् । पूर्वं कदाचित्तथाभूतोऽप्यर्थः साम्प्रतमतथाभूतो विशिष्टाकारेणैव सम्प्रत्ययेन प्रत्यवभासमानो व्यवहारे समापद्यते ।[५]

---

१. यस्तु (वक्तुः प्रतिपादयितुं) समीहितोऽसावभिधेयः । तत्रैव च शब्दस्याधिकारः ।
वा० प० २।८१, पुण्य० ।

२. स च द्विधा—शास्त्रीय-लौकिकभेदेन । वा०प०, २।८१ पुण्य० ।

३. तत्र शास्त्रीय आवापोद्वापोद्धारिक ।……शास्त्रीयो हि पौरुषेयः परिकल्पितः ।
वा० प० २।८१, पुण्य० ।

४. लौकिकस्त्वखण्डः । लौकिके चाऽर्थे शब्दस्याऽधिकारः न शास्त्रीये । वा०प०, २।८१ पुण्य० ।

५. अत्र ह्यर्थो न तथा भूतोऽपितु विशिष्टाऽऽकारेणैव सम्प्रत्ययेन गोचरीकृतो व्यवहारविषयतामवतरति । वा०प०, २।८१ पुण्य० ।

सर्वोऽपि ऐतिहासिकोऽर्थो विशिष्टाऽवग्रहसम्प्रत्ययहेतुरेव जायते । अत्राऽविद्यमानोऽप्यर्थो बौद्धसत्तामादाय विद्यमान इवाऽवबुध्यते ।

६. तद्विपरीतः—

विशिष्टावग्रहसम्प्रत्ययहेतोरर्थाद् विपरीतोऽर्थः तद्विपरीतोऽभिमतः । अत्राऽर्थः काल्पनिकोऽतथाभूतो वा न भवति । सर्वोऽपि तथाभूतोऽर्थः तद्विपरीतः कथ्यते ।[1] गौः शुक्ल इत्याद्यत्रत्यमुदाहरणम् ।

७. मुख्यः—

अभिधयाऽवगतोऽर्थो मुख्यो भवति । यत् प्रवृत्तिनिमित्तमाश्रित्य यः शब्दः प्रवृत्तः, शब्दे उच्चरिते च तस्मिन्नेवाऽर्थेऽवगते, सोऽर्थो मुख्यो भवति । यथा—सास्नालाङ्गूलादिमत् पिण्डविशेषं प्रवृत्तिनिमित्तम् आश्रित्य गौशब्दो लोके प्रवृत्तः । अतः सोऽर्थो गोशब्दस्य मुख्यार्थो निगद्यते ।[2]

८. परिकल्पितरूपविपर्यासः—

लक्षणया व्यञ्जनया च वृत्त्याऽधिगतोऽर्थः परिकल्पितरूपविपर्यासः स्मर्यते । यत् प्रवृत्तिनिमित्तम् उपादाय यः शब्दो लोके प्रवृत्तः, तद्विहाय यदि स शब्दोऽन्यत् प्रवृत्तिनिमित्तमभिधत्ते, आहोस्वित् तत्प्रवृत्तिनिमित्तसम्बद्धमर्थं व्यनक्ति, तथा सोऽर्थः तस्य शब्दस्य परिकल्पितरूपविपर्यासो जायते । यतः तस्मिन् शब्दार्थे विपर्यासः स्वीक्रियते, अतोऽन्वर्थेयं सञ्ज्ञा । सास्नालाङ्गूलादिमदर्थरूपं प्रवृत्तिनिमित्तमाश्रित्य गोशब्दो लोके प्रवृत्तः । 'गौरयं वाहीक' इत्यत्र च गोशब्दः तमर्थं विहाय मौर्ख्यादिगुणकं पुरुषविशेषं भावमभिव्यनक्ति । अतोऽभिव्यक्तो गोशब्दस्याऽपरोऽर्थः परिकल्पितरूपविपर्यासो भवति । परिवृत्तो विकसितश्चाऽप्यर्थोऽस्यैव परिकल्पितरूपविपर्यासस्यैव भेदः । एवञ्च गौणोऽर्थः परिकल्पितरूपविपर्यासः समाख्यातुं शक्यते ।[3]

९. व्यपदेश्यः—

व्यपदेश्यमेवाऽर्थम् आवापोद्धारिकमपि पुण्यराजो व्याजहार ।[4] यस्या-

---

१. तद्विपरीतो यो बहिरेव तथा व्यवस्थितः । वा०प०, २।८१, पुण्य० ।

२. मुख्यो यथा सास्नादिमान् गौरिति । वा०प०, २।८१, पुण्य० ।

३. परिकल्पितो निमित्तवशेन रूपविपर्यासो यस्यासौ परिकल्पितनिमित्तरूपविपर्यासो गौणोऽर्थ उच्यते । वा०प०, २।८१, पुण्य० ।

४. व्यपदेश्य आवापोद्धारिक एव जातिर्वा द्रव्यं वेत्येवमुक्त इति ।······सत्त्वभावमापन्नो व्यपदेश्य एवावापोद्धारिकसंज्ञकः । वा०प०, २।८१, पुण्य० ।

ऽर्थस्य व्याख्यानं प्रत्यायनं वा सुगमो भवति सोऽर्थो व्यपदेश्यो व्यपदिश्यते। प्रायो बाह्यसत्ताकोऽर्थो व्यपदेश्यो भवति। द्रव्यादिकमस्योदाहरणम्।

**१०. अव्यपदेश्यः—**

बहिरिन्द्रियैरदृश्योऽगम्यो वाऽर्थो व्यपदेश्यो निगद्यते। पुण्यराजो वाक्यार्थलक्षणमखण्डमर्थमव्यपदेश्यम् आह। स चाऽसत्त्वभूतो भवति।[1]

**११. सत्त्वभावापन्नः—**

उपरि वर्णितोऽव्यपदेश्य एवार्थः सत्त्वभावापन्नः स्मृतः।[2]

**१२. असत्त्वभूतः—**

उपर्युक्तो वाक्यार्थलक्षणोऽखण्डोऽव्यपदेश्य एवार्थः असत्त्वभूतो व्याख्यातः।[3]

**१३. स्थिरलक्षणः—**

आकाङ्क्षादिसम्प्राप्तोऽव्यभिचरितोऽर्थः स्थिरलक्षणः अर्थो भवति। राजपुरुष इत्यत्र पुरुषपदं स्थिररूपेण राजसम्बन्धिनमेव पुरुषं प्रत्याययति। अत्रत्यः स्वस्वामिभावसम्बन्धः आकाङ्क्षयाऽवभासते।[4]

**१४. विवक्षाप्रापितसन्निधानः—**

विवक्षादिवैचित्र्याद् व्यभिचरितोऽर्थो विवक्षाप्रापितसन्निधानो भवति। यथा—राज्ञः पुरुषस्य। अत्र हि विशेष्यविशेषणयोः यथेष्टत्वाद् निश्चितोऽर्थो नाऽस्ति। अतोऽत्र सम्बन्धित्वं व्यभिचरति।[5]

**१५. अभिधीयमानः—**

शब्देन योऽर्थः साक्षादभिधीयते सोऽर्थोऽभिधीयमानो भवति। राजसखे-

---

१. अव्यपदेश्यस्त्वखण्डः एव वाक्यार्थलक्षण इति। वा० प०, २।८१, पुण्य०।

२. असत्त्वभूतो वाक्यार्थलक्षण एव। वा०प०, २।८१, पुण्य०।

३. द्र०—वा०प०, २।८१, पुण्य०।

४. विवक्षाप्रापितसन्निधानो यथा—राज्ञः पुरुषस्येति। अत्र हि सम्बन्धित्वं व्यभिचरति। वा०प० २।८१ पुण्य०।

५. द्र०—वा०प०, २।८१, पुण्य०।

त्यत्र राज्ञः सखेत्यर्थः साक्षादभिधीयते ।[1]

१६. प्रतीयमानः—

अनुमेयोऽर्थो निष्कर्षप्राप्तव्यो वाऽर्थः प्रतीयमान उच्यते । राजसख इत्यत्रैव 'राजा सखा' यस्येति बहुव्रीहिप्राप्तोऽर्थः प्रतीयमान एव ।[1]

१७. अभिसंहितः—

सर्वोऽपि व्यक्तः शब्दोऽर्थसंश्लिष्टो भवति । गवादिशब्दे जातिर्द्रव्यं वेत्यादिः ज्ञायमानोऽर्थोऽभिसंहितः स्मृतः ।[3]

१८. नान्तरीयकः—

अर्थेऽविनाभावेन विद्यमानः, शब्देन च प्रतीयमानोऽर्थो नान्तरीयक उच्यते घटशब्देन कम्बुग्रीवादिमद्वस्तुविशेषोऽभिधीयते । तत्र चार्थे नील-पीतादिगुणोऽविनाभावेन सन्तिष्ठते । शब्देन च प्रतीयते ।[1] अतोऽयमर्थो नान्त-रीयको विद्यते ।

१. तस्मिंस्तत्त्वमभिधीयमाने राजा सखाऽस्येत्ययमर्थः प्रतीयमान एव । वा०प०, २।८१ पुण्य० ।

२. अभिसंहितो यथा—गोशब्दे जातिर्वा द्रव्यं वेति । वा०प०, २।८१, पुण्य० ।

३ द्र०—वा०प० २।८१, पुण्य० ।

# अर्थकाण्डे पञ्चमः समुद्देशः

## अर्थविषयिका भाषातात्त्विकी विवेचना

अर्थभेदविषयकाः पूर्वोक्ताः सर्वेऽपि विचाराः पूर्णा एवेति साधिकारमभिधातुं न शक्यते । अर्थो हि नाम व्यापकं तत्त्वं भवति । मनोविषयश्चासौ विद्यते । वागपेक्षया च मनसो भूयान् विषयः परिगण्यते ।[1] शब्दश्चाऽभिधेयमात्रमेवाऽर्थमभिव्यनक्ति । अतोऽर्थतत्त्वं कस्मिंश्चिद् नियतसीम्नि बद्धुं न पार्यते । भर्तृहरिणा पुण्यराजेन वाऽर्थविभागविषये यानि मतानि सङ्कलितानि[2], तानि अपूर्णान्येव । अतः प्रागुक्तोऽर्थभेदः प्रायोऽव्याप्तः पुनरुक्तदोषग्रस्तश्चेति तत्रैव यथास्थानं निर्दशितम् । 'उपरि अर्थभेदकर्तृभिः यदप्युक्तं तत पदेषु वाक्यं विभज्य वाक्यार्थो विभक्त' इत्यभिमत्य । अर्थस्त्वखण्डो वाक्येन वाक्यार्थलक्षणो वाक्येन सकृदेवाऽभिधीयते । अर्थभेद शास्त्रकाराणां स्ववासनाश्रित एवेति इदमित्थन्तया प्रतिपादयितुं शक्यते ।[3]

अभिधेयरूपस्यार्थस्य किञ्चिदपि स्वकीयं वैयक्तिकं स्वत्वं न भवति । अर्थो हि वक्तुः श्रोतुश्च बौद्धसामर्थ्यमपेक्षते । वक्तुः श्रोतुश्च परस्परं यस्मिन् शब्दे यस्याऽर्थस्य सङ्केतग्रहो भवति तेन शब्देन स एवाऽर्थोऽभिधीयतेऽवगम्यते च । वक्तुः प्रतिभावशादुच्चरितः स्फोटात्मकः शब्दः श्रोतुः प्रतिभां प्रबोधयति । सङ्केतग्रहजनकः शाब्दव्यापार अभ्याससाध्यो भवति । प्रतिभाप्रतिबोधनमात्रफलकः खलु शब्दो जायते ।[4] प्रतिभास्वरूपमतः प्राक् सम्यगुपपादितम् ।

श्रोतुः बुद्धेः प्रतिबोधः खलु शब्दार्थ इत्यस्माभिरनेकत्र निरूपितम् । श्रुतेन शब्देन श्रोतुरर्थाकारा बुद्धिरुपजायते[5] । येन केनाऽपि शब्देन यस्य कस्याऽप्यर्थ-

---

१. मनो वाव वाचो भूयः । छां०उ०, ७।३।१ ।

२. अत्राऽधिकरणे वादाः पूर्वेषां बहुधा मताः । वा०प०, २।११८ ।

३. अविकल्पेऽपि वाक्यार्थे विकल्पा भावनाश्रयाः । वा०प०, २।२१७ ।

४. अभ्यासात् प्रतिभाहेतुः शब्दः सर्वोऽपरैः स्मृतः ।
बालानाञ्च तिरश्चाञ्च यथार्थप्रतिपादने ॥ वा०प०, २।११९ ।

५. बुद्धिप्रतिभासः शब्दार्थः । यदा यदा शब्द उच्चरितः तदा तदा अर्थाकारा बुद्धिरुपजायते इति । अष्टा० महाभा० पस्पशा०, प्र० ।

स्याऽवगतिः सम्भवति, यदि वक्तुः श्रोतुश्च तस्मिन् शब्दे तदर्थे च बुद्धेरैक्यं भवेत् । अत एव एक एव शब्दः कस्यचन कृते कञ्चनाऽर्थमभिधत्ते, अन्यस्य कृतेऽन्यम्, अपरस्य कृते चाऽपरम्[1] । गोशब्दः क्वचित् सास्नादिमत्पशु-विशेषमर्थमभिधत्ते, क्वचित् पृथिवीम् । अन्यत्र वाचम् । आङ्ग्लभाषायाञ्चाऽयं गोशब्दः (Go) गमनक्रियारूपं प्रवृत्तिनिमित्तभिधत्ते ।

**शब्दानां सार्थक्यम्—**

सामान्यदृष्ट्या शब्दानां द्वैविध्यं सम्भवि—१. सार्थकः, २. निरर्थकश्च ।

सार्थकनिरर्थकयोः कः स्याद् व्यवच्छेदक इति विवादविषयो विद्यते । पुनरपि लौकिकं व्यवहारमाश्रित्य सार्थको निरर्थकश्च शब्दो व्यवच्छेत्तुं शक्यत एव । लोके शब्दजन्यां प्रवृत्तिं निवृत्तिं वाऽभिलक्ष्य शब्दानां सार्थक्यं सुस्पष्टं निश्चेतुं शक्यते । यः कश्चनाऽपि शब्दो यत् किञ्चित् प्रवृत्तिनिमित्तमाश्रित्यैव प्रवर्त्तते इति बहुत्रोपपादितम् । यथा शब्दोच्चारणे वक्तारं यत् किञ्चित् प्रवृत्तिनिमित्तं प्रयोजयति, तथा श्रुतः शब्दः श्रोतुरपि यत् किञ्चित् प्रवृत्ति-निमित्तं जनयति । तच्च प्रवृत्तिनिमित्तं प्रवृत्त्यात्मकं निवृत्त्यात्मकं वा भवितु-मर्हति । अतः शब्दानां सार्थक्यस्याऽयमेवाऽस्ति निष्कर्षो यद्यः शब्दः श्रुतः सन् प्रवृत्तिं निवृत्तिं वा जनयेत्, स सार्थकः शब्दोऽभिमतः । सीरदेवेन शब्दानां सार्थक्यव्यवस्था इत्थमेव प्रतिपादिता[2] । अतोऽतिरिक्तः शब्दो निरर्थको ज्ञेयः ।

लौकिकीयं प्रवृत्तिः निवृत्तिर्वा वाक्यादेव सम्भवति । अतो वाक्यस्यैव सार्थक्यं भाषाशास्त्रिभिरङ्गीक्रियते । भर्तृहरिणा वाक्यस्य सार्थक्यं पदस्य च नैरर्थक्यं साधिकारं प्रतिपादतम्[3] । यत्र कुत्रचित् पदेन योऽर्थसम्प्रत्ययो दृश्यते, स तु वाक्ये प्रयोक्तव्ये वाक्यैकदेशे प्रयुक्तो, तत्र वाक्यत्वस्वीकारात् । 'गृहं प्रविश' वाक्ये प्रयोक्तव्ये बहुभिः 'गृहमिति, प्रविशेति वा' वाक्यैकदेशः प्रयुज्यते । बोद्धृभिश्च तत्र वाक्यैकदेशेऽपि वाक्यत्वबुद्ध्यार्थोऽवगम्यते । यत्र वाक्यैकदेशे श्रुते श्रोतुः वाक्यत्वबुद्धिर्न सम्पद्यते तत्रार्थसम्प्रत्ययो न दृश्यते । अतएवाऽप्रकरणज्ञस्य वाक्यैकदेशे श्रुतेऽपि अर्थावगमो न भवति । वाक्यप्रयोग-स्थले वाक्यैकदेशप्रयोगस्य स्वाभाविकी खलु जनानां प्रवृत्तिर्विद्यते ।

---

१. एकस्याऽपि च शब्दस्य निमित्तैरव्यवस्थितैः ।
एकेन बहुभिश्चाऽर्थो बहुधा परिकल्प्यते ॥ वा० प०, २।१३८ ।

२. प्रवृत्त्यैव निवृत्त्यैव वा शब्दो लोकेऽर्थवान् भवति । परिभा० वृ० ।

३. तथा पदानां सर्वेषां पृथगर्थनिवेशिनाम् ।
वाक्येभ्यः प्रविभक्तानामर्थवत्ता न विद्यते ॥ वा०प०, २।४२७ ।

पतञ्जलिना स्वयमुल्लिख्य प्रवृत्तिरियं समर्थिता[1]।

केषाञ्चन पारिभाषिकशब्दानामर्थाऽवगतिः प्रतिज्ञासमधिगम्या भवति। आचार्याणां सङ्केतादेव तेभ्योऽर्थप्रतीतिः सम्भाविनी। प्रायो हि शब्दानामर्थभेदस्याऽन्यतमं कारणं शास्त्रकाराणां बौद्धसामर्थ्यस्य पार्थक्यं जायते। अस्मादेव पतञ्जलिराचार्यो वृद्धिगुणोपधादिशास्त्रीयशब्दानां प्रतिज्ञाज्ञापितमर्थं स्वीचकार[2]। संदिग्धस्थले च व्याख्यानत एवार्थसम्प्रत्ययं प्रतिपेदे[3]।

स्वरूपतः कश्चिदपि शब्दोऽर्थस्य वाचको न भवति। अर्थाऽवगतौ सर्वतोऽधिकं महत्त्वपूर्णं कारणं बौद्धिकसंस्कारो विद्यते। प्रतिव्यक्ति नियता वासना सन्तिष्ठते। शब्दद्वारा जनः तां वासनामभिव्यनक्ति। वक्त्रा श्रोत्रा च येन शब्देन यस्य भावनाविशेषस्याऽभिव्यक्तिः स्वीकृता, तस्य शब्दस्य स एवाऽर्थोऽभिमतः[4]। तत्त्वतः कस्यचिच्छब्दस्य कश्चिद् नियतोऽर्थो न भवति[5]। शब्दो दूरत एवार्थं सङ्केतयति। शब्देनैतत् सामर्थ्यं येन स्पष्टतोऽर्थं स्पृशेत्। गृहीतः शब्दो गृहीतशक्तिकस्य श्रोतुरर्थसङ्केतमात्रं करोति। ततः प्रतिपत्तृत्वसामर्थ्यादर्थसम्प्रत्ययो जायते—

वस्तूपलक्षणं शब्दो नोपकारस्य कारकः।
न स्वशक्तिः पदार्थानां संस्प्रष्टुं तेन शक्यते॥[6]

अनेकदा श्रोतृभिः वक्तुः वासनारूपोऽर्थः स्पष्टतः उपेक्ष्यते। श्रोत्रा तत्र स्वकीयेन नियतवासनावासितेन चेतसा शब्दार्थो निर्धार्यते। यावत्यो व्यक्तयो यावतीभिः वासनाभिः विभक्ताः, लोके तावन्तः शब्दार्थाः प्रविभज्यन्ते।[7] वेदमन्त्राणां व्याख्याभेदस्येदमेव कारणम्। प्रायो वेदभाष्यकाराणामीदृशी एव स्थितिर्विद्यते। यथा करणवैकल्यादिवक्तृत्वदौर्बल्याद् एकः शब्दो नानारूपेणोच्चार्यते तथा प्रतिपत्तृत्वदौर्बल्याद् वासनाभेदाच्च वक्त्राऽभिव्यक्त एक एवाऽर्थो नानारूपेण प्रबुध्यते, प्रतिपत्रा च तत्तद्रूपेणाऽभिव्यज्यते। साम्प्रदायि-

---

१. दृश्यन्ते हि वाक्येषु वाक्यैकदेशान् प्रयुञ्जानाः……प्रविश पिण्डीम्, प्रविश तर्पणमिति। अष्टा०, १।२।४५, महाभा०।

२. आचार्याचारात् सञ्ज्ञासिद्धिः। अष्टा०, १।१।१, महाभा०।

३. व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणम्। अष्टा० महाभा०, पस्पशा०।

४. प्रतिनियतवासनावशेनैव प्रतिनियताकारोऽर्थः, तत्त्वतस्तु कश्चिदपि नियतो नाऽभिधीयते। वा०प०, २।१३६, पुण्य०।

५. नास्ति कश्चिन्नियतः शब्दस्याऽर्थः। वा०प०, २।१३६, पुण्य०।

६. वा०प०, २।४४२।

७. वक्त्राऽन्यथैव प्रक्रान्तो भिन्नेषु प्रतिपत्तृषु।
स्वप्रत्ययाऽनुकारेण शब्दार्थः प्रविभज्यते॥ वा०प०, २।१३७।

कानां वाक्कलहस्याऽपि एतदेव कारणम् । सत्यमाह भर्तृहरिः–

एकस्याऽपि च शब्दस्य निमित्तैरव्यवस्थितैः ।
एकेन बहुभिश्चाऽर्थो बहुधा परिकल्प्यते ।।[1]

स्वप्रत्ययाऽनुसारेण वैशेषिकाः कपालद्वयारब्धमवयविनमर्थं प्रत्याययितुं घटशब्दं प्रयुञ्जते । अन्ये च यथाप्रतिपत्ति अन्यथैव शब्दार्थं प्रतिपद्यन्ते । सांख्या गुणसमाहारमवगच्छन्ति । जैनसौगताश्च परमाणुसञ्चयं जानन्ति, शाङ्कराश्च मिथ्यात्वापन्नम् ।

अदृष्टतत्त्वानां जनानान्तु तद्विषयकं वचनं नितरामेव भ्रामकं भवति । तेनाऽपि शब्दार्थोऽव्यवस्थितः सञ्जायते ।[2] अस्मादपराधाच्छब्दोऽपि अपभ्रश्यते, अर्थश्चाऽपि निष्प्रामाणिको दृश्यते ।

अर्थाऽभिव्यक्तिर्नामास्ति मनोवैज्ञानिकी प्रक्रिया, अतोऽर्थाऽभिव्यक्तौ सर्वा एव मनोवृत्तयः कार्यरता भवन्ति । शब्दो हि मनोवृत्तेरेकोऽङ्गविशेषः । अतएव केवलेन शब्दप्रयोगमात्रेण कृत्स्नोऽर्थो नाऽभिधीयत इति वक्तुं पुण्यराज उदसहत–

'नहि सकलविशेषसहितमर्थं शब्दः प्रत्याययितुमलम् ।[3] इति तथ्यमिदं पतञ्जलिनाऽन्यथोपवर्णितम् । पतञ्जलिमते प्रयोक्ता शब्दप्रयोगेण सहाङ्गसञ्चालनमपि कुरुते, अक्ष्णा सङ्केतयति, कदाचित् कुटिलयति मुखाकृतिम्, कदाचिच्च पाणिविहारञ्चाऽपि विधत्ते ।[4] एवञ्चाऽक्षिनिकोचैः पाणिसञ्चालनैरपि अर्थाऽभिव्यक्तिः दृश्यते । अनेकदा वक्तुः शब्दप्रयोगो नितरां व्यर्थो भवति, अङ्गसञ्चालनादिना कृतः सङ्केतः एवाऽर्थप्रत्यायने सफलो दृश्यते । अतोऽर्थप्रत्यायनाय शब्दैः सह कदाचिद् अन्यानि अपि सहायकानि साधनानि उपयुज्यन्ते सुतराम् ।

## अर्थस्य द्वैविध्यम्

तात्त्विकदृष्ट्याऽर्थस्य द्वैविध्यं सम्भवति—१. मुख्यः, २. गौणश्च ।

---

१. वा० प०, २।१३८ ।

२. तस्माददृष्टतत्त्वानां सापराधं बहुच्छलम् ।
दर्शनं वचनञ्चाऽपि नित्यमेवाऽनवस्थितम् ।। वा०प०, २।१४० ।

३. वा०प०, २।१२५, पुण्य० ।

४. अन्तरेण खल्वपि शब्दप्रयोगं बहवोऽर्था गम्यन्ते—अक्षिनिकोचैः पाणिविहारैश्च ।
अष्टा०, २।१।३४, महाभा० ।

पुण्यराजकृतार्थविभागनिरूपणायां मुख्यार्थं गौणार्थञ्च निरदिशम् । तत्रत्या विवेचना शब्दतत्त्वदृष्ट्या आसीत् । अर्थतत्त्वदृष्ट्याऽत्रोभौ विविच्येते ।

### १. मुख्यार्थः—

लौकिक्या प्रवृत्त्या निवृत्त्या च शब्दानां सार्थक्यं निश्चीयत इति प्रागस्माभिः प्रतिपादितम् । सर्वोऽपि सार्थकः शब्दः स्वकीयं यत्किञ्चित् प्रवृत्तिनिमित्तमाधत्ते । यत् प्रवृत्तिनिमित्तमाश्रित्य यः शब्दो लोके प्रवृत्तः, यदि स शब्दः तदेवाऽभिदध्यात्तदा सोऽर्थो मुख्यः परिगण्यते—

शब्दस्योच्चारणे स्वार्थः प्रसिद्धो यस्य गम्यते ।
स मुख्य इति विज्ञेयो रूपमात्रनिबन्धनः ॥[1]

एवञ्च मुख्यार्थो द्विविधः परिकल्प्यते—

(क) प्रवृत्तिनिमित्तम् । (ख) प्रवृत्तिनिमित्ताश्रयश्च । तदत्र क्रमशो निरूप्यते ।

### (क) प्रवृत्तिनिमित्तम्—

वाचा मनसा शरीरेण च यः कार्यारम्भो विधीयते, स प्रवृत्तिरित्युच्यते ।[2] येन हेतुना प्रवृत्तिरियम् उपजायते तत्प्रवृत्तिनिमित्तमभिधीयते । यथा—रागद्वेषादिप्रवर्तनया मनः कार्यारम्भे प्रवर्तते । यद् विशेषणमाश्रित्य शब्दा अभिधेयरूपेष्वर्थेषु प्रयुज्यन्ते, तद्विशेषणं प्रवृत्तिनिमित्तं कथ्यते ।[3] यदपेक्ष्य शब्दस्य प्रवृत्तिरुत्पद्यते, तदेव प्रवृत्तिनिमित्तमिति भावः । व्यक्तिविशेषनिरपेक्षं वाच्यताऽवच्छेदकं शब्देन सम्प्रतीतमर्थतत्त्वं प्रवृत्तिनिमित्तं विद्यते । कम्बुग्रीवादिमद्वस्तुसामान्यमाश्रित्य घटशब्दः प्रवृत्तः । अतः किञ्चिन्नियतवस्तुनिरपेक्षं घटसामान्यं घटशब्दस्य प्रवृत्तिनिमित्तम् ।

सर्वप्राणिषु अभिधित्सारूपा नित्या प्रवृत्तिरुपलभ्यते ।[4] सा च प्रवृत्तिर्द्विधा विद्यते—१. बुद्ध्याश्रिता, २. इन्द्रियाश्रिता च । बुद्धिकर्मणाऽर्थतत्त्वं व्यवसीयते, इन्द्रियकर्मणा समासाद्यते[5]ऽभिधीयते च । प्रवृत्तिद्वयस्याऽपि

---

१. वा०प०, २।२६७ ।
२. प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः । न्या०द०, १।१।१७ ।
३. यद्विशेषणं पुरस्कृत्य घटादिशब्दाः तत्तद्व्यक्तिषु प्रयुज्यन्ते तद्विशेषणं प्रवृत्तिनिमित्तमुच्यते । अष्टा०, ७।१।७४, वै०सि०कौ०, बालमनो० ।
४. प्रवृत्तिः खल्वपि नित्या । अष्टा०, ४।१।३, महा० ।
५. इह हि किञ्चिदिन्द्रियकर्म, किञ्चिद् बुद्धिकर्म । इन्द्रियकर्म समासादनं बुद्धिकर्म व्यवसायः । अष्टा०, ३।३।१३३, महाभा० ।

निमित्तमर्थतत्त्वं भवति । प्रवृत्तिनिमित्तात्मिका हि अर्थाऽवगतिः सर्वास्वपि एकविधासु समानप्रसवासु वा व्यक्तिषु व्यापिका भवति । गच्छतीति गौरित्युक्तौ सर्व एव सास्नालाङ्गूलादिमन्तः पशुविशेषाः अवगता भवन्ति । न तत्र व्यवच्छिन्नं गोतत्त्वमवगम्यते । अत एवाऽविच्छिन्नं नामार्थतत्त्वं प्रवृत्ति-निमित्तं स्वीक्रियते ।

प्रवृत्तिनिमित्तरूपे ह्यर्थे येन हेतुना एकः काकादिः काकादिरुच्यते, तेनैव हेतुना सर्वे एव काकादयः काकादयो जायन्ते ।[1] प्रायो हि अनुमानजन्ये उपमानजन्ये च सम्प्रत्यये प्रवृत्तिनिमित्तरूपेणाऽर्थेनाऽनुमीयत उपमीयते च । 'पर्वतो वह्निमान्, धूमाद्, यथा महानसमित्यत्र सामान्यलक्षणाप्रत्यासत्त्या महानसे धूमत्वदर्शनात् पर्वतेऽपि धूमत्वेनैव हेतुनाऽनुमीयते । एवं 'गौरिव गवयः' इत्यत्राऽपि बोध्यम् । हरिदीक्षितो[2] नागेशश्च[3] प्रातिपदिकार्थनिरूपणायां द्विकं प्रातिपदिकार्थं पुरस्कृत्य प्रवृत्तिनिमित्तं तदाश्रयश्चेति समुपास्थापयत् ।

शाब्दप्रतिपत्तेः स्वरूपद्वयं सम्भवति—

१. लिङ्गसंख्याऽन्विता प्रतिपत्तिः । २. लिङ्गसंख्यारहिता च ।

योऽर्थो लिङ्गसंख्यारहितोऽवबुध्यते स शब्दस्य प्रवृत्तिनिमित्तरूपोऽर्थ उच्यते । शब्दात् प्रारम्भिकाऽवगतिः प्रवृत्तिनिमित्तात्मिका एव जायते । यावन्तो जातिवाचकाः शब्दाः सन्ति, तैः प्रवृत्तिनिमित्तमेवाऽर्थोऽभिधीयते । आकृतिपदेन जातिपदेन वा प्रवृत्तिनिमित्तमेवाऽभिप्रेतमाचार्याणाम् ।[4] जात्यभिधानवादिनो वाजप्यायनस्य[5] मतमतः प्रागस्माभिः सम्यक् प्रतिपादितम् ।

शब्दस्याऽनेकविधं प्रवृत्तिनिमित्तं सम्भवति । तत्र १. जातिलक्षणम्, २. गुणलक्षणम्, ३. क्रियालक्षणम्, ४. सम्बन्धलक्षणम्, ५. स्वरूपलक्षणमित्येवमादि ज्ञेयम् । गौरिति पदं जातिलक्षणं प्रवृत्तिनिमित्तमभिधत्ते । शुक्ल इति पदं गुणलक्षणम्, पाचक इति पदं क्रियालक्षणम्, राजपुरुष इति पदं सम्बन्ध-

---

१. येनैव हेतुना एकः काकः तेनैव हेतुना द्वितीयश्च तृतीयश्च काको भविष्यति ।
अष्टा०, ४।१।९३, महाभा० ।

२. तद्वच्च प्रवृत्तिनिमित्ततदाश्रयरूपम् ।
अष्टा०, २।३।४६, वै० सि० कौ०, प्रौ० म०, श० र० ।

३. परे त्वत्र सूत्रे प्रातिपदिकार्थपदेन प्रवृत्तिनिमित्तं तदाश्रयञ्च ।
अष्टा०, २।३।४६, वै० सि० कौ०, विभ०, ल० श० शे० ।

४. आकृतिशब्देन प्रवृत्तिनिमित्तमुच्यते । अष्टा०, २।१।१, महाभा०, प्र०, उद्द्यो० ।

५. आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायनः । अष्टा० १।२।६४, वा० ३५ ।

लक्षणम्, डित्थ इति पदञ्च स्वरूपलक्षणं प्रवृत्तिनिमित्तमभिलक्ष्य प्रयुज्यते। एतदेव च शब्दानां स्वाऽर्थोऽप्युच्यते।

शब्दानां प्रवृत्तिनिमित्तसम्बद्धे एवाऽर्थे प्रत्यया विधीयन्ते। यश्चाऽर्थः प्रत्ययेन विवक्षितः स यदि शब्दप्रवृत्तिनिमित्तेनाऽसम्बद्धो भवति, तदा नाऽसौ प्रत्ययान्तेन अभिधीयते। शब्दार्थतत्त्वेषु अव्याहतगतित्वं वैयाकरणशब्दस्य प्रवृत्तिनिमित्तम्।[1] तत्सम्बद्ध एवार्थे प्रत्ययाः सम्भवन्ति, न तु ततोऽतिरिक्तेऽर्थेऽपि। अतः शरीरेण कृशः, व्याकरणेन च शोभनः, इत्यर्थाऽभिधानाय 'वैयाकरणपाश' इति निन्दार्थकप्रत्ययान्तः शब्दो नाऽङ्गीक्रियते।[2] अभिप्रेतार्थस्य प्रवृत्तिनिमित्ताऽसम्बद्धत्वात्।[3] यत् प्रवृत्तिनिमित्तमुपादाय शब्दः प्रवृत्तः, तदेव प्रवृत्तिनिमित्तं यदि प्रत्ययान्तेनाऽपि विवक्षितम् तदाऽपि प्रत्ययान्तो न स्वीक्रियते। कुत्सारूपं प्रवृत्तिनिमित्तं समाख्यातुं कुत्सितपदं प्रयुज्यते। तस्मिन्नेवार्थे यदि कप्रत्ययो[4] विवक्षितः तदा स न भवति। एवमनुकम्पितशब्दादपि अनुकम्पायामर्थे कप्रत्ययो[5] न भवति। कुत्सितशब्दादनुकम्पायाम् अनुकम्पित शब्दाच्च कुत्सायामर्थे तु प्रत्ययो भवत्येव[6], प्रवृत्तिनिमित्तादधिकस्याऽर्थस्य विवक्षितत्वात्।

यदा तु शब्दानामनिर्धारितविशेषधर्मनिबन्धनं प्रवृत्तिनिमित्तं भवति तदा तद्विशेषद्योतनाय तदर्थेऽपि प्रत्यया भवन्त्येव।[7] यदा कुत्सितशब्दस्याऽनिर्धारितविशेषधर्मनिबन्धना कुत्सा प्रवृत्तिनिमित्तमभिप्रेतं तदाऽनृतभाषणादिनिबन्धना कुत्सा कुत्सितक इति प्रत्ययान्तेनाऽभिधीयते।

---

१. सर्वार्थानां व्याकरणाद् वैयाकरण उच्यते।
तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा॥ महाभा० उद्यो० प्र०, ४३।६१।

२. अथ वैयाकरणः शरीरेण कृशो व्याकरणेन च शोभनः, कर्तव्यो वैयाकरणपाश इति? न कर्त्तव्यः।......न च कार्श्यस्य भावाद् द्रव्ये वैयाकरणशब्दः।
अष्टा०, ५।३।४७, महाभा०।

३. यस्य भावाद् द्रव्ये शब्दनिवेशः तदभिधाने··· प्रत्ययेन भवितव्यम्।
अष्टा०, ५।३।४७ महाभा०।

४. अष्टा०, ५।३।७४।

५. अष्टा०, ५।३।७६।

६. इह कुत्सितकः, अनुकम्पितक इति स्वशब्देनोक्तत्वात् तस्यार्थस्य प्रत्ययो न प्राप्नोति नैष दोषः, कुत्सितस्य अनुकम्पायां भविष्यति, अनुकम्पितस्य कुत्सायाम्।
अष्टा०, ५।३।७४ महाभा०।

७. अभिधाय तान् विशेषान् अपेक्षमाणश्च कृत्स्नमात्मानम् प्रियकुत्स्नादिषु पुनः प्रवर्ततेऽसौ विभक्त्यन्तः।
अष्टा० ५।३।७४ महाभा०।

### (ख) प्रवृत्तिनिमित्ताश्रयः

लिङ्गसंख्याऽन्वितो द्रव्यरूपोऽर्थो व्यक्तिरूपो वाऽर्थः प्रवृत्तिनिमित्ताश्रय उच्यते। प्रवृत्तिनिमित्ताश्रयः एवाऽत्र द्रव्यं विवक्षितम्[1]। व्यक्तिविशेषरूपं व्यवच्छिन्नमर्थतत्त्वं प्रवृत्तिनिमित्ताश्रयोऽभिमतः। गौरिति पदं प्रवृत्तिनिमित्तरूपमविच्छिन्नं गोतत्त्वमभिधत्ते। 'देवदत्तस्य कृष्णा गौः बहुक्षीरा' इत्यत्र तु प्रवृत्तिनिमित्तस्य निश्चित आश्रयः स्वीक्रियते। अतोऽत्रत्यो गोपदार्थः प्रवृत्तिनिमित्ताश्रयरूपो विद्यते। देवदत्तस्वामिका एवाऽत्र गौः विवक्षिता, न यज्ञदत्तादिस्वामिका। तत्राऽपि कृष्णा एव न तु रक्ता। तास्वपि बहुक्षीरैव। प्रवृत्तिनिमित्ताश्रयरूपोऽर्थो लिङ्गेन, वचनेन, कालेन गुणादिना च यत्र तत्र व्यवच्छिद्यते। अतएव विभक्तमर्थतत्त्वं प्रवृत्तिनिमित्ताश्रयः कथ्यते।

वाजप्यायनमतविरुद्धमताऽनुयायी व्याडिराचार्यः प्रबलैस्तर्कैः प्रवृत्तिनिमित्ताश्रयमात्रं शब्दाऽभिधेयं स्वीकुरुते[2]। भाषातत्त्वशास्त्रस्य प्रमाणभूतः प्रवक्ता पतञ्जलिरुभयमतं स्वीकुर्वाणोऽपि विलक्षणं भाषातात्त्विकम् एकं नवं मतमातिष्ठत। पतञ्जलिमते शब्दैरर्थस्य स्वाभाविकमभिधानं भवति[3] न तु वाचनिकमिति अन्यत्र प्रतिपादितमस्माभिः। शब्दैः प्रवृत्तिनिमित्तस्य तदाश्रयस्य चोभयस्याऽभिधानं भवतीति पतञ्जलिना साऽधिकारं सुस्पष्टेन वचसा प्रतिपादितम्[4]।

प्रवृत्तिनिमित्ताऽभिधानवादिना प्रवृत्तिनिमित्ताश्रय उपेक्षितुं न शक्यते, नाऽपि प्रवृत्तिनिमित्ताश्रयाऽभिधानवादिनैव प्रवृत्तिनिमित्तमुपेक्षितुं शक्यते। लोकाश्रया खलु अभिधेयार्थव्यवस्था दृश्यते। लोके च उभयरूपेणाऽर्थेन व्यवहारः सम्पाद्यते। एकस्य किञ्चिद् गुणभूतं किञ्चिच्च प्रधानभूतं भवति। द्रव्यपदार्थिकस्याकृतिः गुणभूता द्रव्यञ्च प्रधानभूतम्। आकृतिपदार्थिकस्य द्रव्यं गुणभूतम् आकृतिश्च प्रधानभूता[5]। एवञ्चोभयोरुभयं पदार्थः।

### २. गौणोऽर्थः –

यत् प्रवृत्तिनिमित्तमाश्रित्य यः शब्दः प्रवृत्तः, स शब्दस्य मुख्योऽर्थः। स

---

१. अत्र द्रव्यपदेन प्रवृत्तिनिमित्ताश्रय उच्यते। अत एव रूपादिशब्दसङ्ग्रहः। अष्टा०, २।१।१, महाभा०, प्र०, उद्यो०।

२. द्रव्याऽभिधानं व्याडिः। अष्टा० १।२।६४, वा० ४६।

३. स्वाभाविकमित्याह। अष्टा० २।१।१, महाभा०।

४. न हि आकृतिपदार्थिकस्य द्रव्यं न पदार्थः, द्रव्यपदार्थिकस्य वाऽऽकृतिः न पदार्थः। उभयोरुभयं पदार्थः। अष्टा०, १।२।६४, महाभा०।

५. आकृतिपदार्थिकस्य आकृतिः प्रधानभूता, द्रव्यं गुणभूतम्। द्रव्यपदार्थिकस्य द्रव्यं प्रधानभूतमाकृतिः गुणभूता। अष्टा०, १।२।६४, महाभा०।

एव मुख्यः शब्दाऽभिधेयो यदाऽर्थान्तरे समारोपितस्तदा स गौणोऽर्थ उच्यते।[1] अर्थप्रकरणाद्यपेक्षोऽयं गौणोऽर्थः शब्दान्तरैः सह युक्तो भवति[2]। शब्दो यदा स्वप्रवृत्तिनिमित्ताच्च्युतोऽर्थान्तराऽभिधानाय प्रकरणादिकमपेक्षते तदा प्रकरणादिना अवगतोऽर्थो गौण इत्यभिप्रायः।

लक्ष्यार्थो व्यङ्ग्यार्थश्चोभावेव गौणोऽर्थो भवति। गौणे ह्यर्थे मुख्यार्थसम्बन्ध आवश्यको विद्यते[3]। मुख्यार्थो गौणाऽर्थस्य निमित्तं भवतीति भर्तृहरिणाऽपि प्रतिपादितम्[4]। एवञ्च केषाञ्चिन्मते गौणमुख्यार्थयोः निमित्तनिमित्तिभावः सम्बन्धः सन्तिष्ठते[5]। मुख्याऽर्थे गौणाऽर्थे च कार्यसम्प्रत्यये समुपस्थिते प्राधान्याद् मुख्याऽर्थे एव कार्यव्यवस्था सम्पाद्यते[6]। 'गौरनुबन्ध्यः' इत्यत्र मुख्यार्थः सास्नादिमदर्थ एवाऽनुबध्यते न तु वाहीकः।

अतस्मिन्नर्थे तदर्थस्य सम्प्रतिपत्तिः खलु गौणः अर्थः सम्प्रतीयते। चतुर्भिः प्रकारैश्चाऽतस्मिन्नर्थे तदर्थस्य अवगतिः दृश्यते[7]। तत्र (अ) तात्स्थ्यात् (इ) ताद्धर्म्यात्, (उ) तत्साहचर्यात्, (ऋ) तत्सामीप्याच्चेति। तदत्र संक्षेपतो विविच्यते प्रत्येकम्।

**(अ) तात्स्थ्यात्—**

'मञ्चाः क्रोशन्ति', 'गिरिः दह्यते' इत्यादौ मञ्चस्य क्रोशनाऽसम्भवाद् मञ्चशब्दः स्थानविशेषरूपं स्वप्रवृत्तिनिमित्तं परित्यज्य मञ्चस्थं पुरुषविशेषमर्थम् आह। गिरेश्च दहनाऽसम्भवाद् गिरिशब्दः गिरिस्थं द्रव्यविशेषमर्थमाह। वक्तुस्तत्रैव तात्पर्यात्।

**(इ) ताद्धर्म्यात्—**

'जटिलं यान्तं यज्ञदत्तमित्याह' इत्यत्र जटिले यज्ञदत्तधर्मपरिदर्शनाज्जटिले यज्ञदत्तव्यपदेशः समारोप्यते। यज्ञदत्ते यानि कार्याणि तानि जटिन्यपि दृश्यन्ते। अतो जटी यज्ञदत्त इत्युच्यते।

---

१. अर्थस्त्वर्थान्तरे समारोपितो यदा शब्दप्रवृत्तिनिमित्तं भवति तदा गौणव्यवहारः। अष्टा०, ८।३।८२, महाभा०, प्र०।

२. अर्थप्रकरणापेक्षो यो वा शब्दान्तरैः सह।
युक्तः प्रत्याययत्यर्थं तं हि गौणमपरे विदुः॥ वा० प० २।२६४।

३. शब्दो न कदाचित् स्वार्थपरित्यागेनाऽर्थान्तरे प्रवर्तते। अष्टा० ८।३।८२, महाभा०, प्र०।

४. स्वार्थे प्रवर्तमानस्य यस्याऽर्थे योऽवलम्बते।
निमित्तं तत्र मुख्यं स्याद् निमित्ती गौण इष्यते॥ वा० प० २।२६४।

५. गोत्वानुषङ्गो वाहीके निमित्तात् कैश्चिदिष्यते। ......वा० प०, २।२५७।

६. गौणमुख्ययोः मुख्ये सम्प्रतिपत्तिः। अष्टा०, ८।३।८२, महाभा०।

७. चतुर्भिः प्रकारैरतस्मिन् 'स' इत्येतद् भवति। अष्टा०, ४।१।४८, महाभा०।

**(उ) तत्साहचर्यात्—**

'यष्टीः प्रवेशय' इत्यत्र यष्टीनां प्रवेशसम्भवेऽपि वक्तुः तात्पर्यानुपपत्तेः यष्टिशब्दः स्वप्रवृत्तिनिमित्तं परित्यज्य यष्टिसाहचर्याद् यष्टिधरान् अभिधत्ते।

**(ऋ) तत्सामीप्यात्—**

'गङ्गायां घोषः' इत्यत्र गङ्गापदं खातावच्छिन्नं प्रवाहस्थलविशेषं स्वाभिधेयं प्रवृत्तिनिमित्तं पर्यत्यजत्, गङ्गायां घोषाऽवस्थानाऽसम्भवात् । अतो गङ्गापदमत्र गङ्गासमीपस्थं तटविशेषमर्थं व्यनक्ति।

## अनुशासनीयोऽर्थः

अर्थविभागविषये सर्वेऽपि मतभेदाः सव्याख्यम् अस्माभिरुपवर्णिताः। भर्तृहरिणा व्याकरणेनाऽनुशासनीयस्य अर्थस्य द्वैविध्यं समुपस्थापितम्[1]—

१. अपोद्धारपदार्थः, २. स्थितलक्षणार्थश्चेति।

शब्दाऽनुशासनदृष्ट्या एतस्य पर्याप्तं महत्त्वं विद्यते। अर्थविषये सर्वस्याऽपि सिद्धान्तस्येयमाधारभूमिः वक्तुं शक्यते । प्रासङ्गिकत्वेनाऽत्र तस्या अपि विवेचना प्रस्तूयते।

**१. अपोरद्धारपदार्थः—**

शास्त्रीयव्यवहाराऽनुपाती[2] अपोरद्धारपदार्थो व्याकरणस्याऽनुशासनीयोऽर्थो विद्यते। प्रकृत्यर्थः प्रत्ययार्थश्च अपोद्धारपदार्थेनाऽभिप्रेतः। शास्त्रीयोऽर्थो यद्यपि लोके व्यवहारविषयो न भवति तथापि शब्दसाधुत्वस्य निमित्तभावेन प्रतिपादको विज्ञायते। अत्यन्तसंसृष्टाद् वाक्यार्थादपोद्धारपदार्थो व्यवच्छिद्यते। अपोद्ध्रियते वाक्यार्थेभ्यः पृथक्क्रियत इति अपोद्धारपदं व्युत्पाद्यते। एतदत्र सुस्पष्टमवधेयं यच्छास्त्रीयां प्रक्रियां निर्वोढुमेव एष प्रविभागः परिकल्पितः। लोके केवलेन प्रत्ययेन प्रकृतिविशेषेण वाऽर्थो नाऽभिधीयते[3]। कात्यायनो नित्यसम्बन्धिनौ प्रकृतिप्रत्ययौ व्याचष्ट—प्रत्ययेन नित्यसम्बन्धात् केवलस्याऽप्रयोगः[4]। कात्यायनवार्तिकमिदं व्याचक्षाणः पतञ्जलिः केवलस्य प्रकृतिभागस्य

---

१. अपोद्धारपदार्था ये ये चाऽर्थाः स्थितलक्षणाः।
……………शास्त्रेऽस्मिन्नुपवर्णिताः ।। वा०प०, १।२४।

२. सोऽयमपोद्धारपदार्थः शास्त्रव्यवहारमनुपतति ···। वा०प०, १।२४, स्वोप०।

३. न केवलेन वृक्षशब्देनाऽर्थो गम्यते। केन तर्हि ? सप्रत्ययेन।
अष्टा०, १।२।४५, महाभा०।

४. अष्टा०, १।२।४५, वा० ८।

प्रत्ययस्य वा प्रयोगं न्यषेधत्[1] ।

अन्वयव्यतिरेकाभ्यां प्रकृत्या प्रकृत्यर्थः, प्रत्ययेन च प्रत्ययार्थोऽवगम्यते[2] । केवलेन प्रकृतिभागेन प्रत्ययेन वा उभावर्थावभिधातुं न शक्येते[3] । एवं सति प्रकृतिः प्रत्ययश्च सामान्यशब्दः स्यात् । सामान्यशब्दो हि प्रकरणादिं विना विशेषमर्थं नाऽभिधत्ते[4] । प्रकृत्या प्रत्ययेन वा नियोगतः कश्चिदर्थोऽभिधीयत एव । प्रकृतिः यस्याऽर्थस्याऽभिधायिका स्वीक्रियते, तत्सम्बद्ध एवाऽर्थे प्रत्यया विधीयन्ते[5] ।

## २. स्थितलक्षणोऽर्थः —

स्थितलक्षणेनाऽर्थेन वाक्यार्थो विवक्षितः[6] । वाक्येनाऽविच्छिन्नोऽर्थोऽभिधीयते । स्थितलक्षणादेवाऽर्थाद् अपोद्धारपदार्थरूपो विच्छिन्नार्थः प्रविभज्यते । पदानि सामान्यमर्थं प्रतिपादयन्ति, मिलित्वा च विशेषम् । पतञ्जलिमते सामान्येऽर्थे वर्तमानानां पदानां विशेषेऽर्थे यदवस्थानं तद् वाक्याऽर्थो विवक्षितः । पदार्थः स्थितलक्षणार्थो न भवति, तस्य वाक्यार्थे तिरोधानात् । स्थिरस्वरूपकस्याऽर्थस्यैव स्थितलक्षणार्थत्वस्वीकाराच्च । वाक्यार्थस्तु न क्वापि तिरोदधातीति वाक्यार्थस्य स्थितलक्षणार्थत्वम् ।

१. प्रत्ययेन नित्यसम्बन्धात् केवलस्य प्रयोगो न भविष्यति ।
अष्टा०, १।२।४५. महाभा० ।

२. प्रकृतिः प्रकृत्यर्थे वर्तते, प्रत्ययः प्रत्ययार्थे । अष्टा०, १।२।४५, महाभा० ।

३. न पुनः प्रकृतिरेव उभावर्थौ ब्रूयात् प्रत्यय एव वा ।
अष्टा०, १।२।४५, महाभा० ।

४. सामान्यशब्दाश्च नान्तरेण विशेषं प्रकरणं वा विशेषेषु अवतिष्ठन्ते ।
अष्टा०, १।२।४५, महाभा० ।

५. यस्य भावाद् द्रव्ये शब्दनिवेशः, तदभिधाने तद्गुणे वक्तव्ये प्रत्ययेन भवितव्यम् ।

६. स्थितलक्षणस्तु वाक्यरूपोपग्रहः कल्पितोद्देशविभागो विशिष्ट एकः क्रियात्मा विच्छिन्नपदार्थग्रहणोपायप्रतिपाद्यः…।
वा०प०, १।२४, स्वोप० ।

# अर्थकाण्डे षष्ठः समुद्देशः

## अर्थः पौरुषेयः

शब्दाऽर्थः पौरुषेयोऽपौरुषेयो वेति विषय आचार्याणां परस्परं महान् विवादो दृश्यते । केचन शब्दार्थं पुरुषकृतं स्वीकुर्वते । केचिच्चाऽपौरुषेयमङ्गीकुर्वते । नैयायिकेषु केचन ईश्वरकृतामर्थव्यवस्थां मन्वते[1] । पाणिनीये तन्त्रे या व्यवस्था विद्यते, साऽत्राऽनुसन्धीयते ।

पाणिनिनाऽर्थविषये शास्त्रीयव्यवस्था न्यषेधि । शब्दसाधुत्वप्रयोजनायैव निमित्तभावेन शास्त्रीयार्थव्यवस्था कल्प्यते । अर्थविषये शास्त्रीयाऽर्थव्यवस्थामस्वीकुर्वाणः पाणिनिः कथं तत्रेश्वरीयव्यवस्थामङ्गीकरिष्यति ? पाणिनिः लोकाऽऽधीनामर्थव्यवस्थां प्रत्यपादयत् । अर्थविषये लोकानुयायी पाणिनिः प्रधानप्रत्ययाऽर्थवचनमपि प्रत्याचख्यौ—

प्रधानप्रत्ययार्थवचनमर्थस्याऽन्यप्रमाणत्वात्[2] ।

प्रधानप्रत्ययार्थवचननिषेधकेऽस्मिन् सूत्रे पाणिनिना प्रयुक्तस्य अन्यपदस्य लोकार्थ एव वामनेन जयादित्येन च व्याख्यातः[3] । पाणिनीयस्य तन्त्रस्य प्रमाणभूताभ्यां प्रवक्तृभ्यां कात्यायनपतञ्जलिभ्यां पाणिनेः मनःस्थितिः इयं सुस्पष्टेन वचसाऽभिव्यक्ता । कात्यायनेन पाणिनीयस्य शब्दशास्त्रस्याधारो लोको व्याख्यातः । कात्यायनः शब्दार्थसम्बन्धस्य पाणिनिं स्मर्तारमेव स्वीचकार न तु कर्तारमपि[4] । पूर्वत एव सिद्धं शब्दम्, तस्याऽर्थम्, तयोश्च सम्बन्धमभिमत्य पाणिनिः शब्दशास्त्रं प्रणिनायेति कात्यायनस्याशयः ।

कात्यायनस्याशयः पतञ्जलिना ततोऽपि सुस्पष्टं व्याख्यातः । 'सिद्धे शब्दाऽर्थसम्बन्धे[5] इति वार्त्तिकं व्याचक्षाणः पतञ्जलिरभिरदधौ यल्लोकत

---

१. अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छा शक्तिः । न्या०सि०मु०, श०खं० ।

२. अष्टा०, १।२।५६ ।

३. अन्यो लोकः । अष्टा०, १।२।५६, का०वृ० ।

४. सिद्धे शब्दार्थसम्बन्धे । अष्टा०, का०वा० १ ।

५. अष्टा०, का०वा० १ ।

एतद् विज्ञायते यच्छब्दोऽर्थः तयोश्च सम्बन्धः सिद्धोऽस्ति[१]। येन शब्दार्थोऽवबुध्यते स लोक इति नागेशो लोकं पर्यभाषत[२]। लोकव्यवहारादेव शब्दार्थोऽवलोक्यते। अतो वृद्धव्यवहारपरम्पराऽपि लोकपदेनाऽभिप्रेतः। लोकतः शब्दार्थसम्बन्धेऽवगतेऽपि शास्त्रस्य वैयर्थ्यं नाशङ्क्यम्। कात्यायनेन आशङ्केयं कण्ठतो निराकृता। कात्यायनस्य पतञ्जलेश्चाऽनुसारेण शास्त्रं खलु औचित्य-निर्वाहकं भवति। शब्देनाऽपशब्देन चाऽर्थप्रत्यायनसम्भवेऽपि शब्देनैवाऽर्थः प्रत्याय्यो नाऽपशब्देनेति धर्मनियामकं शास्त्रं विद्यते—

'लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्मनियमः[३]।' अत एव 'अवचनाल्लोकविज्ञानात् सिद्धमित्येव[४]' इति वक्तुं पतञ्जलिरुदसहत। पतञ्जलिरर्थनिमित्तकं शब्दं स्वीचकार[५]। अर्थो हि शब्दस्य प्रयोजकः। अर्थाऽनुसारेणैव प्रयोक्ता शब्दं प्रयुङ्क्ते। ततोऽर्थसम्प्रत्ययः प्रतिपत्तुः। अतः शब्दार्थस्य निर्धारकः प्रयोक्तैव, न तु कश्चिद् अन्यः। अर्थः पौरुषेय एवेति निष्कर्षः।

'अनेकमन्यपदार्थे[६]', 'चार्थे द्वन्द्वः[७]', 'रक्ते[८]', 'निर्वृत्ते[९]' इत्यादिषु पाणिनीयसूत्रेषु येऽर्थनिर्देशाः परिलक्ष्यन्ते, वस्तुतो न तेऽर्थादेशाः। स्वभावत एव तेष्वर्थेषु अभिनिविष्टानां तेषां शब्दानां निमित्तत्वेन तैः सूत्रैरन्वाख्यानमात्रं विधीयते[१०]। लोके तैः तैः शब्दैस्तेषां तेषामर्थानां स्वाभाविकमभिधानं स्वीकृत्य पतञ्जलिराचार्यो वाचनिकमर्थादेशनं प्रत्याचख्यौ[११]। असम्भवः खल्वपि अर्था-

---

१. कथं पुनर्ज्ञायते—सिद्धः शब्दोऽर्थः सम्बन्धश्चेति, लोकतः। अष्टा०, महाभा०, पस्पशा०।

२. लोक्यते येन शब्दार्थो लोकस्तेन स उच्यते।
व्यवहारोऽथवा वृद्धव्यवहर्तृपरम्परा॥
अष्टा०, ४।१।३, महाभा०, प्र०, उद्द्यो०।

३. अष्टा०, का०वा० २।

४. अष्टा०, महाभा०, पस्पशा०।

५. अर्थनिमित्तकेन नाम शब्देन भवितव्यम्।
अष्टा०, १।१।२१, महाभा०।

६. अष्टा०, १।२।२४।

७. अष्टा०, १।२।२९।

८. अष्टा० ४।२।१।

९. अष्टा० ४।२।६८।

१०. स्वभावतः एतेषां शब्दानामेतेषु अर्थेषु अभिनिविष्टानां निमित्तत्वेनाऽन्वाख्यानं क्रियते।
अष्टा०, २।१।१, महाभा०।

११. अर्थेतस्मिन्नेकार्थीभावे कृते विशेषं किं स्वाभाविकं शब्दैरर्थाऽभिधानम् आहोस्विद् वाचनिकम्? स्वाभाविकमित्याह। कुतः? अर्थाऽनादेशात्। अष्टा०, २।१।१ महाभा०।

देशनम् । धातु-प्रातिपदिक-प्रत्ययनिपातादिशब्दानामर्थान् आदेष्टुं कस्य सामर्थ्यं सम्भवेत्[1] । एवंविधं कारणविशेषं पुरस्कृत्य पतञ्जलिः शब्दानामर्थादेशनं नोपकारकं मनुते[2] । शब्दैरर्थाऽभिधानं स्वाभाविकमेव, न तु वाचनिकमिति पतञ्जलेरभिप्रायः ।

उपर्यस्माभिः पाणिनीयतन्त्रस्य प्रमाणभूतस्य मुनित्रयस्य व्यवस्थितं मतमुपपादितम् । तत्राऽर्थव्यवस्थायां क्वचिदपि अपौरुषेयगन्धित्वं नाऽवगम्यते । मदुक्तं तथ्यं भर्तृहरिराचार्यः सम्यक् पुष्णाति । भर्तृहरिणा साध्यपदेनाऽर्थः साधनपदेन च शब्दोऽभिव्यक्तः । तन्मते शब्दस्याऽर्थस्य चोभयस्य व्यवस्था प्रयोक्त्रा क्रियते । तयोः सम्बन्धोऽपि प्रयोक्त्रैव निर्धार्यते—

'प्रयोक्त्रैवाऽभिसन्धत्ते साध्यसाधनरूपताम् ।
अर्थस्य वाऽपि सम्बन्धकल्पनां प्रसमीहते[3] ।।

पुण्यराजो भर्तृहरिमतमेतत् सम्यक् प्रत्यपादयत् । यदि शब्दार्थसम्बन्धव्यवस्था अपौरुषेयी स्वाभाविकी च स्यात्तर्हि ईश्वरकृतत्वात्तां परिवर्तयितुं ब्रह्माऽपि नाऽलंभवेत् । लोके च शब्दार्थसम्बन्धविपर्यासः सुस्पष्टं दृश्यते । शब्दोऽपभ्रश्यते, अर्थः परिवर्त्यते क्वचिदादिश्यते क्वचिच्च सङ्कुच्यते, सम्बन्धश्च विपर्यस्यते—

'यदि वास्तवमेवैतत् स्यात्तदा वस्तुस्वभावस्य ब्रह्मणाऽप्यन्यथाकर्तुमशक्यत्वाद् व्यवस्थितमेवैतद् भवेत्, न च तथा परिदृश्यते ।'[4]

अतः पुण्यराजमताऽनुसारेणापि शब्दार्थसम्बन्धव्यवस्था वक्तुरधीनैव । भर्तृहरिमते वक्तुरभिप्रायवशादेव अर्थव्यवस्था समाश्रीयते, न तु ईश्वरशक्तेः शब्दसामर्थ्याद्वा । वक्तुः प्रयोक्तुश्चाऽभिप्राय एव अर्थभेदस्य अपि व्यवस्थापको भवति—

'प्रयोक्तुरभिप्रायादर्थानां व्यवस्था न तु धर्मतः ।
शब्दादर्थाः प्रतीयन्ते सम्भेदानां विधायकः[5] ।।

---

१. को हि समर्थो नाम धातु-प्रातिपदिक-प्रत्ययनिपातानामर्थानादेष्टुम् ।
अष्टा०, २।१।१, महाभा० ।

२. किं पुनः कारणमर्था नादिश्यन्ते ? तच्च लघ्वर्थम् ।
......असम्भवः खल्वपि अर्थादेशनस्य ।......
......अप्रवृत्तिः खल्वर्थादेशनस्य । अष्टा०, २।१।१, महाभा० ।

३. वा०प०, २।४३५ ।

४. वा०प०, २।४३६, पुण्य० ।

५. वा०प०, ३।१४।१९९, मतत्या प्रथमा पङ्क्तिः बहुत्र नोपलभ्यते । (ले०)

वक्ता श्रोता च संमेल्य यादृशेन शब्देन यादृशम् अर्थं निरूपयति, तादृशेन शब्देन तादृशोऽर्थोऽवगम्यते। शब्देषु वास्तविकमित्थं किञ्चनाऽपि सामर्थ्यं नाऽस्ति यत् स स्वतोऽर्थं प्रत्याययेत्—

लक्षणाद् व्यवतिष्ठन्ते पदार्था न तु वस्तुतः।
उपकारात् स एवाऽर्थः कथञ्चिदनुगम्यते[1]॥

एवञ्च पाणिनीये शब्दाऽनुशासने पौरुषेय एवाऽर्थः स्वीक्रियते। शब्दार्थ-व्यवस्था हि सामाजिकी परम्परा विद्यते। व्यवस्थेयं दिनद्वये दिनत्रये वा स्थापयितुं न शक्यते। बहुकालसापेक्षा खल्वियं शब्दार्थव्यवस्था वर्तते। ज्ञानस्य सर्वसाधनानाम् अर्थावगतावेव परिणतिर्जायते। शब्दश्चाऽपि ज्ञानसाधनमेव यतो हि अर्थज्ञानफला हि वाक् स्वीक्रियते[2]।

---

१. वा०प०, २।४४४।
२. अर्थपरिज्ञानफला हि वाक्।

# अर्थकाण्डे सप्तमः समुद्देशः

## अपभ्रंशादर्थबोधः

शब्दगतं द्विविधं साधुत्वं प्राक् प्रतिपादितम्। यस्माच्छब्दस्वरूपात् प्रत्ययविधिः स्वीक्रियते, तस्य शब्दस्वरूपस्य श्रुतिलक्षणं साधुत्वं विज्ञैः स्वीकृतम्, परिनिष्ठितरूपञ्च प्रक्रियालक्षणं साधुत्वमभिप्रेतम्। कैश्चित् प्रत्ययविधावपभ्रंशानां शब्दानां प्रकृतित्वं स्वीकृतं कैश्चिच्चाऽस्वीकृतम्। पतञ्जलिः 'यर्वाण-तर्वाण' इति अपभ्रंशान् प्रत्ययविधौ प्रकृतित्वेन प्रायुङ्क्त। पुनरपि पाणिनीयस्याऽस्य तन्त्रस्य वेदाङ्गत्वेन, अपभ्रंशानाञ्च वेदाऽनुपयोगित्वेन तेषामनुशासनीयत्वं नाऽभ्युपगतं पाणिनीयैराचार्यैरिति प्रसाधितं प्रागस्माभिः। उच्चारितैरपभ्रंशैः शब्दैरर्थाऽवगतिः भवति न वेति विचार्यतेऽत्र।

शब्दे हि व्यवहारे लोकः परमं प्रमाणं भवतीति अनेकत्राऽस्माभिः सप्रपञ्चं प्रतिपादितम्। कात्यायनः[1] पतञ्जलिश्च[2] पाणिनीयस्याऽस्य शब्दानुशासनस्याऽऽधारं लोकं व्याचष्ट। लोकत एव शब्दानधिगत्य तेषामर्थान् निर्धार्य तयोः सम्बन्धञ्च निश्चित्य पाणिनीयमिदं व्याकरणं प्रवृत्तमिति तयोरभिप्रायः। अल्पीयस्सु हि साधुशब्देषु लोकाः प्रवर्तमाना अवलोक्यन्ते। आचार्यैः असाधुत्वेनोद्घोषितेषु अपभ्रंशेष्वेव बाहुल्येन प्रवर्तमाना दृश्यन्ते। अर्थाऽवगतिरपि साध्वसाधुशब्देषु समाना एवाऽवलोक्यते। प्रसिद्धिमागतैरपभ्रंशैस्तु साधुशब्दतो सुगमतरार्थाऽवगतिरवलोक्यते। एवञ्च यदि पाणिनीयतन्त्रस्याधारभूतो लोकः शब्दार्थनिर्धारणे प्रमाणत्वेनाऽभ्युपगम्येत तर्हि अपभ्रंशशब्दानामपि वाचकत्वमक्षतं सुस्पष्टम्।

कतिपये आचार्या अपभ्रंशशब्दानां साक्षाद् वाचकत्वं नानुमन्वते। तेषां मतेऽपभ्रंशशब्दैः पूर्वं साधुशब्दाः स्मर्यन्ते, ततः स्मृतैः तैः शब्दैः शाब्दः प्रत्ययो भवति। असाधुशब्दानां साधुशब्दैः सह तादात्म्यं विना अर्थावगतिर-

---

१. लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्मनियमः। अष्टा०, का०वा० २।

२. कथं पुनर्ज्ञायते—सिद्धः शब्दोऽर्थः सम्बन्धश्चेति ? लोकतः। अष्टा०, महाभा० पस्पशा०।

३. पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु।
प्रसिद्धिमागता येषु तेषां साधुरवाचकः॥ वा०प०, १।१५३।

सम्भविनी । एवञ्चैतन्नये अपभ्रंशशब्दादानुमानिक एवाऽर्थाऽवबोधः—

ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ।
तादात्म्यमुपगम्यैव शब्दार्थस्य प्रकाशकाः ॥[1]

अस्मादेव केचनाऽपभ्रंशान् साक्षादवाचकानभ्युपगच्छन्ति । यथा साधुशब्दानां परस्परं पर्यायसद्भावो न तथा साध्वसाधुशब्दयोः—

न शिष्टैरनुगम्यन्ते पर्याया इव साधवः ।
ते यतः स्मृतिशास्त्रेण तस्मात् साक्षादवाचकाः ॥[2]

वस्तुतोऽपभ्रंशादपि शाब्दबोधो भवत्येव । कात्यायनः[3] पतञ्जलिश्च[4] वक्तुः भावनाविशेषं शब्दार्थं व्याचष्ट । भर्तृहरिश्च शब्दजन्यसम्प्रत्ययविशेषं शब्दार्थमङ्गीचकार ।[5] एवञ्चोभयविधेऽर्थलक्षणेऽपि अपभ्रंशानां वाचकत्वं सिद्ध्यति । भाषातात्त्विकदृष्ट्याऽपि एवंविधः कश्चनाऽपि हेतुर्नाऽस्ति, येनाऽपभ्रंशानाम् अवाचकत्वं स्वीक्रियेत । येन (वृद्धव्यवहर्तृपरम्परारूपेण) शब्दार्थौ अवलोक्येते स लोक इति लोकशब्दव्युत्पत्तिं स्वीकुर्वतो नागेशस्याऽपि[6] लोकोऽर्थनिर्धारणे प्रमाणत्वेन अभिप्रेतः । स्वरूपतः कश्चनाऽपि शब्दः साधुरसाधुर्वा सार्थको निरर्थको वा न भवति । शब्दानां साधुत्वासाधुत्वयोः सार्थक्यनैरर्थक्ययोश्च प्रमाता लोक एव भवति । कस्यचनाऽपि शब्दशास्त्रस्याधारो लोको व्याख्यातुं शक्यते । लोकतोऽपभ्रंशानां सार्थकत्वे अभ्युपगते कस्यचनाऽप्याचार्यस्य वचः तेषां नैरर्थक्यप्रतिपादने नाऽलमिति सुस्पष्टं विज्ञेयम् । शब्दानां साधुत्वस्याऽसाधुत्वस्य सार्थक्यस्य नैरर्थक्यस्य च व्यवस्था सामयिकी भवति न वाचनिकीति इदमित्थन्तया वक्तुं शक्यते ।

निमित्तवशात् कश्चनाऽपि शब्दः कञ्चनाऽप्यर्थमभिधातुं समर्थो भवति—

एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः ।
निमित्तभेदादेकस्य सार्वार्थ्यं तस्य विद्यते ॥[7]

---

१. वा०प०, १।१४९ ।

२. वा०प०, १।१५० ।

३. सर्वे भावाः स्वेन भावेन भवन्ति, स तेषां भावः । अष्टा०, ५।१।११९, वा० ६ ।

४. सर्वे शब्दाः स्वेनाऽर्थेन भवन्ति स तेषामर्थः । अष्टा०, ५।१।११९, महाभा० ।

५. यस्मिन् तूच्चरिते शब्दे यदा योऽर्थः प्रतीयते ।
तमाहुरर्थं शब्दस्य नाऽन्यदर्थस्य लक्षणम् ॥ वा०प०, २।३३० ।

६. लोक्यते येन शब्दार्थौ लोकस्तेन स उच्यते ।
व्यवहारोऽयत्रा वृद्धव्यवहर्तृपरम्परा ॥
[अष्टा०, ४।१।३, महाभा०, प्र०, उद्द्यो०—नागेशेनोद्धृतः ।

७. वा०प०, २।२५० ।

अतएव शब्दतत्त्वविद्भि: सर्वे सर्वार्थवाचका: इति सिद्धान्त: स्वीकृत: ।

## अर्थस्य नित्यत्वम्

शब्दकाण्डेऽस्माभि: पतञ्जलिचर्चितं भाषातात्त्विकं नित्यत्वस्वरूपं समुपस्थापितम् । तदनुसारेणात्र पाणिनीयसम्मतमर्थनित्यत्वस्वरूपमपि विचार्यते । लोकाच्छब्दानामवगतार्थ: पाणिनि: शब्दाऽनुशासनं प्रणिनायेति कात्यायन: समाचष्ट ।[1] सिद्धे शब्दार्थसम्बन्धे इति कात्यायनवार्तिकं व्याचक्षाण: पतञ्जलि: नित्यपर्यायवाचिनं सिद्धशब्दमभाषत ।[2] नित्यमर्थमभिमत्य पाणिनि: शास्त्रे प्रवृत्त इति आचार्यद्वयस्याऽभिप्राय: ।

अर्थनित्यत्वेन किमभिप्रेतमाचार्यद्वयस्येति विचारविषयो विद्यते । अर्थस्याऽव्यवस्थितत्वादनियतत्वाच्च अर्थेषु कूटस्थत्वादिलक्षणं परमार्थनित्यत्वमसम्भवम् । अत एव पतञ्जलिरर्थे कूटस्थत्वादिलक्षणनित्यत्वम् अस्वीकृत्य[3] अन्यन्नित्यत्वं प्रत्यपादयत् । यस्मिन् वस्तुनो मूलतत्त्वं कदाचिन्न विहन्यते, तदपि नित्यमिति पतञ्जलेर्मतम् ।[4] सुवर्णस्य विभिन्नानि आभूषणानि निर्माय पुनर्विकृत्य, पुनश्चाऽन्यदाभूषणं निर्मीयते । तथापि तत्र सुवर्णत्वं सन्तिष्ठत एव, न विहन्यते कदाचित् । तथा शब्देष्वपि बोध्यम् । एकेन शब्देनाऽद्य कश्चिदर्थोऽभिधीयते, कदाचिदन्य:, पश्चाच्च तेनैव शब्देनाऽपरोऽर्थोऽभिव्यज्यते । आभूषणाकृतिरिव शब्दप्रवृत्तिनिमित्तस्याऽनियतत्वेऽपि अस्थायित्वेऽपि तत्र सुवर्णमिव शब्देऽभिधेयतत्त्वं नित्यं सन्तिष्ठते । अभिधेयात्मना तत्र तद्भावस्याऽऽविनाशात् कश्चिदपि शब्द: कदाचिदपि अभिधेयरहितो न भवति । केनाऽपि शब्देन कश्चिदप्यर्थ: कदाचिदपि अभिधातुं शक्यते । अतोऽभिधेयतत्त्वस्याऽविनाशादर्थस्य नित्यत्वं व्यवह्रियते ।

भाषातात्त्विकमिमं सिद्धान्तं व्याचक्षाण: कैयटो भ्रान्तोऽवलोक्यते । अर्थनित्यत्वमन्यथा प्रस्तुवन् कैयट: शब्दस्य वाच्यं ब्रह्म स्वीकृत्याऽर्थनित्यत्वं व्याचष्ट ।[5] परिमितसम्प्रत्ययवतां लौकिकानां कृते कथं शब्दै: ब्रह्मेदं वाच्यं

---

१. सिद्धे शब्दार्थसम्बन्धे , अष्टा० का०वा० १ ।

२. सङ्ग्रहे तावत् कार्यप्रतिद्वन्द्विभावान्मन्यामहे—नित्य-पर्यायवाचिनो ग्रहणमिति । इहाऽपि तदेव । अष्टा०, महा० पस्पशा० ।

३. अथवा नेदमेव नित्यलक्षणम्—ध्रुवं कूटस्थमविचालि अनपायोपजनविकार्यनुत्पत्त्यवृद्ध्यव्यययोगि यत्तद् नित्यमिति । अष्टा०, महाभा० पस्पशा० ।

४. तदपि नित्यं यस्मिन् तत्त्वं न विहन्यते । किं पुनस्तत्त्वम् ? तद्भावस्तत्त्वम् अष्टा० महाभा०, पस्पशा० ।

५. ब्रह्मदर्शने गोत्वादिजातेरपि असत्यत्वादनित्यत्वम् । आत्मैवेदं सर्वमिति श्रुतिवचनात् । अष्टा० महाभा०, पस्पशा०, प्र० ।

भवतीति कैयट एव उत्तरितुं समर्थः सम्भवेत् । बुद्धिद्वयव्यापारो हि वागिति अनेकत्राऽस्माभिः सप्रपञ्चं प्रतिपादितम् । कम्बुग्रीवादिमदर्थं प्रत्याययितुकामस्य तमेवाऽर्थञ्च प्रत्येतुमनसो महानुभावस्य मध्ये कथमिदम् अनाहूतं ब्रह्म समापतिष्यतीति कैयट एव जानाति । एतत्तु इदमित्थन्तया वक्तुं शक्यते यच्छब्दानां स एव अभिधेयो भवति यो वक्त्रा परिकल्पितः श्रोत्रा च अवगतो जायते । शब्दार्थनिर्धारणे किञ्चिदपि शास्त्रं किञ्चिदपि समारोपयितुं न शक्नोति । शब्देषु अभिधेयात्मना वर्तमानमर्थनित्यत्वं महान् भाषावैज्ञानिको भर्तृहरिरपि स्वीकुरुते—

अनित्येष्वपि नित्यत्वमभिधेयात्मना स्थितम् ।
अनित्यत्वं स्वशक्तिर्वा सा च नित्यान्न बिभिद्यते ॥[1]

अनित्येषु भावेषु अन्यथा लोकव्यवहारो दृश्यते, अन्यथा च नित्येषु भावेषु । अर्थक्रियार्थिभिः घटादयो नित्या भावा अन्यत आनीयन्ते, उत्पादविनाशवन्तश्चाऽवलोक्यन्ते । तेषां निवृत्तौ यत्नः अपेक्षते ।[2] नैवं शब्देऽर्थे लोकप्रवृत्तिः विद्यते । नहि शब्दार्थः कुतश्चिदन्यत आनीयते । लोके वस्त्वर्थमुपादाय प्रयोक्तारः शब्दान् प्रयुञ्जते प्रतिपत्तृभिश्च बुद्धिप्रतिभासरूपोऽभिधेयार्थोऽवबुध्यते । यदा यदा शब्दः श्रूयते तदा तदा गृहीतशक्तिकस्य प्रतिपत्तुरर्थाकारा बुद्धिरुपजायते । नैतेषां निर्वृत्तौ कश्चिद् यत्नो दृश्यते ।[3] अतोऽर्थतत्त्वस्य नित्यत्वमिति भावः ।[4] अनादिवृद्धव्यवहारपरम्परया एव शब्दार्थविनिश्चयो भवति ।

## शब्दशक्तयः

अतः प्रागर्थभेदनिरूपणायामर्थस्य मुख्यो गौणश्चेति भेदद्वयं प्रदर्शितम् । शब्दशक्तिवशाद् अर्थद्वयमेतत् प्रतीयत इत्याचार्या व्याचक्षते । शब्दनिष्ठा हि शक्तिरर्थप्रवृत्तौ जनान् प्रयोजयति । केचन शक्तिमिमां वृत्तिपदेनाऽपि सङ्गिरन्ते । आचार्यैः शब्दस्य तिस्रः शक्तयः स्वीकृताः, १. अभिधा, २. लक्षणा, ३. व्यञ्जना चेति । कैश्चित् तात्पर्याख्या वृत्तिरपि प्रस्तूयते । संक्षेपतोऽत्र वृत्तयो विचार्यन्ते ।

---

१. वा०प०, ३।३।३४ ।

२. ये पुनः कार्या भावाः, निर्वृत्तौ तावत्तेषां यत्नः क्रियते ।
अष्टा० महाभा०, पस्पशा० ।

३. यल्लोकेऽर्थमुपादाय शब्दान् प्रयुञ्जते, नैषां निर्वृत्तौ यत्नं कुर्वन्ति ।
अष्टा०, महाभा०, पस्पशा० ।

४. प्रवाहनित्यत्वादर्थस्य नित्यत्वम्... अष्टा०, महाभा०, पस्पशा० १० ।

१. अभिधा—

अभिधया वृत्त्या वाच्यार्थोऽवगम्यते, लक्षणया लक्षणार्थः, व्यञ्जनया च व्यङ्ग्यार्थः प्रतीयते ।[1] प्रवृत्तिनिमित्तरूपं प्रवृत्तिनिमित्ताश्रयरूपञ्चाऽर्थम् अभिधया वृत्त्याऽवगच्छन्ति जनाः । अभिधया विज्ञातमर्थं मुख्यार्थं मन्वते विशेषज्ञाः ।[2]

२. लक्षणा—

वाच्यार्थाऽनुपपत्तौ यया शक्त्या वाच्यार्थसम्बद्धोऽर्थो बोध्यते, सा लक्षणा भवति । 'गौरयं' वाहीकः' इत्यत्र जाड्यादिगुणकोऽर्थो लक्षणया ज्ञायते । लक्षणयाऽधिगतोऽर्थो लक्ष्य उच्यते । तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्याच्च अतस्मिन्नर्थे तदर्थस्य बुद्धिरुपजायत इति पतञ्जलिना प्रतिपादितम् । एवञ्च प्राग् गौणाऽर्थनिरूपणायामस्माभिः सम्यक् प्रतिपादितम् । जहदजहद्भेदेन द्विधेयं वृत्तिः स्वीक्रियते ।

३. व्यञ्जना—

अभिधायां लक्षणायाञ्च वृत्त्यां विरतायां यया वृत्त्या कश्चन विलक्षणोऽर्थः प्रतीयते, सा व्यञ्जना[3] वृत्तिरिष्यते । व्यञ्जनयाऽधिगतोऽर्थो व्यङ्ग्यार्थो भवति । 'गतोऽस्तमर्कः' इत्यतोऽभिधया सायं जातमिति वाच्यार्थो गम्यते । परमस्माद् अपरोऽप्यर्थो यथाप्रसङ्गमवगम्यते । अनेन वाक्येन वाहीकः 'पशूनादाय गोष्ठं गन्तव्यमिति' जानाति, छात्रोऽध्ययनविराममवगच्छति, खेलार्थिनश्च क्रीडावसानं कुरुते । इत्येवमर्थप्रतिपत्तौ शब्दशक्तिः स्वीक्रियते !

□

---

१. सा च वृत्तिस्त्रिधा—शक्तिर्लक्षणा व्यञ्जना च ।

वै०सि०ल०मं०, शक्तिनि० ।

२. वाच्यार्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः ।
व्यङ्ग्यो व्यञ्जनया ताः स्युः तिस्रः शब्दस्य शक्तयः ॥

सा०द०, २।३।

३. विरतास्वभिधाद्यासु ययाऽर्थो बोध्यते परः ।
सा वृत्तिर्व्यञ्जना नाम शब्दस्याऽर्थादिकस्य च ॥ सा०द०, २।१२।

# अर्थकाण्डेऽष्टमः समुद्देशः

## अर्थपरिवर्तनम्

अर्थस्याऽनैयत्यं परिवर्तनञ्चाऽस्माभिः चर्चितं सुविचारितञ्च प्रागतः । वक्तुः वक्तृत्वस्य श्रोतुश्च प्रतिपत्तृत्वस्य दौर्बल्यादिकारणाच्छब्दानामर्थ-विपर्यासो दृश्यते । प्रकृतिप्रत्यययोरर्थवत्ताया अनैयत्यं प्रदर्शयन् कैयटः समाचष्ट यदेकस्य शब्दस्य यदि एको नियतोऽर्थः स्यात्तदा शब्दानाम् अर्थविषये संशयाऽनवकाश एव जायेत ।[1] अभिधेयरूपस्य अर्थस्य एतदेवाऽनैयत्यं संलक्ष्य पतञ्जलिराचार्य एकस्य शब्दस्य बह्वर्थकत्वं प्रत्यपादयत् ।[2] एक एव गुणशब्दः प्रवृत्तिनिमित्तभेदादनेकार्थाऽभिधायी दृश्यते ।[3] क्वचिद् अवयविनमर्थमभिधत्ते—द्विगुणा रज्जुरिति । अन्यत्र द्रव्याऽर्थाऽभिधायी गुणशब्दो दृश्यते — गुणवानयं छात्र इति, यस्मिन् नित्याऽभिवादनशीलत्वादिको गुणो भवति । एकत्राऽप्रधानमप्यर्थो गुणपदस्याऽवलोकितः—गुणभूता वयमत्रेति । वैशेषिकनय-प्रसिद्धस्य द्रव्यसमवेतस्य गुणपदार्थस्याऽभिधायकमपि गुणपदं विद्यते—चतुर्विंशतिः गुणा इति । शब्देषु अर्थविपर्यासः सततं दृश्यत इति निष्कर्षः ।

अर्थस्य विपर्यासमिमं विभागत्रये परिगणयितुं शक्यते—
१. अर्थसङ्कोचः, २. अर्थविस्तरः, ३. अर्थादेशश्चेति ।

अर्थस्येदं परिवर्तनं भाषातात्त्विकं स्वाभाविकञ्च विद्यते केनचिच्छास्त्रीयेण वचनेनेदमवरोद्धुं न शक्यते । प्रकृतिप्रत्यययोरर्थवत्ताया अनैयत्यं शब्द-शास्त्रिणामप्यभिमतं विद्यते । यास्कः[4] पतञ्जलिश्च[5] तथ्यमिदं समुपास्था-

---

१. यद्येकः शब्द एकस्मिन्नर्थे नियतः स्यात्, तत एतद् युज्यते वक्तुम्, यतस्त्वनियमः ततः प्रकृतेरेव सर्वेऽर्थाः स्युः ।

अष्टा०, १।२।४५, महाभा०, प्र० ।

२. एकश्च शब्दो बह्वर्थः । अष्टा० १।२।४५, महाभा० ।

३. गुणशब्दोऽयं बह्वर्थः । अष्टा० ५।१।११९, महाभा० ।

४. पश्यामः समानकर्मणां नामधेयप्रतिलम्भमेकेषाम् । नैकेषां यथा—
तक्षा परिव्राजको जीवनो भूमिज इति ॥ निरुक्तम्, १।१२ ।

५. दर्शनं वै हेतुः । अष्टा०, १।२।७०, महाभा० ।

पयत्। प्रयोक्ता प्रतिपत्ता च शब्दस्याऽर्थनिर्धारको भवति । लोकव्यवहारं दृष्ट्वा प्रयोक्ता यं शब्दं यत्राऽर्थे प्रयुङ्क्ते तस्य शब्दस्य स एवाऽर्थो जायते ।[1] प्रयोक्तुः प्रतिपत्तुश्च बुद्धिभेदोऽर्थभेदस्य प्रयोजको विद्यते अर्थपरिवर्तनस्याऽयम् एव मूलाधारो निगद्यते । वर्गीकृतोऽर्थविपर्यासोऽत्र विविच्यते ।

## १. अर्थसङ्कोचः

सर्वस्याऽपि शब्दस्य यत् किञ्चिद् व्युत्पत्तिनिमित्तं सन्तिष्ठते । गमनरूपाद् व्युत्पत्तिनिमित्तात् सास्नालाङ्गूलादिमदर्थाऽभिव्यक्तये गोशब्दः प्रयुज्यते । व्युत्पत्तिनिमित्तसाम्यादेकः शब्दोऽनेकार्थाभिधायी जायते । अतो विपरीतमपि दृश्यते । बहवः शब्दा नियतविषया भवन्ति । लोकव्यवहारावेक्षणाद् नियतविषयेषु शब्देष्वर्थसङ्कोचो व्यवतिष्ठते । व्युत्पत्तिनिमित्तसाधर्म्याऽस्वीकृतिरेवाऽर्थसङ्कोचः समाख्यायते । भरणरूपाद् व्युत्पत्तिनिमित्ताच्छाब्दिकैः बन्धुः भ्राता इति समाख्यातं व्युत्पादितञ्च । भ्रातृशब्दव्युत्पत्तेः भरणरूपं निमित्तं चेदं स्वसर्यपि सम्भवति । यतो लोके स्वसाऽपि भरणकर्मणि समर्थाऽवलोक्यते । तक्षणरूपव्युत्पत्तिनिमित्ताद् लोके तक्षा-शब्दः प्रवर्तते । तत्कर्मणि प्रवृत्ताः केचन एव तत्सञ्ज्ञां लभन्ते, न तु सर्वे । आशु-आप्तव्यत्वाज् जायापिता श्वशुर इति व्यवह्रियते । श्वशुरशब्दस्य व्युत्पत्तिनिमित्तमिदं श्वश्र्वामपि विद्यते । यतः श्वश्रूरपि आश्वाप्तव्या दृश्यते । परं तथा न व्यवह्रियते । अर्थसङ्कोचशीलस्य लोकस्य प्रामाण्यं स्वीकृत्य पतञ्जलिः समाचष्ट यदनेकेषां प्रवृत्तिनिमित्तानां व्युत्पत्तिदृष्ट्या एकशब्दाऽभिधेयत्वसम्भवेऽपि, तथा व्यवहारो न भवति, लोकव्यवहारस्य तत्र प्रामाण्यात् ।[2] लोकव्यवहारे यत्रार्थे यः शब्दः प्रयुक्तः, तस्य शब्दस्य स एवाऽर्थोऽभ्युपगम्यते । नहि लौकिके व्यवहारे स्वस्रर्थे भ्रातृशब्दो दृष्टः, न वा श्वश्र्वर्थे श्वशुरशब्दः । लोकव्यवहारावेक्षणं हि हेतुरत्र ।

भाषातत्त्वदृष्ट्याऽर्थसङ्कोचो नाम स्वाभाविकोऽनिवार्यश्च स्वीक्रियते । सर्वे शब्दाः सर्वाऽर्थाभिधानसमर्थाः सम्भवन्तीति शब्दतत्त्वनिरूपणाप्रसङ्गेऽस्माभिश्चर्चितो विषयः कस्यचनाऽपि शब्दस्य कश्चिदपि अर्थो वाचनिकः शब्दोपज्ञो वा न भवति । प्रयोक्तुः प्रतिपत्तुश्च बुद्धिरेव शब्दस्य प्रवृत्तिनिमित्तं भवति । शब्दे श्रुते यादृशी बुद्धिरुपजायते सा एव शब्दाऽभिधेयो

---

१. प्रयोक्तैवाऽभिसन्धत्ते साध्यसाधनरूपताम् ।
अर्थस्य वाऽभिसम्बन्धकल्पनां प्रसमीहते ॥ वा०प०, २।४३५ ।

२. दर्शनं वै हेतुः । नहि स्वसरि भ्रातृशब्दो दृश्यते । अष्टा०, १।२।७०, महाभा० ।

विजायते ।[1] एवञ्च केनचिदपि शब्देन कश्चनाऽप्यर्थोऽभिधातुं शक्यते । परमित्थं सति व्यवहारेऽव्यवस्था सुस्पष्टा । अतः शाब्दिकैः व्यवहाराय अर्थनियमः स्वीक्रियते । कैयटः सर्वाऽर्थप्रत्यायनसामर्थ्ययुक्तं शब्दम्, सर्वशब्द-प्रत्याय्यसामर्थ्ययुक्तञ्चार्थं स्वीकृत्य व्यावहारिकमेवार्थनियमं व्याचष्ट ।[2] सर्वाऽर्थाऽभिधानशक्तिरपि शब्दो यदा व्यवहारसम्पादनार्थं कस्मिंश्चिद् विशिष्टेऽर्थे लोके प्रयुज्यते तदा तद्विषयिकामेव प्रतीतिं जनयति, नान्यविषयिकाम् ।

लौकिके आचारे शास्त्रीये च व्यवहारेऽर्थसङ्कोचप्रवृत्तिवशादेव शब्दा नियतविषया जायन्ते[3] । रक्तो गौः 'लोहितः' इत्युच्यते, अश्वश्च रक्तः 'शोणः' इत्यभिधीयते । कृष्णवर्णा गौः कृष्णा समाख्यायते, अश्वस्तु कृष्णः 'हेम' इति व्याह्रियते । समाने हि शुक्ले वर्णे गौः श्वेतो भवति, अश्वस्तु कर्क उच्यते[4] । शब्दव्यवहारे लोकदर्शनस्य प्रामाण्यं प्रति कश्चिद् वाचनिको नियमो नाऽपेक्षते[5] । स्वभावत एव लोकः शब्दार्थविषये प्रमाणम् । तत्र किमस्माभिः शक्यं कर्तुम्[6] ।

मृगशब्दोऽर्थसङ्कोचस्याऽतीव मनोहारि उदाहरणं विद्यते । मृगपदमद्यत्वे प्रायो हरिणपशुविशेषमात्राऽर्थाभिधायि दृश्यते । परं मूलतो मृगशब्दः पशु-सामान्यम् अर्थमभिधत्ते स्म । ऋग्वेदेऽनेकत्र आरण्यकं पशुमर्थमभिधातुं मृगशब्दः प्रयुक्तः । यथा—

'मृगो न भीमः कुचरो गिरिष्ठाः'[7] ।

सस्य-तृणादिकस्य मार्गणं हि मृगशब्दस्य व्युत्पत्तिनिमित्तं विद्यते । तद्रीत्याऽपि मृगशब्दस्य पशुसामान्यं प्रवृत्तिनिमित्तं जायते । वानरमर्थमभिधातुं प्रयुक्ते

---

१. यस्मिन् तूच्चरिते शब्दे यदा योऽर्थः प्रतीयते ।
तमाहुरर्थं तस्यैव नान्यदर्थस्य लक्षणम् ॥ वा०प०, २।३२९ ।

२. सर्वार्थप्रत्यायनशक्तियुक्तो हि शब्दः, सर्वप्रत्याय्यशक्तियुक्तश्चार्थः इति व्यवहाराय नियमः । अष्टा०, १।१।६८, महाभा०प्र० ।

३. अन्यत्राऽपि हि नियतविषयाः शब्दा दृश्यन्ते । अष्टा०, २।२।२९, महाभा० ।

४. द्र०—अष्टा०, २।२।२९, महाभा० ।

५. इह लोकाच्छब्दाऽर्थाऽवसायः··· । वा०प० ३।१४।३३ हेला० ।

६. द्र०—अष्टा०, ३।२।१२४, महाभा० ।

७. ऋग्वे० सं०, १।५४।२
द्र०—ऋक् सं०, १।१७३।२, ८।१।२०, १०।१४६।६ इत्यादौ
अथर्ववेद सं०, ४।३।६, १०।१।२६, १२।१।४८
ऐत०ब्रा०, ३।३१।२ ।

विटपिमृगपदे, शृगालमर्थमभिधातुं प्रयुक्तेषु 'मृगधूर्त-निशामृगप्रभृतिषु' पदेषु, लट्वामर्थमभिधातुं प्रयुक्ते पर्णमृगप्रभृतिपदे, सिंहपर्यायवाचकेषु मृगेन्द्र-मृगपति-मृगराजप्रभृतिपदेषु च विद्यमानस्य मृगशब्दस्य पशुसामान्यमेवार्थः। पशुसामान्यमर्थमुपादायैव मृगयामृगयुप्रभृतीनि पदानि प्रयुज्यन्ते। परमर्थसङ्कोचाद् मृगशब्दो हरिणमात्राऽर्थाभिधायी सञ्जातः।

व्युत्पन्नस्याऽपि शब्दस्याऽभिधेयो नियतविषयत्वाद् रूढो योगरूढो वा सञ्जायते[1]। अयमपि अर्थसङ्कोचस्यैकः प्रकारः। लोके वटवृक्षो 'न्यग्रोध' इति ख्यातः। प्रक्षरणमात्रसाधर्म्याद् न्यग्रोधः प्लक्षो नोच्यते, न वा प्लक्ष एव न्यग्रोधोऽभिधीयते। गमनरूपक्रियावशात् सास्नालाङ्गूलादिमानर्थो गौरुच्यते। न हि कश्चित् पुरुषोऽपि गच्छन् गौरुच्यते, गोपदस्य नियतविषयत्वात् रूढिशब्देषु क्रिया व्युत्पत्तिमात्रप्रयोजना भवति। रूढिशब्दानामभिधेयेषु क्रियाश्रयणस्य अतोऽन्यत् किञ्चिदपि फलं नास्ति[2]। पुत्रशब्दव्युत्पत्तौ पुष्णातीति पुत्र उच्यते। पोषणक्रियारहितोऽपि सुतः पुत्र एव भवति। पुत्रादन्यो भ्रातृव्यादिरर्थः पोषणक्रियायुक्तोऽपि पुत्रो न भवति। अतो रूढिशब्देषु क्रियाश्रयणस्य किञ्चिद् विशिष्टं फलं नावलोक्यते। अत एव विश्वनाथः शब्दानां व्युत्पत्तिनिमित्तस्य प्रवृत्तिनिमित्तस्य च सामञ्जस्यं निषिषेध[3]। शब्दानां व्युत्पत्तिनिमित्तं किञ्चिदन्यद् भवति, प्रवृत्तिनिमित्तञ्च किञ्चिदन्यदेव जायते। मण्डपादिशब्देषु व्युत्पत्तिनिमित्तप्रवृत्तिनिमित्तयोरसामञ्जस्यं स्पष्टमेव। पोषणक्रियारहितः पावनक्रियावियुक्तो वा सुतो व्युत्पत्तिदृष्ट्या कथं पुत्र उच्येत। प्राचीनप्रयोगेषु पशुशब्दस्याऽनेकानि प्रवृत्तिनिमित्तानि दृश्यन्ते। ऋक्संहितायां पशुशब्दो मनुष्यसमुदायार्थे पशुसमुदायार्थे वा प्रयुक्तः[4]। अद्य लौकिके व्यवहारे पशुशब्दः चतुष्पदप्राणिविशेषार्थे प्रयुज्यते।

वस्तूनां नामकरणमपि अर्थसङ्कोचस्य विधायकं भवति। व्युत्पत्तिदृष्ट्या शब्दोऽनेकार्थः सम्भवति। सञ्ज्ञाकरणाच्च शब्दो नियतविषयो जायते। व्याकरण-निरुक्तदर्शनादिसञ्ज्ञाशब्दा योगतो बह्वर्थका अपि सञ्ज्ञासामर्थ्याद्

---

१. रूढत्वाच्च लौकिकस्यार्थस्य प्रक्षरणमात्राद् न्यग्रोधः प्लक्षो नोच्यते। नहि गमनाद् गौरिति पुरुषोऽपि गच्छन् गौरित्यभिधीयते। वा०प०, ३।१४।३३ हेला०।

२. रूढशब्देषु क्रिया केवलं व्युत्पत्त्यर्थमाश्रीयते।
अष्टा०, ३।२।५६, महाभा० प्र०, उद्द्यो०।

३. अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम्। सा०द०, २।५।

४. देवीं वाचमजनयन्त देवाः तां विश्वरूपाः पशवो वदन्ति।
ऋक् सं०, ८।१००।११।

नियतविषया वर्तन्ते । परिष्कारार्थकः संस्कारशब्दो गर्भाधानादिषोडशप्रक्रिया-वाचकः स्वीक्रियते । संस्कारविशेषाणां निष्क्रमणोपयनयन-समावर्त्तनादीनि नामान्यपि अर्थविशेष एव रूढानि विद्यन्ते । प्रसङ्गात् सामर्थ्याच्च सम्बन्धि-शब्दैः सङ्कुचितोऽर्थः अभिधीयते[1] । मातरि वर्तितव्यमित्युक्ते स्वत एव गम्यते स्वस्यां मातरीति । सम्बन्धादत्र नियतोऽर्थो विज्ञायते —या यस्य मातेति ।

**प्रत्ययः —**

प्रत्यययोगादपि शब्दानामर्थसङ्कोचो दृश्यते । सर्वोऽपि शब्दः प्रत्यय-योगात् प्राक् सामान्यार्थाऽभिधायी विज्ञायते । प्रत्यययोगे सति च तस्याऽभिधेय-क्षेत्रं सङ्कोचमायाति । 'अतिशायने तमबिष्ठनौ'[2] इति पाणिनीयं सूत्रं भाषमाणः पतञ्जलिरेतादृशान् कतिपयान् प्रयोगान् प्रादर्शयत् । यः शकटं वहति, स गौरुच्यते । यश्च शकटमपि वहति सीरञ्चाऽपि, स गोतरः कथ्यते[3] । गोसामान्यार्थाऽभिधायिनि गोपदे तरप्प्रत्ययेन सङ्कोचः कृतः । या समां समां विजायते सा गौर्भवति । या तु समां समां स्त्रीवत्सा विजायते सा गोतरा कथ्यते[4] । योजनचतुष्टयगामी अश्वो भवति । यस्तु अष्टौ योजनानि गच्छति सोऽश्वतर उच्यते[5] । उक्तोदाहरणेषु तरप्प्रत्ययेन प्रवृत्तिनिमित्तं निम्यते ।

## अर्थविस्तरः

लौकिका अल्पेन यत्नेन महतोऽर्थस्याकाङ्क्षिणो दृश्यन्ते[6] । परिमितया सेवयाऽपरिमितं फलं जना वाञ्छन्ति । इयमेव प्रवृत्तिः शब्दप्रयोगविषयेऽपि प्रयोक्तॄणां परिदृश्यते । एकेनोच्चरितेन शब्देनाऽनेकार्थाऽभिधानमिच्छन्ति । प्रतिपत्तारश्चाऽपि श्रुतेनैकेन शब्देनाऽनेकान् अर्थानवगन्तुमभिलषन्ति । इयमेव स्वाभाविकी प्रवृत्तिरर्थविस्तरस्य मूलं विद्यते । गोशब्दस्य प्रवृत्तिनिमित्तं

१. सम्बन्धादेतद् गम्यते—या यस्य मातेति, यो यस्य पितेति । अष्टा०, १।१।७०, महाभा० ।
२. अष्टा०, ५।३।५५ ।
३. गौरयं यः शकटं वहति, गोतरोऽयं यः शकटं वहति सीरञ्च ।
अष्टा०, ५।३।५५, महाभा० ।
४. गौरियं या समां समां विजायते, गोतरेयं या समां समां विजायते स्त्रीवत्सा च ।
अष्टा०, ५।३।५५, महाभा० ।
५. अश्वोऽयं यश्चत्वारि योजनानि गच्छति, अश्वतरोऽयं योऽष्टौ योजनानि गच्छति ।
अष्टा०, ५।३।५५, महाभा० ।
६. इह हि सर्वे मनुष्या अल्पेन यत्नेन महतोऽर्थान् आकाङ्क्षन्ति ।
अष्टा० [illegible], महाभा० ।

सास्नालाङ्गूलादिमान् पशुविशेषः स्वीक्रियते। अर्थविस्तरसरण्या चाऽयं गोशब्दः स्वर्गे बाणे पशौ वाचि दिशि नेत्रे पृथिव्यादिषु[1] चार्थेषु शक्तो दृश्यते।

यज्ञादिकर्मणामन्ते देयं द्रव्यमद्यत्वे दक्षिणाशब्देनाऽभिधीयते। वस्तुतो नेदं दक्षिणापदस्य मूलतः प्रवृत्तिनिमित्तं दृश्यते। दक्षिणाशब्दस्याऽद्यतनः अर्थोऽर्थ-विस्तरवशात् समागतः। वत्सप्रसवकर्मणि होतव्यदुग्धादिदाने च समर्थत्वाद् गोरूपं प्रवृत्तिनिमित्तमाश्रित्य दक्षिणाशब्दः प्रवृत्तो दृश्यते। ऋक्संहितायामनेकत्र गोपदार्थमभिधातुं दक्षिणापदं प्रयुक्तमवलोक्यते—

नूनं सा ते प्रति वरं जरित्रे दुहियदिन्द्र दक्षिणा मघोनी[2]।

कात्यायनश्रौतसूत्रे[3] लाट्यायनश्रौतसूत्रे[4] चाऽपि दक्षिणापदेन गावोऽभिवीयन्ते। यत्र हि यज्ञादिकर्मणि सामान्येन दक्षिणापदं प्रयुज्यते तत्र गौरेवाऽवगम्यते, न त्वन्यद् द्रव्यं तत्र विशिष्यते[5]। दक्षिणापदस्य औदार्येऽर्थेऽपि अर्थविस्तरः परिदृश्यते। अत्र कालिदासस्याऽयं प्रयोगोऽवधेयः—

"भूयिष्ठं भव दक्षिणा परिजने......[6]।"

इत्येवमर्थविस्तरः समुपस्थापयितुं शक्यते।

अर्थपरिवर्तनस्य चत्वारि तात्त्विकानि कारणानि भर्तृहरिः निर्दिदेश[7]। पुण्यराजश्च तान्यन्यार्थोपलक्षकाणीति व्याचष्ट[8]। भर्तृहरेः विवेचनेयं भाषा-

---

१. स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले।
लक्ष्यदृष्ट्या स्त्रियां पुंसि गौर्लिङ्गं चिह्नशेफयोः॥
(अमरको०, ५ नानार्थव०)

२. ऋक्सं०, २।११।२१।

३. अलिङ्गग्रहणे गोः सर्वत्र। का०श्रौ०सू०, १५।२।१३।

४. संख्यामात्रे च दक्षिणा गावः। ला०श्रौ०सू०, ८।१।२।

५. यत्र संख्यामात्रं दक्षिणामादिश्यते—द्वादशतं सहस्रं वा युतमिति न द्रव्यं विशिष्यते, तत्र दक्षिणा गावः प्रत्येतव्याः। ला०श्रौ०सू०, ८।१।२, अग्निस्वा० भा०।

६. क्वचिद् गुणप्रधानत्वमर्थानामविवक्षितम्।
क्वचित्सान्निध्यमप्येषां प्रतिपत्तावकारणम्॥ वा०प० २।३०६।
यच्चाऽनुपात्तं शब्देन तत् कस्मिंश्चित् प्रतीयते।
क्वचित् प्रधानमेवाऽर्थो भवत्यन्यस्य लक्षणम्॥ वा०प०, २।३०७।

७. अत्र च गुणप्रधानताविपर्ययः, पदार्थैकदेशाऽविवक्षा, सकलपदार्थाऽविवक्षा उपात्तपदार्थाऽपरित्यागेनैवाऽर्थोपलक्षणम् इति प्रकार चतुष्टयस्योल्लेखः। वा०प० २।३०७, पुण्य०।

८. अभिज्ञा० शाकु० ४।२०

तत्त्वदृष्ट्या अतीव महत्त्वपूर्णा विद्यते। तानि चेत्थम् अर्थपरिवर्तनकारणानि—

१. गुणप्रधानताविपर्ययः, २. पदार्थैकदेशाऽविवक्षा, ३. सकलपदार्थाऽविवक्षा, ४. उपात्तपदार्थाऽपरित्यागश्चेति।

एषु १. पदार्थैकदेशाऽविवक्षा, २. उपात्तपदार्थाऽपरित्यागश्चेत्येतद् हेतुद्वयमर्थविस्तरस्य प्रयोजकं विद्यते। १. गुणप्रधानताविपर्ययः, २. सकलपदार्थाऽविवक्षा चेत्येतद्धेतुद्वयमर्थादेशस्य प्रयोजकं वर्तते। प्रसङ्गादत्राऽर्थविस्तरस्य हेतुद्वयं निरूप्यते।

**१. पदार्थैकदेशाऽविवक्षा—**

सर्वोऽपि शब्दो यत्किञ्चित्प्रवृत्तिनिमित्तावशाल्लोके प्रवर्तते। तत्प्रवृत्तिनिमित्तमेव तस्य शब्दस्याऽर्थो निगद्यते। तत्र शब्दार्थे यदा एकांशोऽविवक्षितो भवति पदार्थैकदेशाऽविवक्षानामेकेन हेतुना शब्दार्थो विस्तृतो जायते। अर्थात् स्वीकृतस्वप्रवृत्तिनिमित्ताऽतिरिक्तमप्यर्थं शब्दोऽभिधत्ते। शब्दानां गुणत्वनिरूपणाऽवसरेऽस्माभिः प्रतिपादितं यद् गुणेषु विवक्षितेषु वस्तुनिर्देशक्षेत्रं सङ्कोचमञ्चति, अविवक्षितेषु च विस्तरम्[१]। अर्थविस्तरेऽपि इयमेव स्थितिः। गोष्ठशब्दस्य प्रवृत्तिनिमित्तं तत्स्थानं विद्यते, यत्र गावः तिष्ठन्ति[२]। गवां स्थितेरधिकरणं हि गोष्ठशब्दस्याऽर्थ इति कैयटो व्याचष्ट[३]। कालान्तरे गोष्ठपदार्थस्यैकदेशः पूर्वपदार्थोऽविवक्षितः। एवञ्च स्थानमात्राऽर्थाऽभिधायी अप्ययं गोष्ठशब्दः सञ्जातः। कात्यायनः स्थानमात्रार्थाऽभिधायिनमेव गोष्ठशब्दं स्वीकृत्य पशुनामादिभ्यो गोष्ठादीन् प्रत्ययत्वेन समाचष्ट[४]। अत एव गवां स्थानम् 'गोगोष्ठमिति' अवीनाञ्च स्थानमविगोष्ठमिति च पतञ्जलिरुदाजहार[५]।

प्रकृष्टो वीणायामिति व्यञ्जयितुं लोके प्रवीणशब्दः प्रवृत्तः। अर्थविस्तरसरण्या च पदार्थैकदेशो वीणापदार्थोऽविवक्षितः। ततः कौशलमात्रमेव प्रवीणशब्दस्य प्रवृत्तिनिमित्तं जातम्[६]। अतएव यथा गवां गोष्ठमित्युच्यते तथा

---

१. द्र०—शब्दकाण्डे 'शब्दो गुणो वा द्रव्यं वेति' प्रकरणम्।
२. गवां स्थानं गोष्ठम्। अष्टा०, ५।२।२९, महाभा०।
३. गावः तिष्ठन्ति यस्मिन्निति घञर्थे कविधानम्। अष्टा०, ५।२।२९, महाभा० प्र०।
४. गोष्ठादयः स्थानादिषु पशुनामादिभ्यः। अष्टा०, ५।२।२९, वा०, ३।
५. गोगोष्ठम्, अविगोष्ठम्। अष्टा०, ५।२।२९, महाभा०।
६. प्रकृष्टो वीणायामिति व्युत्पत्तिमात्रं क्रियते, कौशलं त्वस्य प्रवृत्तिनिमित्तम्। तेन वीणायां प्रवीण इत्यपि भवति। अष्टा०, ५।२।२९, महाभा० प्र०।

वीणायां प्रवीण इत्यपि प्रयुज्यते। बहुषु शष्पेषु मध्यात् कुशाहरणदक्षो हि कुशलशब्दस्य प्रवृत्तिनिमित्तं लक्ष्यते। अद्य तु 'यस्याऽस्ति नैपुण्यं स एव' कुशलशब्दस्याऽभिधेयः स्वीक्रियते। पदार्थेषु अर्थविकासः स्वाभाविको विद्यते। लौकिको व्यवहारो यस्य क्षेत्रं वर्तते। सर्वे लक्ष्यार्था व्यङ्ग्यार्थाश्च अर्थविस्तरस्यैवोदाहरणानि।

२. उपात्तपदार्थाऽपरित्यागः—

शाब्दिकेषु व्यवहारेषु यदर्थप्रतिपादनाय शब्दाः प्रयुज्यन्ते, सोऽर्थः तेषां शब्दानां मुख्यः प्रयोजको भवति। तत्प्रतिपादनावसरे च सान्निध्यादिवशाद् यमन्यमप्यर्थं प्रतिपादयति शब्दः, सोऽर्थः तस्य नान्तरीयको भवति। यथा लौकिके व्यवहारे घटप्रकाशनाय विनियुक्तः प्रदीपः सान्निध्याद् घटातिरिक्तमप्यर्थं प्रकाशयति तथा शब्दोऽपि स्वप्रवृत्तिनिमित्तमपि बोधयति, तत्सम्बद्धञ्चान्यमप्यर्थं प्रत्याययति।[1] शब्दसामर्थ्ये एतन्नावश्यकं यच्छब्दो विवक्षितमेवाऽर्थं बोधयेदपि तु आकाङ्क्षादिवशाद् अविवक्षितमप्यर्थं संगमयति।[2] विवक्षिताऽर्थेन सम्बद्धानन्यानपि अर्थान् प्रकाशयति शब्दः।[3] अस्तीदं प्राकृतिकं तथ्यम्। शाब्दिके व्यवहारे लौकिके वा प्रयोगे अपलपितुमेतन्न शक्यते। अग्न्यर्थाय अरण्यादीनां निर्मन्थनादिकं क्रियते लोके। तत्र अभिप्रेतादग्न्यर्थादतिरिक्तमपि अनभिप्रेतं धूमादिकं सम्बद्धं जन्यत[4] एव। अर्थविस्तरस्य इयं प्रवृत्तिरेवाऽस्ति जनिका। दध्यादिसंरक्षणार्थं विनियुक्तो बालकोऽपि अर्थविस्तरस्य पद्धतिमिमां स्वाभाविकाम् आश्रयत्येव। 'दधीदं काकेभ्यः संरक्ष्यतामिति' चोदितः बालकः काकशब्दस्य प्रवृत्तिनिमित्तादन्येभ्योऽपि उपघातकेभ्यः श्वादिभ्यः संरक्षति[5] दधि। 'भोजनमस्योपपाद्यतामिति' स्वामिना आदिष्टः सेवकः न केवलं भोज्यपदार्थमेवोपपादयति, अपितु अनुक्तमपि आसनविस्तार-

---

१. घटादिषु यथा दीपो येनाऽर्थेन प्रयुज्यते।
ततोऽन्यस्यापि साचिव्यात् स करोति प्रकाशनम्॥ वा०प०, २।२९८।

२. तथा शब्दोऽपि कस्मिंश्चित् प्रत्याय्येऽर्थे विवक्षिते।
अविवक्षितमप्यर्थं प्रकाशयति सन्निधेः॥ वा०प०, २।३०१।

३. संसर्गिषु तथाऽर्थेषु शब्दो येन प्रयुज्यते।
तस्मात् प्रयोजकादन्यानपि प्रत्याययत्यसौ॥ वा०प०, २।२९९।

४. निर्मन्थनं यथाऽरण्योरग्न्यर्थमुपपादितम्।
धूममप्यनभिप्रेतं जनयत्येकसाधनम्॥ वा०प० २।३००।

५. काकेभ्यो रक्ष्यतां सर्पिरिति बालोऽपि चोदितः।
उपघातपरे वाक्ये न श्वादिभ्यो न रक्षति॥ वा०प०, २।३१२।

स्थालीमार्जन-शरावपरिमार्जनादिकमपि कार्यं सम्पादयति ।[१]

शब्दाऽर्थविस्तरविषये कात्यायनेन पतञ्जलिना चाऽपि यथाप्रसङ्गं विचारितमनेकत्र । सादृश्यात् सामीप्यात् साहचर्यादित्येवमनेकविधकारण-कलापाच्छब्दानामर्था विस्तार्यन्ते । तेषु मुख्यतमा हेतवोऽत्र प्रदर्श्यन्ते ।

**उपमानम्—**

पदार्थैकदेशाऽविवक्षया अर्थविस्तरनिरूपणाप्रसङ्गे गोष्ठशब्द: चर्चित: अस्माभि: । गोष्ठशब्दस्य स्थानमात्रार्थाभिधायकत्वप्रसाधनाय कात्यायन: गोष्ठपदं प्रत्ययत्वेन व्याचष्ट[२] । अतएव गोगोष्ठमिति प्रयुज्यते लोके । कात्यायन: तथ्यमिदं प्रकारान्तरेणाऽपि प्रत्यपादयत् । कात्यायनमते यथा गवां स्थानं भवति गोष्ठम्, तथा तत्सादृश्यादुष्ट्रादीनामपि स्थानं गोष्ठमेवोच्यते ।[३] पतञ्जलिरपि गोष्ठपदेन उष्ट्रस्थानाऽर्थाऽभिधानमपि स्वीचकार । कालान्तरेऽयं गोष्ठशब्द: अर्थसङ्कोचात् पुन: गोस्थानार्थाभिधायक एव संवृत्त: । अमरसिंहो गोष्ठपदं गवां स्थानार्थे एव पर्यगणयत् —

'गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम्'[४] । 'सम्प्रोदश्च कटजिति'[५] सूत्रस्थम् उपमानाद्वा सिद्धमिति[६]' वार्तिकं भाषमाण: पतञ्जलि: अर्थविस्तर-दृष्ट्या महत्त्वपूर्णानि उदाहरणानि निर्दिदेश । प्रसङ्गदृष्ट्या तान्यत्र विविच्यन्ते ।

नानाद्रव्याणां सङ्घात: कटो भवति । सादृश्याद्धि सङ्घातमात्रं कटपटेना-ऽभिधीयते । तेन 'संहता अवय:' अविकटशब्देनोच्यन्ते[७] प्रस्तीर्ण: प्रच्छादनयोग्यो वस्तुविशेष: पटशब्दस्यास्ति प्रवृत्तिनिमित्तम् । उपमानादवय: प्रस्तीर्णो अविपट उच्यते[८] गांयुगशब्दस्य गोद्वयं भवति प्रवृत्तिनिमित्तम् । साधर्म्याद् युगलार्थमात्रं गोयुगशब्दस्य अर्थविस्तरो जात: । अतएव उष्ट्रगोयुगमित्यादयो भवन्ति

---

१. प्रक्षालनं शरावाणां स्थालीनां मार्जनं तथा ।
अनुक्तमपि रूपेण भुज्यङ्गत्वात् प्रतीयते ॥ वा०प०, २।३१३ ।

२. गोष्ठादय: स्थानादिषु पशुनामाऽदिभ्य: । अष्टा०, ५।२।२६, वा० ३ ।

३. गवां स्थानं गोष्ठम् । यथा गवां तद्वदुष्ट्रानाम् । अष्टा०, ५।२।२९, महाभा० ।

४. अमरको० । भूमिव०, ५८३ ।

५. अष्टा० ५।२।२९ ।

६. अष्टा०, ५।२।२९, वा० ४ ।

७. यथा नानाद्रव्याणां सङ्घात: कट:, एवमवय: संहता अविकट: ।
अष्टा०, ५।२।२९ । महाभा० ।

८. यथा पट: प्रस्तीर्ण: एवमवय: प्रस्तीर्णा अविपट: । अष्टा०, ५।२।२९, महाभा० ।

प्रयोगाः ।[1] केषाञ्चन मते तु उष्ट्रस्य ग्रीवाबन्धनस्थानीयो यानाङ्गविशेष उष्ट्रगोयुगशब्दस्याऽभिधेयः ।[2] एवमेव अर्थविस्तरादेव तिलतैलमिति प्रयोगो भवति । तिलविकारः स्नेहद्रवद्रव्यविशेषः तैलशब्दस्याऽस्ति प्रवृत्तिनिमित्तम् । परमुपमानात् स्नेहद्रवद्रव्यमात्रमभिधीयते तैलशब्देन । एवं कुशलादिशब्दानाम् अपि अर्थविस्तरो बोद्धव्यः ।

**विशेषस्याऽविवक्षा—**

कात्यायनः पतञ्जलिश्च पदार्थे विशेषस्य अविवक्षां सामान्यस्य च विवक्षामर्थविस्तरस्य प्रयोजिकां समाचष्ट ।[3] अजश्च अजा च अजौ इति प्रयुज्यते । तत्र अजापदार्थे स्त्रीत्वविशेषांशो न विवक्ष्यते । अजत्वरूपं सामान्यञ्च विवक्ष्यते । तस्योभयत्र सत्त्वादजाविति प्रयुज्यते । प्रायो लौकिका व्यवहारा अपि अस्मादेव हेतोः सम्पाद्यन्ते । बालकोऽपि युवाऽपि वृद्धोऽपि देवदत्तो भवति देवदत्त एव न तु यज्ञदत्तः रुद्रदत्तो वा । तत्र अवस्थाविशेषांशो न विवक्ष्यते । व्यक्तिसामान्यार्थश्च विवक्ष्यते ।

**लिङ्गम्—**

मत्स्यमांसाऽर्थी यथा उपयोगिना पदार्थेन सह अनुपयोगिपदार्थमपि मत्स्यमांससंसृष्टं तोकत्वक्कण्टकादिकमुपभुङ्क्ते तथा शब्दोऽपि अत्यन्तसम्बद्धत्वाल्लिङ्गसंख्यादिकमपि प्रतिपादयति । क्वचिच्चेदं शब्दगतं लिङ्गमर्थविस्तरे प्रयोजकं भवति । मित्रशब्दः पुंसि वर्तमानः सूर्यार्थं[4] व्यनक्ति, क्लीबे च विद्यमानः सुहृदर्थम् ।[5] अजशब्दः पुंसि पितृत्वगुणवन्तम् अजार्थं बोधयति, स्त्रियाञ्च मातृत्वगुणवदजाऽर्थम् ।

**प्रतिभा—**

शब्दश्रवणानन्तरं प्रतिपत्तुः प्रतिपत्तृत्वशक्तिरुदीयमाना प्रतिभोच्यते । पदार्थैरुपपादितां प्रतिभामेव वाक्याऽर्थं व्याचष्ट भर्तृहरिः ।[6] अभ्यासादिवशाच्छब्दः प्रतिभां जनयति । नवनवोन्मेषशालिनीयं प्रतिभा प्रयत्नसमधि-

---

१. गोर्युगं गोयुगम्, यथा गोः तद्वदुष्ट्रस्य, उष्ट्रगोयुगम् । अष्टा०, ५।२।२९ महाभा० ।

२. द्वौ उष्ट्रौ इत्यत्राऽर्थे गोयुगच्प्रत्ययः । अन्ये त्वाहुः—उष्ट्रस्य ग्रीवाबन्धने यानाङ्गे गोयुगच्प्रत्ययः । अष्टा०, ५।२।२९ महाभा० प्र० ।

३. विशेषस्याविवक्षितत्वात् सामान्यस्य च विवक्षितत्वात् सिद्धम् । अष्टा० १।२।६८, वा० १ ।

४. …मित्रश्चित्रभानुर्विरोचनः । अमरको०, ६ दिग्व० । २०४ ।

५. अथ मित्रं सखा सुहृत् । अमरको०, ९ क्षत्रि० व०, १४९१ ।

६. विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते ।
वाक्यार्थं इति तामाहुः पदार्थैरुपपादिताम् ॥ वा०प०, २।१४३ ।

गम्या भवति । प्रतिपत्तुः प्रतिभाप्राबल्यं शब्दार्थविस्तरस्य भवति प्रयोजकम् । आम्रवृक्षशब्दं संश्रुत्य बालः वृक्षमात्रमवगच्छति, युवा च संस्मृतफलास्वादो भवति, उद्यानविद्याविदश्च तेन ततोऽपि विलक्षणा जायते प्रतिभा । प्रतिपत्तृभेदाद् एक एव शब्दः अर्थभेदं जनयति । स्वरूपतः कश्चिच् छब्दः कञ्चन नियतमर्थं न बोधयति । सर्वोऽपि प्रतिपत्ता स्ववासनानुसारेण स्वप्रतिभानुसारेण च शब्दानामर्थं निर्धारयति ।[1] पुनरपि तत्र लोकसमयः भवति सहायकः । यथा एकमेव वस्तु यथा वासनानुसारेण चक्षुः प्रतिव्यक्ति नानारूपेण ग्राहयति तथा शब्दोऽपि प्रतिभावशादर्थभेदं जनयति[2] । एवंविधैः अनेकैः कारणैः शब्दानामर्थेषु विकासः सम्भवति ।

## ३. अर्थादेशः

यदा कदाचिच्छब्दः स्वप्रत्याय्यम् अर्थं विहाय अन्यार्थमभिदधाति । अयमेवाऽन्यार्थः अर्थादेशः उच्यते । अर्थादेशस्य कारणद्वयं भर्तृहरिणा निर्दिष्टम्—

१. गुणप्रधानताविपर्ययः, २ सकलपदार्थाऽविवक्षा च ।

**गुणप्रधानताविपर्ययः—**

यदि शब्दस्य मुख्यार्थः गौणो जायते, गौणार्थश्च मुख्यो जायते तदा शब्दार्थपरिवर्तनं जायते । अस्त्ययम् अर्थादेशस्य भेदः । इममेव पुण्यराजः गुणप्रधानता विपर्ययं व्याचष्ट । वस्तुत ईदृशे स्थले शब्दस्य वाच्यार्थः तत्र न विवक्ष्यते । वाच्यार्थस्तु तत्र विलुप्यते परं तत्र तत्सम्बन्धी कश्चिदन्योऽर्थः अभिप्रेतो भवति । 'सूर्यः दृश्यताम् । गन्तव्यमस्ति' इति चोदितः कश्चित् सूर्यपदेन दृशिपदेन च न हि वाच्यार्थं लक्षयति अपितु 'गन्तुमुपयुक्तः कालोऽस्ति न वेति जानाति ।[3]' 'गौरयं वाहिकः' इत्यादि लाक्षणिकप्रयोगेषु गुणप्रधानताविपर्ययेणैव अर्थावगतिः दृश्यते । उक्तप्रयोगे गोपदार्थे सास्नादिमदर्थो गौणो जातः । जाड्याद्यर्थश्च मुख्यो जातः । सर्वेषामपि लक्ष्यार्थानां व्यङ्ग्यार्थानाञ्च प्रतीतिः इत्थमेव भवति । 'सिंहो माणवकः', 'कूपमण्डूकः', 'कूपकच्छपः', 'उदुम्बरमशकः' इत्यादिव्यावहारिकोदाहरणानि गुणप्रधानताविपर्ययस्यैव ।

---

१. प्रतिनियतवासनावशेनैव प्रतिनियताकारोऽर्थः, तत्त्वतस्तु कश्चिदपि नियतो नाभिधीयते । वा० प०, २।१३६, पुण्य० ।

२. वक्त्राऽन्यथैव प्रक्रान्तो भिन्नेषु प्रतिपत्तृषु ।
स्वप्रत्ययानुकारेण शब्दार्थः प्रविभज्यते ॥ वा० प०, २।१३७ ।

३. गन्तव्यं दृश्यतां सूर्य इति कालस्य लक्षणे ।
ज्ञायतां काल इत्येतत् सोपायमभिधीयते ॥ वा०प०, २।३१० ।

**२. सकलपदार्थाविवक्षा—**

कदाचित् कदाचित् कृत्स्नोऽपि पदार्थः अविवक्षितो जायते । तत्र अन्योऽर्थः आरोप्यते । अयमेवोच्यते सकलपदार्थाऽविवक्षा । अर्थादेशस्य इदमेवाऽस्ति वास्तविकमुदाहरणम् । गवां स्थानं भवति गोष्ठमिति प्राक् प्रतिपादितम् । अर्थविस्तराच्च स्थानार्थमात्राभिधायी अयं गोष्ठ शब्दो जायते । अयमेव च गोष्ठशब्दः स्त्रियां वर्तमानः गोष्ठीशब्दः स्वप्रवृत्तिनिमित्तं विहाय संसदर्थमभिधत्ते ।[1] कदाचित् केचन लाक्षणिकाः प्रयोगा अपि सकलपदार्थाऽविवक्षया प्रवर्तन्ते । अनुभवहीनाय अस्थिरचित्ताय च छात्राय 'तीर्थध्वांक्षः[2] तीर्थकाकः[2]' इत्यादयः प्रयोगाः अर्थादेशस्यैव निर्देशकाः । गृह-शब्दस्य प्रवृत्तिनिमित्तम् आवाससदनं स्वीक्रियते । एतत् प्रवृत्तिनिमित्तं परित्यज्यायं शब्दः पत्न्यर्थमपि अभिधत्ते—

न गृहं गृहमित्याहुः गृहिणी गृहमुच्यते ।[3]

इति सरस्वतीदेवीप्रसूतेन पञ्चानन्दतनूभुवाऽऽचार्यनरदेवशास्त्रिणा
विरचिते 'अथ पाणिनीयशब्दार्थसम्बन्धसिद्धान्त' इत्याख्ये
ग्रन्थे द्वितीयम् अर्थकाण्डं परिसमाप्तम् ।

---

१. समज्या परिषद् गोष्ठी सभासमितिसंसदः । अमरको०, ८ ब्रह्मव०, १३८२ ।

२. अष्टा० २।१।४८, ग०पा० ।

३. कृत्स्नोऽयं श्लोक इत्थमुपलभ्यते—

न गृहं गृहमित्याहुः गृहिणी गृहमुच्यते ।
गृहं तु गृहिणीहीनमरण्यसदृशं मतम् ॥

महाभा०, शां०प०, १४४।६ ।

# अथ पाणिनीयशब्दार्थसम्बन्धसिद्धान्तः

## तत्र तृतीयं सम्बन्धकाण्डम्

—सिद्धे शब्दार्थसम्बन्धे । अष्टा० का० वा० १ ।

—इन्द्रियाणां स्वविषयेषु अनादिर्योग्यता यथा ।

अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ।। वा०प० ३।३।२९

—न ह्यविद्यमानसम्बन्धस्य शक्तिः शास्त्रेण नियम्यते ।

अष्टा० २।४।७०, महाभा० प्र० ।

**वर्णितविषयाः—**

१—सम्बन्धस्वरूपम् ।

२—सम्बन्धग्रहे चत्वारो हेतवः ।

३—सम्बन्धस्य नित्यत्वम् ।

अथ शब्दार्थसम्बन्धसिद्धान्ते पाणिनीयके ।
समुद्देशत्रये नूनं सिद्धं सम्बन्धकाण्डकम् ।।

—सिद्धे शब्दार्थसम्बद्धे । का० वा० १ ।

—नित्याः शब्दार्थसम्बन्धाः तत्राम्नाता महर्षिभिः ।
सूत्राणामनुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः ॥

—वाक्यपदीयब्रह्मकाण्डे ।

# तृतीयं काण्डम्

## सम्बन्धकाण्डम्

स्वरूपतः कश्चिच्छब्दोऽर्थस्याऽभिधायको न भवति । विषये प्रणिहितमेव चक्षुर्यथा चाक्षुषं प्रत्ययं जनयति तथा गृहीतः शब्दोऽपि अभ्यासाऽऽदिना जातसंस्कार एवार्थं बोधयति ।[1] अश्रुतपूर्वैः अगृहीतसम्बन्धैश्च शब्दैरर्थाऽवगतिर्नावलोक्यते । अतः शब्दार्थयोः कश्चित् सम्बन्धोऽनुसन्धेय इति सम्बन्धविषये भाषाशास्त्रिणां प्रवृत्तिनिमित्तम् अस्ति । शब्दाऽर्थयोः मध्ये कीदृशः सम्बन्धो भवितुमर्हतीति ज्ञातुं पुनरेकवारं शब्दाऽर्थस्वरूपमवलोकनीयम् ।

भर्तृहरिणा एकस्यैव वागात्मनस्तत्त्वं शब्दार्थाविति व्याख्यातम् ।[2] वक्तुरभिव्यक्तिभावनात्मको वागात्मा वाय्वादिकरणादिना अभिव्यक्तः शब्द उच्यते । श्रोतृबुद्धिः भूत्वा स एव वागात्मा अर्थो भवति । एवञ्च त्रिकोणात्मकमिदं भवति वाक्तत्त्वम् ।




१. यथा प्रणिहितं चक्षुः दर्शनायोपकल्पते ।
तथाऽभिसंहृतः शब्दो भवत्यर्थस्य वाचकः ॥ वा०प०, २।४०७ ।

२, एकस्यैवात्मनो भेदौ शब्दार्थावपृथक् स्थितौ । वा०प०, २।३१ ।

शब्दार्थयोरभिन्नत्वेऽपि नियतेन शब्देन नियतस्य अर्थस्य अवगतये सम्बन्धग्रह आवश्यकः। शब्देनाऽर्थाभिधाने सम्बन्धस्य हेतुत्वं स्वीकुर्वाणो हेलाराजः[1] अर्थावगतौ सम्बन्धज्ञानं नियामकं व्याचष्ट। शब्दार्थयोः सम्बन्धस्वीकाराभावे अर्थावगतौ कश्चिन् नियमो न सन्तिष्ठेत। सर्वेऽप्यर्था एकेन शब्देन प्रत्याय्येरन्। सर्वैश्चापि शब्दैः कश्चिदपि अर्थोऽवगम्येत। एवञ्च सर्वं सर्वेण प्रत्याय्येत। 'स्वं रूपं शब्दस्याऽशब्दसंज्ञेति'[2] पाणिनीयसूत्रस्थं भाष्यं टीकमानः कैयटः[3] तथ्यमिदमुदघाटयत्। कैयटवाक्यं टीकमानो नागेशो[4] द्विविधं नियमस्वरूपमिदं व्याचष्ट—

१. एतेन शब्देन एष एवार्थोऽभिधेयः।

२. एष चाऽर्थः एनेनैव शब्देनाऽभिधेयः।

शब्दार्थयोः सति तु सम्बन्धे यस्य शब्दस्य यस्मिन्नर्थे सम्बन्धग्रहः तेन शब्देन तस्यैवाऽर्थस्यावगतिरिति नास्ति काचिदव्यवस्थितिः। भर्तृहरिणा[5] सम्बन्धोपपादने सम्बन्धस्य प्रत्ययहेतुत्वं प्रतिपादितम्। अगृहीतशब्दार्थसम्बन्धेन शब्देन न दृश्यते अर्थावगतिः। यो गामश्व इति ब्रूयाद् न भवति तत्र कश्चित् सम्प्रत्ययः, अश्वशब्दस्य सास्नालाङ्गूलादिमदर्थेन सम्बन्धाऽभावात्।[6] अत एव पाणिनीयस्य शब्दानुशासनस्य प्रमाणभूतो व्याख्याता कात्यायनः[7] पतञ्जलिश्च[8] शब्दाऽर्थयोः नित्यं सम्बन्धं समस्मरताम्।

**सम्बन्धस्वरूपम्—**

उच्चरितैः शब्दैः न केवलं श्रवणमात्रं भवति श्रोतुः अपितु श्रोतृभिः श्रुतैः

---

१. शब्देनाऽर्थस्याऽभिधाने सम्बन्धो हेतुः। अन्यथा सर्वं सर्वेण प्रत्याय्येत्।
वा०प०, कां० ३, पृ० ९६, हेला०।

२. अष्टा०, १।१।६८।

३. सर्वार्थप्रत्यायनशक्तियुक्तो हि शब्दः, सर्वशब्दप्रत्याय्यशक्तियुक्तश्चाऽर्थः इति व्यवहाराय नियमः क्रियते। अष्टा०, १।१।६८, महाभा० प्र०।

४. अनेन नियमद्वयं दर्शितम्—
अनेन शब्देनाऽयमेवाऽर्थो ग्राह्यः। अयमर्थोऽनेनैव शब्देन बोधनीयः इति चेति।
अष्टा०, १।१।६८, महाभा० प्र०, उद्द्यो०।

५. सति प्रत्ययहेतुत्वे सम्बन्ध उपपद्यते।
शब्दस्याऽर्थे यतस्तत्र सम्बन्धोऽस्तीति गम्यते॥ वा०प०, ३।३।३७।

६. यो हि गामश्व इति ब्रूयादश्वं वा गौरिति, न जातुचित् सम्प्रत्ययः स्यात्।
अष्टा०, १।२।६४, महाभा०।

७. सिद्धे शब्दार्थसम्बन्धे। अष्टा०, का०वा० १।

८. नित्यो ह्यर्थवतामर्थैरभिसम्बन्धः। अष्टा०, महाभा० पस्पशा०।

शब्दैः शब्दस्वरूपमवगम्यते, अर्थोऽवबुध्यते तदाकारकं ज्ञानञ्चाऽपि जायते। आचार्यभर्तृहरिमते[1] एषु शब्दार्थसम्प्रत्ययेषु वृद्धैः सम्बन्धः समवस्थाप्यते। भर्तृहरिग्रन्थमिमम् आधृत्य हेलाराजः[2] प्रयोगेणाऽभिज्वलितैः शब्दैः शाब्दबोधस्य निरुक्तं त्रैविध्यं व्याचष्ट। शब्दार्थप्रत्ययानां साङ्कर्यं योगदर्शने ब्रुवाणस्य पतञ्जलेरपि[3] त्रिविधः शाब्दबोध एवाऽभिप्रेतः। एवञ्च शब्दस्य अर्थेन सह, अर्थस्य च ज्ञानेन सह सम्बन्धं समवस्थाप्य लौकिकाः व्यवहाराः सम्पाद्यन्ते।

लोके हि सम्बन्धपदस्याऽनेकविधं प्रवृत्तिनिमित्तमुपलभ्यते। आर्थाः, यौनाः, मौखाः, स्रौवाश्चाऽभिसम्बन्धाः लोके प्रवर्तन्त इति पतञ्जलिना[4] प्रतिपादितम्। शब्दाऽर्थयोरेषु नहि कश्चित् सम्बन्धः सन्तिष्ठते। शब्दार्थयोरत्यन्तं पराधीनत्वात् सम्बन्धः स्वातन्त्र्येण निर्वक्तुमशक्यः। शब्दार्थनिष्ठः सम्बन्धः सम्बन्धिभ्यां भिन्नः उभयाश्रितो भवति। शब्दार्थयोः सम्बन्धः आकाङ्क्षयो-[5] पलभ्यो भवति। किञ्चिदपि पदं स्वधर्मेण शब्दार्थयोः सम्बन्धस्य वाचकं न भवतीति तस्य स्वरूपमपि सुस्पष्टं वक्तुमशक्यमिति भर्तृहरिः व्याचष्ट—

नाऽभिधानं स्वधर्मेण सम्बन्धस्यास्ति वाचकम्।
अत्यन्तपरतन्त्रत्वाद् रूपं नास्यापदिश्यते ॥[6]

शब्दार्थयोः सम्बन्धनिर्धारणे एतदवश्यमवधेयं यत् पूर्वं वक्ताऽर्थं परिकल्प्य शब्दे प्रवर्तते, श्रोता तु पूर्वं शब्दं संश्रुत्याऽर्थं निर्धारयति। अतएव कतिपये आचार्याः शब्दनिमित्तकमर्थं मन्वते, कतिपये चाऽऽचार्याः अर्थनिमित्तकं शब्दं स्वीकुर्वते। आचार्यपतञ्जलिना शब्दनिमित्तकाऽर्थवादिनां मतमुपस्थाप्य प्रत्याख्यातम्।[7] अर्थनिमित्तको भवति शब्दो न तु शब्दनिमित्तकोऽर्थ इति पतञ्जलिर्व्याचष्ट।[8] भर्तृहरिणाऽचार्येण अर्थस्य कारणं शब्दं व्याख्याय शब्द-

---

१. ज्ञानं प्रयोक्तुः वाह्योऽर्थः स्वरूपं च प्रतीयते।
शब्दैरुच्चरितैस्तेषां सम्बन्धः समवस्थितः ॥ वा०प०, ३।३।१।

२. प्रयोगेणाऽभिज्वलितैः शब्दैः त्रितयमवगम्यते। आत्मीयं रूपमर्थश्च फलसाधनः प्रयोक्तुरभिप्रायश्च। वा०प०, ३।३।१, हेला०।

३. शब्दार्थप्रत्ययानामितरेतरताध्यासात् सङ्करः।...यो०द०, ३।१७।

४. यद्यपि लोके बहवोऽभिसम्बन्धाः—आर्थाः, यौनाः, मौखाः, स्रौवाश्चेति। अष्टा०, १।१।४९, महा०।

५. शाब्दबोधे चैकपदार्थेऽपरदार्थस्य संसर्गः संसर्गमर्यादया भासते। व्यु० वा०, प्र०का०।

६. वा०प०, ३।३।४।

७. नहि शब्दनिमित्तकेन नामाऽर्थेन भवितव्यम्। अष्टा०, ७।१।३३, महाभा०।

८. अर्थनिमित्तकेन नाम शब्देन भवितव्यम्। अष्टा०, ७।१।३३, महाभा०।

निमित्तकार्थवादिनां मतमनूदितं[1] स्वीकृतञ्च । अर्थाऽवगतये शब्दाः प्रयुज्यन्ते इति तु उभयसम्मतं मतम् ।[2] अर्थबोधनमात्रफलकः शब्दप्रयोग इति कात्यायनः[3] पतञ्जलिश्च[4] स्वीचकार । कस्याऽर्थस्याभिव्यक्तये कः शब्दः प्रयोक्तव्यः इत्येष निर्णयः प्रयोक्तुरेवाऽधीनो भवति । केन वा शब्देन कोऽर्थोऽभिधेयः इति विनिश्चयोऽपि कश्चनाऽपौरुषेयो नास्ति । प्रवक्ता प्रतिपत्ता चैव हि शब्दस्य, तदर्थस्य तयोश्चाऽभिसम्बन्धस्य भवति संस्थापकः । अहर्निशं प्रचयापचयशीलेऽर्थे नवे नवे चाऽर्थाऽभिधानसमर्थे शब्दे को नामापौरुषेयो नियमः सन्तिष्ठते । अतः भाषातत्त्वदृष्ट्या एतत् सुस्पष्टम् अवधेयं यद् वाच्यवाचकविनिश्चयः तयोः सम्बन्धनिर्णयश्च व्यवहाराधीन एव —

प्रयोक्तैवाऽभिसन्धत्ते साध्यसाधनरूपताम् ।
अर्थस्य वाऽभिसम्बन्धकल्पनां प्रसमीहते ॥ वा० प०, २।४३५॥

शब्दार्थयोः सम्बन्धनिर्धारणे एतदवधार्यैव किञ्चिदपि वक्तुं शक्यते ।

भर्तृहरिः शब्दस्याऽर्थेन सम्बन्धद्वयं प्रत्यपादयत् ।[5] १. कार्यकारणभावाख्यः, २. योग्यतालक्षणश्च । भर्तृहरिणा वक्तृश्रोत्रोः मनःस्थितिमाधृत्यैव सम्बन्धद्वयमेतत् प्रतिपादितम् । यथाप्रसङ्गमत्रैतद् विविच्यते ।

### १. कार्यकारणभावः—

शब्दार्थयोः कार्यकारणभावाख्यः सम्बन्धः सन्तिष्ठते । शब्दार्थयोः कार्यकारणभावविषये मतद्वयमचर्चयं प्राक् । मतद्वये कश्चिद् विरोधो नाशङ्क्यः । वक्तुः कृते कारणमर्थः शब्दस्य, श्रोतुश्च कृते शब्दः कारणमर्थस्य । एवञ्च उभयोर्मतेऽपि शब्दार्थयोः कार्यकारणभावाख्यः सम्बन्धः सम्पन्नः । अर्थं परिभाषमाणो भर्तृहरिः सम्प्रत्ययनिमित्तकं शब्दं व्याचष्ट ।[6] येनोच्चारितेन शब्देन यः सम्प्रत्ययो भवति सोऽर्थ इति व्याचक्षाणस्य भर्तृहरेः शब्दार्थयोः कार्यकारणभावः सम्बन्धोऽभिप्रेतः । भर्तृहरिणा कण्ठतोऽपि[7] अर्थस्य

---

१. शब्दः कारणमर्थस्य सहितेनोपजन्यते । वा०प०, ३।३।३२ ।
२. अर्थगत्यर्थः शब्दप्रयोगः । अष्टा०, ५।२।९४, महाभा० ।
३. शब्देनाऽर्थगतेः । अष्टा०, १।१।६८, वा० १ ।
४. अर्थं सम्प्रत्याययिष्यामीति शब्दः प्रयुज्यते । अष्टा०, ५।२।९४, महाभा० ।
५. कार्यकारणभावेन योग्यभावेन च स्थिताः । वा०प० १।२५।
६. यस्मिन् तूच्चरिते शब्दे यदा योऽर्थः प्रतीयते ।
तमाहुरर्थं शब्दस्य नान्यदर्थस्य लक्षणम् ॥ वा०प०, २।३३० ।
७. शब्दः कारणमर्थस्य सहितेनोपजन्यते । वा०प०, ३।३।३२।

कारणं शब्द: प्रतिपादित:। सम्प्रत्ययनिमित्ताया वाचोऽन्वाख्यायकं खलु व्याकरणमिति पतञ्जलि: समुपापादयत्।[1] किञ्च अर्थाऽवगतये शब्दप्रयोगं मनुते पतञ्जलि:।[2] एवञ्च एतन्मतमास्थितस्य पतञ्जलेरपि शब्दार्थयो: कार्यकारणभाव: सम्बन्धोऽभिमत: पाणिने:। 'तस्येदम्[3]' इत्यादिनिर्देश: शब्दार्थयो: कार्यकारणभावसम्बन्धस्य विनिगमक:।

अस्याऽर्थस्याऽयं वाचक:, अस्य वाचकस्य शब्दस्य चाऽयं वाच्य इति प्रतीते: विनिश्चायकं तत्त्वं सम्बन्ध[4] एव भवति, असम्बद्धस्य अर्थस्य असम्बद्धेन शब्देन वाच्यवाचकभावाऽभावात्। अयं कार्यकरणभावाऽऽख्य: सम्बन्ध एव वाच्यवाचक:, प्रत्याय्यप्रत्यायको वा सम्बन्धो व्यपदिश्यते। एकस्यैव तत्त्वस्य नामभेदेन व्याख्याभेदोऽयं बोध्य:। कार्यकारणभावाख्योऽयं सम्बन्ध: शब्दस्य शब्दार्थेनैव न तु वहीरूपतयाऽवस्थीयमानेन वस्त्वर्थेन[5]। अत्यन्तमतथाभूतस्यापि अर्थस्य शब्देन वाच्यत्वदर्शनात्।

२. **योग्यतालक्षण:—**

व्याकरणाऽनुशासनीयेषु तत्त्वाऽष्टकेषु योग्यतालक्षण: सम्बन्धोऽपि[6] भर्तृहरिणा परिगणित:। हरिमते यथा चक्षुरादीन्द्रियाणां चाक्षुषप्रत्यक्षादिस्वविषयेषु अनादिर्योग्यता दृश्यते तथा शब्दानामपि अर्थै: सह अनादि: योग्यता[7] सन्तिष्ठते। सा योग्यता एव च सम्बन्ध:। स्वाभाविकं हि शब्दै: अर्था: अभिधीयन्ते। न तत्र वचनमपेक्षते किञ्चित्। कात्यायनेन[8] पतञ्जलिना[9] चापि शब्दैरर्थानां स्वाभाविकमभिधानं स्वीकृत्य शब्दार्थयो: योग्यतालक्षणाख्य: सम्बन्धोऽभिव्यक्त:। शब्दानाम् अर्थाऽभिधाने अकृत्रिमा योग्यता

---

१. येनोच्चारितेन सास्नालाङ्गूलादिमदर्थो गम्यते स शब्द:। अष्टा०, महाभा० पस्पशा०।
२. शब्देनोच्चारितेनाऽर्थो गम्यते। अष्टा०, १।१।६८, महाभा०।
३. अष्टा० ४।३।१२०।
४. अस्यायं वाचको वाच्य इति षष्ठ्या प्रतीयते।
योग: शब्दार्थयोस्तत्त्वमप्यतो व्यपदिश्यते ॥ वा०प०, ३।३।३।
५. इह हि व्याकरणे न वस्त्वर्थोऽर्थ:, अपितु शब्दार्थोऽर्थ:। वा०प० ३।८।१ हेला०।
६. कार्यकारणभावेन योग्यभावेन च स्थिता:…। वा०प० १।२५।
७. इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थै: शब्दानां सम्बन्धो योग्यता तथा ॥ वा०प० ३।३।२९।
८. अभिधानं पुन: स्वाभाविकम्। अष्टा०, १।२।६४, वा० ३३।
९. स्वाभाविकमभिधानम्। अष्टा०, १।२।६४, महाभा०।

भवति । तत्र संयोग-समवायादिसम्बन्धो नापेक्षते । कैयटमते[1] व्याकरण-शास्त्रेऽपि पशुरपत्यं देवतेत्यादि सर्वावगम्यलौकिकसम्प्रत्ययनिमित्तकैः शब्दैः योग्यतालक्षणसम्बन्धेन अर्थ एव गृह्यते ।

अत्रेदमवधेयम्––विरलप्रयोगैः अस्पष्टशक्तिकैः नवैः शब्दैः कार्यकारण-भावेनैव सम्बन्धेनाऽर्थोऽभिधीयते । अनभ्यस्तत्वेन तत्र योग्यतालक्षणसम्बन्ध-स्याऽसम्भवात् । परम्परया वृद्धव्यवहारादिसंकेतग्रहैः शब्दार्थनिर्धारणे परि-पुष्टसंस्कारेणैव विदुषा योग्यतालक्षणेन सम्बन्धेन शब्दार्थोऽवगन्तुं शक्यते । भर्तृहरिणाऽपि संकेतादेव योग्यतालक्षणसम्बन्धस्य सम्भवता[2] स्वीकृता । कोशादिसाहाय्येन प्रयत्नजन्यस्तु शब्दार्थः कार्यकारणभावात्मनैव । अन्यथा हि घटादिषु कार्यकारणभावः अन्यथा च शब्दव्यवहारे । अर्थक्रियार्थिभिः, घटादयोऽन्यत आनीयन्ते नैवं शब्दादयः । अनादिवृद्धव्यवहारपरम्पराव्युत्पत्ति-पूर्वको हि शाब्दो व्यवहारः । सङ्केतादेवात्र शब्दार्थयोः कश्चित् सम्बन्धः सम्भवः । सङ्केताऽभावे तु न तत्सम्भवः कथञ्चित् ।

कैश्चिद् भाषाशास्त्रिभिः शक्तिरूपः सम्बन्धो व्याख्यातः । अस्मात् पदादय-मर्थो बोद्धव्यः इति ईश्वरेच्छारूपा इच्छामात्ररूपा वा शक्तिरिति पूर्वमस्माभिः प्रतिपादितम् । नागेशः[3] तां शक्तिमेव सम्बन्धं व्याचष्ट । सा च शक्तिः वाच्य–वाचकभावाऽपरपर्याया शब्दार्थयोरितरेतराध्यासग्राह्या च । भर्तृहरिः[4] सम्बन्धं शक्तीनामपि शक्तिं स्वीकुरुते । हेलाराजो[5] मतमिदं न समर्थयते । हेलाराज-मते शक्तेरपि आधारपारतन्त्र्यं भवति । उच्चारितेन शब्देन नियताऽर्थबोधे सम्बन्ध एव भवति नियामकः ।

## शाब्दबोधे प्रकारद्वयं सम्बन्धस्य

गृहीतेन शब्देन श्रोतुः प्रतीतित्रयमस्माभिः प्रतिपादितम् । श्रुतेन शब्देन १. प्रयोक्तुः ज्ञानम्, २ बाह्यार्थम्, ३. शब्दस्वरूपञ्च प्रतिपत्ता अधिगच्छति ।[6]

१. इह योग्यतालक्षणेन सम्बन्धेन शब्दोऽर्थं लोके प्रत्याययति । व्याकरणेऽपि पशुरपत्यं, देवता प्राञ्च, उदञ्चो भरता इत्यर्थं एव गृह्यते । अष्टा०, १।१।६८, महाभा०, प्र० ।

२. समयाद् योग्यता संविन्मातापुत्रादियोगवत् ।···वा०प०; ३।३।३१।

३. पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः, वाच्यवाचकभावापरपर्याया । तद्ग्राहकं चेतरेतरा-ऽध्यासमूलकं तादात्म्यम्, तच्च सङ्केतः । वै०सि०ल०मं०, श०नि ।

४. शक्तीनामपि सा शक्तिर्गुणानामप्यसौ गुणः । वा०प० ३।३।५।

५. न च शक्तिरेव सम्बन्धः ? शक्तीनामपि आधारपारतन्त्र्ये नियतकार्यजनने च सम्बन्ध एव नियामकः ।
वा० प० ३।३।५ हेला० ।

६. ज्ञानं प्रयोक्तुः बाह्योऽर्थः स्वरूपं च प्रतीयते ।
शब्दैरुच्चारितैस्तेषां सम्बन्धः समवस्थितः ॥ वा०प०, ३।३।१ ।

तत्र शब्दस्य अर्थेन सम्बन्धः कल्प्यते। अर्थश्च सम्प्रत्ययेन सम्बध्यते। शाब्दबोधे सम्बन्धस्यैतस्य प्रकारद्वयं सम्भवति।

१. शब्दार्थयोः सम्बन्धः।

२. अर्थाऽर्थयोश्च सम्बन्धः।

उपर्युपवर्णितं सम्बन्धस्वरूपं शब्दार्थयोः सम्बन्धस्य विज्ञेयम्। अनेन सम्बन्धेन पदार्थस्य अवगतिर्भवति। वाक्यार्थावगतये तु द्वितीयः सम्बन्धः परिकल्पितः। वाक्ये खलु बहूनि पदानि, बहवश्च पदार्थाः सन्तिष्ठन्ते। तेषां पदार्थानां परस्परं सम्बद्धे सत्येव वाक्यार्थाऽविज्ञातुं सम्भवः। पदार्थस्य पदार्थेन सम्बद्धादेवाऽस्माभिः अर्थाऽर्थयोः सम्बन्ध इति नाम परिकल्पितम्। एतदेवाऽभिलक्ष्य गदाधरभट्टः शाब्दबोधप्रक्रियां व्याचक्षाणः पदार्थस्य पदार्थेन संसर्गमाकाङ्क्षाभास्यं स्वीकुरुते।[1]

पदार्थस्य पदार्थेन सह सम्बन्धः प्रवृत्तिभेदात् प्रयोक्तुरभिप्रायभेदाच्च अनेकविधः सम्भवति। स्वस्वामिभावादिः आर्थिकः सम्बन्धः जन्यजनकभावादिः यौनः सम्बन्धः, शिष्यगुरुभावादिः मौखः सम्बन्धः, यजमानपुरोहितादिः स्रौवश्च सम्बन्ध इत्येवमादयः अनेकविधाः अर्थयोः सम्बन्धाः सम्भवन्ति। राजपुरुषः इत्यत्र राजपदस्य तद्वाच्यसिंहासनस्थार्थेन, पुरुषपदस्य च तद्वाच्यविज्ञाताऽर्थेन सह योग्यतालक्षणेन कार्यकारणभावेन वा सम्बन्धेन पदार्थोऽवगम्यते। राजपदार्थस्य पुरुषपदार्थेन सह तु स्वस्वाभिभावः सम्बन्धः। एवमत्र राजनिरूपितस्वत्ववान् पुरुष इति भवति शाब्दः प्रत्ययः। देवदत्तस्यापत्यमित्यादौ जन्यजनकसम्बन्धः, 'पाणिनेः शिष्य' इत्यादौ गुरुशिष्यभावो मौखः सम्बन्धः, 'पुष्यमित्रस्य पुरोहितः पतञ्जलि'रित्यत्र च स्रौवः सम्बन्धो विज्ञेयः। पतञ्जलिना सम्बन्धानाम् एकोत्तरं शतं भेदाः[2] निर्दिष्टाः। तेषां वर्गचतुष्टयञ्चोपरि उपपादितं निर्धारितञ्च।

पदार्थयोः सम्बन्धकृतव्यपेक्षामाश्रित्यैव लौकिका व्यवहाराः सम्पाद्यन्ते। अर्थक्रियार्थिभिरर्थयोरेव[3] व्यपेक्षा समाश्रीयते न शब्दयोः शब्दार्थयोर्वा। पचति देवदत्त इत्यादिषु अर्थयोरेव क्रियाकारकभावादिसम्बन्धः सन्तिष्ठते। अर्थयोरभिसम्बन्धस्य षष्ठी भवति वाचिका।[4] 'देवदत्तस्य पुत्र' इत्यत्र देव-

---

१. शाब्दबोधे चैकपदार्थे परपदार्थस्य संसर्गः संसर्गमर्यादया भासते। व्यु० वा०, प्र० का०।

२. एकशतं षष्ठ्यर्थाः, यावन्तो वा सन्ति। लोके बहवोऽभिसम्बन्धाः—आर्थाः, यौनाः, मौखाः, स्रौवाश्चेति। अष्टा०, १।१।४९, महाभा०।

३. का पुनः शब्दयोः व्यपेक्षा ? न ब्रूमः शब्दयोरिति। किं तर्हि ? अर्थयोः। अष्टा०, २।१।१ महाभा०।

४. तयोरभिसम्बन्धस्य षष्ठी वाचिका भवति। अष्टा० २।१।१, महाभा०।

दत्तः पुत्रमपेक्षते ममाऽयमिति । पुत्रोऽपि देवदत्तमपेक्षते अहमस्येति । कष्टं श्रित इत्यादौ क्रियाकारकयोः सम्बन्धस्य तु द्वितीया वाचिका[1] भवति । एवमन्यत्र तृतीयादयो विभक्तयोऽपि अर्थयोरभिसम्बन्धं व्यञ्जन्ति ।

रूढ्यभिन्नरूपाऽव्यभिचरितसम्बन्धस्थलं विहाय समासकृत्तद्धितैः प्रायः सम्बन्धाऽभिधानं भवतीति शब्दशास्त्रिणः व्याचक्षते ।[2] यद्यपि कृत्तद्धितसमासाः केवलं सम्बन्धमेव नाभिदधते तथापि सम्बन्धिनि शक्तानां तेषां प्रवृत्तिनिमित्तं सम्बन्धो भवत्येव । अत एव तेभ्यः सम्बन्धे एव भवति भावप्रत्ययः ।[3] पाचकत्वमित्यत्र कृत्स्थले क्रियाकारकसम्बन्धो भावप्रत्ययेन प्रतीयते । औपगवत्वमिति तद्धितस्थले च अपत्यापत्यवत्सम्बन्धो भावप्रत्ययवाच्यः । राजपुरुषत्वमिति समासस्थले च स्वस्वामिभावसम्बन्धो भावप्रत्ययेनाऽभिधीयते । कुम्भकारत्वहस्तित्वपङ्कजत्वादेः कृत्तद्धितसमासस्थलीयत्वेऽपि नियते प्रवृत्तिनिमित्ताश्रये रूढत्वादत्र सम्बन्धाभिधानं न भवत्यर्थयोः अपि तु प्रवृत्तिनिमित्तरूपाकृतिरभिधीयते । गुणगुणिनोरभिन्नरूपाच्छुक्लादिशब्दोत्तरभावप्रत्ययेन गुण एवाऽभिधीयते न तु सम्बन्धादिः । सद्वस्तुनः सत्तासम्बन्धाऽव्यभिचारात्[4] सतो भावः सत्तेत्यादौ जातिरेव भवति भावप्रत्ययवाच्या, न तु सम्बन्धः । सतोऽसत्त्वम् असतो वा सत्त्वं भर्तृहरिणाऽऽचार्येणापि प्रतिषिद्धम्—

नाऽभावे जायते भावो नेति भावोऽनुपाख्यताम् ।
एकस्मादात्मनोऽनन्यौ भावाऽभावौ विकल्पितौ ॥[5]

अतः सद्वस्तुनः स्वसत्तयाऽव्यभिचरितसम्बन्धत्वेन सम्बन्धाभिधानस्य अनावश्यकत्वाज्जातिरेवाऽभिधीयते त्वतलाभ्याम् ।

अर्थकृतं प्राधान्यमाश्रित्य लोके व्यवह्रियते ।[6] गामानयेत्यादौ उक्ते क्रियार्थिनः अर्थमेवाऽऽनयन्ति । स एव च प्रयोक्तुरभिप्रेतः । प्रयोक्तारः प्रतिपत्तारश्च[7] प्रयत्नलाघवाः भवन्ति । वक्तृभिः वाक्ये प्रयोक्तव्ये वाक्यैकदेशः, पदे

---

१. क्रियाकारकयोरभिसम्बन्धस्य द्वितीया वाचिका भवति । अष्टा०, २।१।१, महाभा० ।
२. समासकृत्तद्धितेषु सम्बन्धाभिधानमन्यत्र रूढ्यभिन्नरूपा व्यभिचरितसम्बन्धेभ्यः ।
अष्टा०, ५।१।११९, महाभा० । प्र० ।
३. तस्य भावस्त्वतलौ । अष्टा० ५।१।११९।
४. न सत्तां पदार्थो व्यभिचरति । अष्टा०, ५।२।८४ महाभा० ।
५. वा० प०, ३।३।६१।
६. लोकेऽर्थकृतं प्राधान्यम् । अष्टा०, ३।१।१। महाभा० ।
७. इह हि सर्वे मनुष्या अल्पेन यत्नेन महतः अर्थान् आकाङ्क्षन्ति ।
अष्टा० २।१।६९, महाभा० ।

च प्रयोक्तव्ये पदैकदेशः प्रयुज्यते। प्रतिपत्तारश्च तदभिसम्बद्धमन्यमप्यर्थम् आकाङ्क्षयाऽवगच्छन्ति। गृहं प्रविशेति वाक्ये प्रयोक्तव्ये वक्तारः गृहमिति प्रविशेति वा केवलं प्रयुञ्जते। श्रोतारश्च अवशिष्टमप्यवगच्छन्ति। अर्थयोरभिसम्बद्धत्वात्। दधि इत्येतावन्मात्रोक्ते उज्ज्वलं, निलीनिकमम्लादिकञ्च बुध्यते। 'गुड' इत्युक्ते मधुरत्वं गम्यते। एवञ्चाऽर्थयोः अभिसम्बन्धाद् भवति वाक्याऽर्थनिर्णयः।

एक एवाऽर्थात्मा सम्बन्धिभेदादनेकरूपेण प्रतिभासते व्यवहारे।[1] पारिवारिके व्यवहारे तथ्यमिदं सुस्पष्टमवगन्तुं शक्यते। एक एवाऽर्थात्मा यज्ञदत्तः कस्यचित्कृते पौत्रः, अन्यस्य कृते पुत्रः, अपरस्य कृते भ्रातृजः, एकस्मै पिता, परस्यै पतिः भवति। एक एव मांसपिण्डो यज्ञदत्तः सम्बन्धिभेदान्नानानामभाग् भवति। शब्दशास्त्रिभिरत्र अन्यदतीव रुचिरमुदाहृतम्। उपाध्यायस्य शिष्यो मातुलस्य भागिनेयं गत्वाऽब्रवीत्—उपाध्यायं भवानभिवादयतामिति। गत्वा सोऽभिवादयते, मातुलम्। तथा मातुलस्य भागिनेयः उपाध्यायस्य शिष्यं मातुलमभिवादयितुमब्रवीत्। स गत्वाऽभिवादयते उपाध्यायम्। अत्र एक एवाऽर्थात्मा कञ्चित्प्रति उपाध्यायः, कञ्चन प्रति च मातुलः। एक एवेश्वरः सृष्ट्युत्पत्तिकाले ब्रह्मा, पालनकर्मणि विष्णुः, संहारकाले च शिव उच्यते।

## सम्बन्धग्रहे चत्वारो हेतवः

अर्थावबोधो न खलु मनुष्यपदमलङ्कुर्वद्भिः प्राणिविशेषैरेव क्रियते अपितु सामान्यजन्तुभिरपि चेतनैः अर्थोऽवबुध्यते जातसंस्कारैः। तत्र सम्बन्धग्रहोऽर्थेन शब्दस्य कारणम् अस्ति। हेतुभिरनेकैर्हि सम्बन्धग्रह सम्भवो भवति। तेषु मुख्यतमा अत्र निर्दिश्यन्ते— १. वृद्धव्यवहारः, २. लोकागमः, ३. विनियोगः, ४. वक्तृश्रोत्रोः भावना च सम्बन्धाऽवग्रहहेतवः निश्चेतुं शक्यन्ते।

१. वृद्धव्यवहारः—

अर्थे शब्दस्य शक्तिग्राहकेषु वृद्धव्यवहारं मुख्यतमं मन्वते प्रामाणिकाः। भर्तृहरिणा योग्यतालक्षणस्य सम्बन्धस्याऽवग्रहाय सङ्केतः कारणत्वेन[2] व्याख्यातः। स च सङ्केतो वृद्धव्यवहारमूलक एव। प्रतिपत्ता जन्मत एव व्यवहारमनुपश्यन् शब्दस्याऽर्थेन सम्बन्धग्रहं करोति। सङ्केतमूलकोऽयं वृद्धव्यवहारः

---

१. आचार्यो मातुलश्चेति यथैको व्यपदिश्यते।
सम्बन्धिभेदादर्थात्मा स विधिः पक्तिभावयोः॥ वा० प०, ३।८।६३।

२. समयाद् योग्यतासंविन्माता पुत्रादियोगवत्।... वा० प०, ३।३।३१।

पतञ्जलिना[1] द्विधा विभक्तः—१. उपदेशः, २. उद्देशश्च । उपदेशोद्देशाभ्यां प्रयोजकवृद्धः प्रयोज्यवृद्धमर्थमवगमयति । प्रत्यक्षमाख्यान[2]मुपदेशो भवति । गां प्रत्याययिषुः कश्चिद् वृद्धः गोः कर्णौ धृत्वा बालं बोधयति अयं गौरिति । गुणैः व्याख्यानमुद्देशः कथ्यते ।[3] लम्बलाङ्गूलः सास्नादिमान् भवति गौरिति कथनं भवति उद्देशः । एवञ्चोपदेशोद्देशाभ्याम् अज्ञस्य भवति अर्थावगतिः ।

## २. लोकागमः—

वृद्धव्यवहारस्य क्षेत्रं भवति लोकः । जातसंस्कारः प्रतिपत्ता लोकं पर्यवेक्षमाणः अर्थेन शब्दस्य सम्बन्धग्रहणे समर्थो भवति । शब्दार्थसम्बन्धानां नित्यत्वं प्रसाधयता पतञ्जलिना लोको हि सम्बन्धग्राहको व्याख्यातः ।[4] प्रयोक्तुः प्रतिपत्तुश्चाऽभ्यासस्य प्रतिभायाश्च प्रत्यक्ष आधारो लोको भवति । लोकपरम्पराविरोधी तर्कोऽपि शिष्टानां विफल एव भवति । व्याकरणमपि लोकमेवाऽनुसरति । परम्पराविपरीतं तस्याऽनुशासनं न भवति सफलमिति भर्तृहरिः व्याचष्ट ।[5]

## ३. विनियोगः—

शब्दस्याऽर्थे विनियोगेन प्रवक्तुः बुद्धिः सम्बन्धप्रत्यये प्रत्यायने च सुदृढा भवति । अर्थाभिधानसम्बन्धं भर्तृहरिरुक्तिद्वारं प्राचष्ट ।[6] विनियोगादृते कश्चिदपि शब्दः अर्थप्रत्यायने सम्बन्धाऽवग्रहे वा समर्थो न भवति । अतो विनियोगः सम्बन्धग्रहे सहायकः, अभ्यासजनकश्च भवति ।

## ४. वक्तृश्रोत्रोः भावना—

शब्दस्य किञ्चिदपि स्वकीयं प्रवृत्तिनिमित्तं प्रवृत्तिनिमित्ताश्रयो वा न भवति । वक्तुर्भावना एव शब्देन सम्बद्धा सती शब्दस्य प्रवृत्तिनिमित्तं भवति ।

---

१. प्रत्यक्षं तावदाख्यानमुद्देशः । अयं गौरिति । गुणैः प्राख्यानमुद्देशः ।···ईदृशो देवदत्त इति ।
अष्टा० १।३।२, महाभा० ।

२. कथं पुनः ज्ञायते सिद्धः शब्दोऽर्थः सम्बन्धश्चेति ? लोकतः । अष्टा०, महाभा०, पस्पशा० ।

३. न चाऽऽगमादृते धर्मः तर्केण व्यवतिष्ठते ।
ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम् ॥

४. धर्मस्य चाऽव्यवच्छिन्नाः पन्थानः ये व्यवस्थिताः ।
न तांल्लोकप्रसिद्धत्वात् कश्चित्तर्केण बाधते ॥ वा० प०, १।३०।३१।

५. विनियोगादृते शब्दो न स्वार्थस्य प्रकाशकः ।
अर्थाऽभिधानसम्बन्धमुक्तिद्वारं प्रचक्षते ॥ वा० प०, २।४०६ ।

यथा स्फटिकादिद्रव्यम् आश्रयभेदाद् विभिन्नरूपमाश्रयते[1] तथा शब्दोऽपि वक्तुः भावनाऽनुसारेण अर्थाभिधायको भवति । तदैव च तत्र सङ्केतात् प्रतिपत्तृभिः वाच्यवाचक सम्बन्धः संस्थाप्यते । कालान्तरे च प्रसिद्धव्यवहारः स योग्यतालक्षणः सम्बन्धः सञ्जायते । इयमेव वक्तृश्रोत्रोः भावना प्रतिभा उच्यते । प्रतिभेयं प्रवृत्तिनिमित्तादिभेदात् स्वभावचरणाऽभ्यासयोगाऽदृष्टोपपादितरूपां षड्विधां[2] स्वीकुर्वते तत्त्वविदः । एवञ्च शब्दार्थयोः अर्थार्थयोश्च सम्बन्धग्रहे प्रतिभाख्या वक्तृश्रोत्रोः भावनाऽपि सहायिका भवति ।

## सम्बन्धस्य नित्यत्वम्

अतः प्रागस्माभिः शब्दस्याऽर्थस्य सम्बन्धस्य च स्वरूपं सुस्पष्टं प्रतिपादितम् । प्रयोक्ता स्वबुद्धिभावनाऽभिव्यक्तये शब्दव्यापारं कुरुते । वक्तुः शब्दार्थयोः गृहीतसम्बन्धेन च श्रोता अर्थमधिगच्छति । सम्बन्धस्य स्वकीयं पृथक् किञ्चिदस्तित्वं न भवति । शब्दार्थयोः सहवर्ती सम्बन्धोऽयं सम्बन्धिभ्यां भिन्नोऽपि उभयाश्रितो भवति । अस्य सम्बन्धस्य निर्धारणम् उक्तः लोकादिहेतुभिः प्रयोज्यवृद्ध एव करोति । शब्दाऽर्थयोः पराधीनत्वात् शब्दार्थधर्मक एव भवति सम्बन्धः । शब्दार्थयोः नित्यत्वं आपातात्त्विकदृष्ट्या प्राक् प्रतिपादितं समीचीनम् । सम्बन्धस्यापि नित्यत्वमेव भाषाशास्त्रिभिरभ्युपगतम् । यद्यपि सम्बन्धो नाम प्रयोज्यप्रयोजकयोः भावनाविशेष[3] एव भवति, अतः कथं तत्र नित्यत्वं सन्तिष्ठेतेति वक्तुं सुकरं तथाऽपि प्रवाहनित्यतया यथा शब्दार्थयोः नित्यत्वं तथा सम्बन्धस्याऽपि नित्यत्वं बोध्यम् । शब्दस्य प्रवृत्तिनिमित्ततदाश्रययोश्चानैयत्येन अर्थस्य अभिधेयात्मना नित्यत्वमुक्तमस्माभिः । शब्दोऽपि अभिधायकात्मना नित्यो वक्तुं शक्यते । यतः सम्बन्धः सहवर्ती शब्दाऽर्थयोः, अस्मात् सम्बन्धोऽपि अविनाभावेन विद्यमानत्वाद् नित्यो भवति ।

शब्दस्य अर्थो न भवति वाचनिकः, अपितु स्वाभाविकं हि शब्दैरर्थोऽभिधीयते । तथा सम्बन्धोऽपि स्वाभाविक एव शब्दार्थयोः । व्याडिना[4] सम्बन्धः

---

१. स्फटिकादि यथा द्रव्यं भिन्नरूपैरुपाश्रयैः ।
स्वशक्तियोगात् सम्बन्धः ताद्रूप्यमुपगच्छति ॥ वा० प०, ३।३।४० ।

२. स्वभावचरणाभ्यास-योगादृष्टोपपादिताः ।
विशिष्टोपहिता चेति प्रतिभां षड्विधां विदुः ॥ वा० प०, २।१५४।

३. यत्प्रयोक्ताऽभिसंधत्ते शब्दस्तदवतिष्ठते । वा० प०, २।४०९।

४. सम्बन्धस्य न कर्ताऽस्ति शब्दानां लोकवेदयोः ।
शब्दैरेव हि शब्दानां सम्बन्धः स्यात् कृतः कथम् ॥
श्लोकोऽयं सङ्ग्रहनाम्नोद्धृतः, वा० प०, १।२५। स्वो० ।

अकर्तृको व्याख्यातः । लौकिकानां वैदिकानाञ्च शब्दानामर्थैः सह स्वाभाविक एव सम्बन्धो व्याडिसम्मतः । सम्बन्धः खलु भवति आकाङ्क्षाभास्यः न तु शब्दाभिधेयः । वस्तुतः सम्बन्धः, प्रयोक्तुः प्रतिपत्तुश्च भावनैव भवति । शब्दानां सार्थकत्वं निरर्थकत्वञ्च सम्बन्धबलादेव क्रियते । अनित्येऽप्यर्थे योग्यतालक्षणत्वात् सम्बन्धस्य नित्यत्वं व्याख्यातं[1] कैयटेन विदुषा ।

कात्यायनः 'सिद्धे शब्दार्थसम्बन्धे'[2] इति वार्तिके सम्बन्धं सिद्धं व्याचष्ट । व्याडिना कार्यप्रतिद्वन्द्विभावार्थे प्रयुक्तं सिद्धशब्दमाश्रित्य पतञ्जलिः नित्यार्थे सिद्धशब्दं व्याख्यातवान् । एवञ्च कात्यायनपतञ्जल्योः मते सम्बन्धस्य नित्यत्वं सम्पन्नम् । अर्थवतामर्थैः सह सम्बन्धो नित्यो[3] भवतीति वृद्धिरादैजिति[4] पाणिनीयं भाषमाणः पतञ्जलिः प्रत्यपादयत् । पाणिनिराचार्यः नित्यमभिमत्य शब्दार्थसम्बन्धमनुशासने प्रवृत्तः इति उक्ताचार्यद्वयस्याऽभिप्रेतम् । भर्तृहरिणा आचार्यत्रयम् एतदवलम्ब्य शब्दाऽर्थसम्बन्धानां नित्यत्वमनूदितम्—

नित्याः शब्दार्थसम्बन्धाः तत्राऽऽम्नाता महर्षिभिः ।
सूत्राणां चानुतन्त्राणां भाष्याणां च प्रणेतृभिः ॥[5]

कारिकामिमां टीकमानो हरिवृषभः[6] स्वभावसिद्धं सम्बन्धं व्याचष्ट । पतञ्जलिना विप्रतिषिद्धं वाचनिकमर्थादेशनं प्रागस्माभिः प्रतिपादितम् । तदेवाधृत्य हरिवृषभोऽपि औत्पत्तिको भवति सम्बन्ध इति मतमतिष्ठत् । सम्बन्धं नित्यं प्रतिपादयमानो वृषभः प्राप्ताऽविच्छेदमपि सम्बन्धं स्वीचकार । पारस्परिकव्यवहारमूलक एव भवति शाब्दव्यापारः । व्यवहारपद्धतिश्च अनादिरविच्छिन्नः यावत्सृष्टिस्थित्या । व्यवहारपरम्पराया अनादित्वात् सम्बन्धस्य नित्यत्वं कैयटेन व्याख्यातम् ।[7]

---

१. अनित्येऽर्थे कथं सम्बन्धस्य नित्यतेति चेद् ? योग्यतालक्षणत्वात् सम्बन्धस्य । तस्याश्च शब्दाश्रयत्वात्; शब्दस्य नित्यत्वात् । अष्टा०, महाभा० । पस्पशा० प्र० ।

२. अष्टा०, का० वा० १ ।

३. नित्यो ह्यर्थवतामर्थैरभिसम्बन्धः । अष्टा०, १।१।१ महाभा० ।

४. अष्टा०, १।१।१ ।

५. वा० प०, १।२३ ।

६. नित्यः सम्बन्धः इत्यस्येदं भावे सति शब्दार्थयोः सोऽयमिति यः सम्बन्धः सोऽर्थाऽऽदेशनस्य कर्तुमशक्यत्वादौत्पत्तिकः स्वभावसिद्धो न केनचित् कर्त्रा कश्चित् प्रतिपत्तारं प्रत्यज्ञातपूर्वः सत्प्रथमं कृत इति । तस्मादनादिर्नित्यः प्राप्तविच्छेदः शब्दार्थयोः सम्बन्धः । वा० प०, १।२३ स्वोप० ।

७. सम्बन्धस्यापि व्यवहारपरम्परयाऽनादित्वान्नित्यता । अष्टा० महाभा०, पस्पशा०, प्र० ।

कस्यचनाऽपि शब्दस्य कश्चनाऽपि अर्थं नियतो वक्तुं न शक्यते । अद्याभिधेयत्वेन स्वीकृतः शब्दार्थः कालान्तरे हीयते, पुनः कश्चिदन्योऽर्थः प्रचीयते । एवं शब्दार्थस्याऽनियतत्वेऽपि तत्र शब्दे अभिधेयत्वधर्मः सन्तिष्ठत एव । भाषायाः स्वाभाविकी प्रवृत्तिरियम् अपलपितुं न शक्यते । यः कोऽपि शब्दः प्रयोक्तृप्रतिपत्तृभ्यां यस्मिन् कस्मिन्नपि अर्थे विनियोक्तुं शक्यते । अत एव एक एव शब्दः क्वचित् किञ्चित् प्रवृत्तिनिमित्तं व्यनक्ति क्वचिदन्यत् क्वचिच्चान्यत् ।[1] शास्त्रभेदात् सम्प्रदायभेदाच्च शब्दार्थः भिद्यमानोऽवलोक्यत एव । तत्र सम्बन्धग्रहणभेद एव मुख्यं भवति कारणम् । यः सम्प्रदायः यत्र शब्दे यस्यार्थस्य सम्बन्धं स्वीकुरुते स भवति शब्दस्य अर्थः । अस्मादेव सर्वे सर्वार्थवाचका' इति स्वीक्रियते शब्दतत्त्वविद्भिः । वक्तुः भावनाविशेषः शब्दः, श्रोतुः भावनाविशेषोऽर्थः उभयोश्चैकाऽधिकरणेऽर्थे तादात्म्यं सम्बन्धः इति निष्कर्षः —

स्फाटिकादि यथा द्रव्यं भिन्नरूपैरुपाश्रयैः ।
स्वशक्तियोगात्सम्बन्धस्ताद्रूप्यमुपगच्छति ।।[2]

पाणिनीयो हि सिद्धान्तः शब्दार्थयोश्च सम्मतः ।
सम्बन्धे चापि कात्स्न्र्येन शास्त्रीयः समुदाहृतः ।। १ ।।
अथ शब्दार्थसम्बन्धसिद्धान्तः पाणिनीयकः ।
इत्याख्यो ग्रन्थबन्धोऽयं वाक्तत्त्वानुग्रहाद् भृशम् ।। २ ।।
बौद्धश्चायं चिराद् ग्रन्थो ह्यन्वेष्टुमनसो मम ।
पाणिनीयाब्धिसारांशः प्रस्तुतो विज्ञसंसदि ।। ३ ।।
देवाक्षिखाक्षिवर्षेषु ग्रन्थोऽयं विक्रमस्य च ।
श्रावण्यां हि समारब्धश्चाब्दयोः पूर्तितां गतः ।। ४ ।।
अर्थाभावादतः पूर्वं प्राकाश्यं नाध्यजायत ।
ग्रन्थः पूर्णोऽपि दीर्घेण श्रमेण महता मुदा ।। ५ ।।
वाराणस्याञ्च देहल्यां मुजफ्फरपुरेऽपि वा ।
सरैयाग्रामके चायं शिमलायां समीक्षितः ।। ६ ।।
इयद्दीर्घेषु कालेषु मुहुर्मुहुः विलोकितः ।
सम्पादनाय मोदाय मयका पुनरर्पितः ।। ७ ।।
विदुषां तत्त्वविज्ञानां महतां शिष्टसंसदि ।
व्याचष्ट ग्रन्थकृद् भूयः पाणिनीयमनेकधा ।। ८ ।।

---

१. अन्यार्थमपि प्रकृतिरन्यार्थं भवति । अष्टा०, १।१।२३, महाभा० ।
२. वा०प०, ३।३।४० ।

निबद्धं चात्र शास्त्रीयं तत्त्व हि पाणिनीयकम् ।
ग्रन्थकृता विनीतेन भूरिशो विज्ञचर्चितम् ॥ ९ ॥
वेदयुगखनेत्रेषु वैक्रमाब्देषु तत्त्वतः ।
ग्रन्थोऽयं मेषसङ्क्रान्तौ सादरं सम्प्रकाशितः ॥ १० ॥
शास्त्ररक्ष्यैकलक्ष्येभ्यो विद्वद्भ्यः सादरं मुदा ।
उपाहृतो विनीतेन नरदेवेन शास्त्रिणा ॥ ११ ॥
विद्वांसः शास्त्रमर्मज्ञाः शास्त्रेषु रतबुद्धयः ।
दत्ताशिषोऽनुगृह्णन्तु ग्रन्थकृति-कृतौ तथा ॥ १२ ॥
नीरक्षीरविवेकाय कृतेश्च वाग्विदां वराः ।
विद्वांसो गतविद्वेषाः सदसद्व्यक्तिहेतवः ॥ १३ ॥
सरस्वतीप्रसूतेन पञ्चानन्दतनूभुवा ।
पूर्णश्चायं कृतो ग्रन्थो नरदेवेन शास्त्रिणा ॥ १४ ॥
वर्द्धतां शब्दविज्ञेषु पाणिनीयसमादरः ।
शब्दैरेवाभिभाषन्तां लोका नैवापशब्दकैः ॥ १५ ॥

इति सरस्वतीदेवीप्रसूतेन पञ्चानन्दतनूभुवाऽऽचार्यनरदेवशास्त्रिणा
'अथ पाणिनीयशब्दार्थसम्बन्धसिद्धान्त' इत्याख्ये
ग्रन्थे तृतीयं सम्बन्धकाण्डं परिसमाप्तम् ।

परिपूर्णश्चायमथपाणिनीयशब्दार्थसम्बन्धसिद्धान्तनामा ग्रन्थः ।

### प्रथमपरिशिष्टम्

## पाणिनीयपरम्परा

अथ शब्दार्थसम्बन्धसिद्धान्ते पाणिनीयके ।
ग्रन्थे वै वर्ण्यते बद्धे पाणिनीयपरम्परा ॥ १ ॥
सरस्वती-प्रसूतेन पञ्चानन्दात्मजेन च ।
कुबेरदत्त-शिष्येण नरदेवेन शास्त्रिणा ॥ २ ॥
कालेन महता ग्रन्थो बद्धोऽयं श्रमसम्भवः ।
पाणिनीयात्मना नित्यं विदुषामाशिषा मुदा ॥ ३ ॥
वैदिकेषु हि मन्त्रेषु ब्राह्मणारण्यकेषु च ।
तत्त्वार्थसारभूतेषु वेदान्तोपनिषत्सु च ॥ ४ ॥
प्रातिशाख्येषु सर्वेषु वेदाङ्गेषु च तत्त्वतः ।
शब्दार्थौ समाख्यातौ सम्बद्धौ नित्यभावतः ॥ ५ ॥
वेदार्थस्यावबोधाय वेदाङ्गानि मतानि षट् ।
शिक्षा व्याकरणं कल्पः छन्दो ज्योतिः निरुक्तकम् ॥ ६ ॥
नूनं शब्दसमाम्नाये निघण्टौ यास्कनिर्मिते ।
निरुक्ते शब्दतत्त्वानां निर्वचनञ्च तात्त्विकम् ॥ ७ ॥
यास्कीयं भाषिकं तत्त्वं सर्वत्र सार्वकालिकम् ।
नैरुक्तेषु च सर्वेषु यास्काचार्यः शिरोमणिः ॥ ८ ॥
यास्कभाष्यं निरुक्ताख्यं समाम्नाये निघण्टुके ।
अद्यापि भाषिकं शास्त्रं ख्यातं विश्वे महार्घकम् ॥ ९ ॥
दुर्गो माहेश्वरो देव-राजयज्वा महामतिः ।
भाष्यकारा निरुक्तस्य शब्दार्थतत्त्वसाधकाः ॥ १० ॥
व्याकरणं षडङ्गेषु प्रधानं शिष्टसम्मतम् ।
वैयाकरणविद्वांसो ध्वनिकारैश्च घोषिताः ॥ ११ ॥
ऐन्द्रं हि काशकृत्स्नञ्चापिशलं शाकटायनम् ।
विख्यातं पाणिनेः पूर्वं व्याकरणचतुष्टयम् ॥ १२ ॥
पाणिनीयन्तु सवषु विशिष्टं गुणगौरवात् ।
वेदे लोके च वै शक्तं साधु शब्दानुशासने ॥ १३ ॥

किञ्चिच्च वैदिकं शास्त्रं लौकिकञ्चाथ केवलम् ।
शब्दानां पाणिनेः पूर्वं सम्प्रदायानुशासनम् ॥ १४ ॥
चरणशाखयोर्नैव पाणिनीयेऽस्ति कश्चन ।
पक्षपातो न वा भेदः शब्दानामनुशासने ॥ १५ ॥
धन्यः पाणिनिः शिष्टः निःसम्प्रदायकोऽभवत् ।
सर्वपारिषदं शास्त्रं दाक्षीपुत्रः विनिर्ममौ ॥ १६ ॥
काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम् ।
सार्वलौकिकमाख्यातं पाणिनीयानुशासनम् ॥ १७ ॥
प्रोक्ता पाणिनिना धातुभिः गणोणादिभिः सह ।
अष्टाध्यायी महाग्रन्थो विश्ववाङ्मयभूषणः ॥ १८ ॥
[1]शाकल्यः [2]काश्यपः ख्यातः [3]शौनक[4]शाकटायनौ ।
[5]सेनका[6]पिशली [7]चाक्रवर्मण[8]गालवौ मतौ ॥ १९ ॥
[9]स्फोटायनश्च वै [10]गार्ग्यो [11]भारद्वाजश्चेति सम्मताः ।
वैमत्यार्थञ्च पूजार्थं बहुमानपुरःसरम् ॥ २० ॥
शास्त्रे[12] प्राचामुदीचाञ्च[13] [14]आचार्याणां तथैव च ।
एकेषामिति. सूत्रेषु बहवः शाब्दिका मताः ॥ २१ ॥
वैदिका लौकिकाश्चैव शब्दतत्त्वविवेचकाः ।
आचार्याः पाणिनेः पूर्वे पाणिनीये समादृताः ॥ २२ ॥
अनादिरव्यवच्छिन्ना शब्दतत्त्वपरम्परा ।
लभ्यते श्रूयते नित्यमाचार्यैरनुगम्यते ॥ २३ ॥
प्रमाणभूत आचार्यः शाब्दिकाचार्यशिरोमणिः ।

---

(१) सम्बुद्धौ शाकल्यस्येतावनार्षे । (अष्टा० १।१।१६)
(२) तृषि-मृषि-कृषेः काश्यपस्य । (अष्टा० १।२।२५)
(३) शौनकादिभ्यश्छन्दसि । (अष्टा० ४।३।१०६)
(४) लङः शाकटायनस्यैव । (अष्टा० ३।४।१११)
(५) गिरेश्च सेनकस्य । (अष्टा० ३।४।११२)
(६) वा सुप्यापिशलेः । (अष्टा० ६।१।९२)
(७) ई चाक्रवर्मणस्य । (अष्टा० ६।१।९९)
(८) तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य । (अष्टा० ७।१।७४)
(९) अवङ् स्फोटायनस्य । (अष्टा० ६।१।१२३)
(१०) ओतो गार्ग्यस्य । (अष्टा० ८।३।२०)
(११) ऋतो भारद्वाजस्य ।(अष्टा० ७।२।६३)
(१२) प्राचां ष्फः ताद्धितः ।(अष्टा० ४।१।१७)
(१३) उदीचामिञ् । (अष्टा० ४।१।१५३)
(१४) आदाचार्याणाम् । (अष्टा० ७।३।४९)
(१५) यजुष्येकेषाम् । (अष्टा० ८।३।१०४)

पाणिनिः प्रथितो लोके वैयाकरणकेशरी ॥ २४ ॥
अष्टाध्याय्याश्च सूत्राणि पाणिनीयानि भूरिशः ।
प्रमाणानि च सर्वत्र शाब्दिकानां महीयसाम् ॥ २५ ॥
सर्वपारिषदं शास्त्रं पाणिनीयमकालकम् ।
चकार पाणिनिः लोके नूनं शब्दानुशासनम् ॥ २६ ॥
वर्षशिष्यश्च कौत्सस्य गुरुः शास्त्रप्रवर्तकः ।
सूत्रकृत्सु महान् ख्यातः पाणिनिः लोकविश्रुतः ॥ २७ ॥
अष्टके सूत्रभाषा वै शब्दानुशासनेच्छया ।
पाणिनिनाऽऽश्रिता नूनं विश्वे परमदुर्लभा ॥ २८ ॥
अष्टाध्यायी ध्रुवस्तम्भः नूनं संस्कृतवाङ्मये ।
पाणिनीयानि सूत्राणि साक्ष्याणि तत्त्वतथ्ययोः ॥ २९ ॥
सर्वा वसुमती जाता पाणिनिना विदुष्मती ।
ज्योतिष्मती च शब्देन अपशब्दापसारतः ॥ ३० ॥
त्रयोदश्यां मुनिः स्वर्गं तीर्थदर्शी जगाम वै ।
यथानुश्रुति सिंहेन हिंस्रेण कवलीकृतः ॥ ३१ ॥
कात्यायनमुनिः सूत्रेषूक्तानुक्तविचारकः ।
वार्तिकेषु स्वकीयेषु शब्दार्थतत्त्वसाधकः ॥ ३२ ॥
सूत्रप्राप्तिनिषेधेन अप्राप्तेश्च विधानतः ।
मुनिरुपकुरुते नित्यं सिद्धं विज्ञस्य पाणिनेः ॥ ३३ ॥
पाणिनीयार्थविद् व्याडिः शब्दब्रह्मैकवाङ्मुनिः ।
श्लोकलक्षैकग्रन्थेन पाणिनीयमभाषत ॥ ३४ ॥
शब्दश्चार्थश्च सम्बन्धः उक्तः पाणिनिसम्मतः ।
व्याडिना व्याकृतिज्ञेन शास्त्रभूषितसङ्ग्रहे ॥ ३५ ॥
वार्तिकैर्हि विना व्याडिः सूत्रं व्याचष्ट केवलम् ।
तथापि पाणिनीयं वै सङ्ग्रहग्रथन्शोभितम् ॥ ३६ ॥
सुसङ्क्षेपरुचीन् प्राप्य स्वल्पविद्यापरिग्रहान् ।
तान् वैयाकरणान् व्याडेः सङ्ग्रहोऽस्तमुपागतः ॥ ३७ ॥
लोके षड् गुरवः ख्याताः षड्गुरुशिष्यसंस्मृताः ।
यास्कश्च शौनकः शिष्टः पाणिनिः पिङ्गलो मुनिः ॥ ३८ ॥
कात्यायनो मुनिः व्याडिः सर्वशास्त्रविशारदः ।
गुरूणां गुरवो ह्येते विद्यापारदृश्वनः ॥ ३९ ॥
सङ्ग्रहेऽस्तङ्गते व्याडेः व्याकरणागमालये ।
पाणिनीयं विपर्यस्तं पठने पाठने तथा ॥ ४० ॥

अप्रचारतमोमग्ने सूत्रवार्तिकवाङ्मये ।
पतञ्जलिः महाभाष्यं चकार प्राणदायकम् ॥ ४१ ॥
पाणिनीयस्य वै पारं शब्दशास्त्राम्बुधेः ध्रुवम् ।
पातञ्जलेन गन्तव्यं महाभाष्येण सेतुना ॥ ४२ ॥
महाभाष्यं सुसम्बद्धं यद्यधीतं महार्घकम् ।
पाणिनीयं तदा सद्यो वै हस्तामलकं मतम् ॥ ४३ ॥
योगेन चित्तदोषस्य वैद्यकेन तनूरुजः ।
वाग्दोषस्य च भाष्येण चिकित्सकः पतञ्जलिः ॥ ४४ ॥
सर्वेषां न्यायबीजानां तीर्थदर्शी पतञ्जलिः ।
पाणिनीयस्य तन्त्रस्य सर्वथा परिरक्षकः ॥ ४५ ॥

महाभाष्ये हि सूत्राणि वार्तिकानि तथैव च ।
भाषितानि यथाशास्त्रं बद्धो व्याकरणागमः ॥ ४६ ॥
गाम्भीर्याद् गुप्तसारांशमुत्तानञ्चैव सौष्ठवात् ।
बुद्धिग्राह्यं महाभाष्यं पातञ्जलममूल्यकम् ॥ ४७ ॥
शास्त्रश्रमपरिग्लाना नूनमकृतबुद्धयः ।
महाभाष्ये तदा जाता अनवस्थितनिश्चयाः ॥ ४८ ॥
"वेदान्नो वैदिकाः शब्दा लोकात्सिद्धाश्च लौकिकाः" ।
ब्रुवाणैश्चेति विख्यातं, पाणिनीयमनर्थकम् ॥ ४९ ॥
पठने पाठने नैव महाभाष्यं तदा पुनः ।
अशिष्टैः पामरैः लोके सम्प्रदायः समादृतः ॥ ५० ॥
बैजि - सौभव - हर्यक्षाः शुष्कतर्कानुसारिणः ।
आर्षं हि नष्टवन्तो वै ग्रन्थं पाणिनिबोधकम् ॥ ५१ ॥

सम्प्रदायव्यवच्छिन्नं ग्रन्थमात्रे व्यवस्थितम् ।
दाक्षिणात्यै महाभाष्यमुपलब्धं कथञ्चन ॥ ५२ ॥
सर्वत्र च परिव्याप्तं कदाचित् पाणिनीयकम् ।
सङ्कीर्णञ्च प्रमादाद्धि, लङ्कात्रिकूटपर्वतात् ॥ ५३ ॥
समादाय महाभाष्यं चन्द्राचार्यो महामतिः ।
वसुरातश्च मेधावी नूनं भर्तृहरेः गुरुः ॥ ५४ ॥
भाष्यबीजानुसारेण न्यायप्रस्थानमार्गतः ।
सम्पादितं महाभाष्यमाचार्यैः गुरुभिस्तदा ॥ ५५ ॥
गुरुणा वसुरातेन भर्तृहरिः प्रचोदितः ।
वाक्यपदीयसारेण उद्धर्तुं पाणिनीयकम् ॥ ५६ ॥

शब्दवाक्यपदैः काण्डैः सुबद्धैः हरिणा मुदा ।
पाणिनीय-महाभाष्य-सम्प्रदायः समुद्धृतः ॥ ५७ ॥
शब्दश्चार्थश्च सम्बन्धः पाणिनीयः सुसम्मतः ।
व्याख्यातो हरिणा नूनं गुरुणा गुरुता भृता ॥ ५८ ॥

ख्यातो भर्तृहरिर्योगी भाष्यटीकां प्रदीपिकाम् ।
विज्ञैः समादृतं वाक्यपदीयञ्च विनिर्ममे ॥ ५९ ॥
सङ्ग्रहसारसम्पुष्टो महाभाष्याब्धिमौक्तिकः ।
वाक्यपदीयनामा वै ग्रन्थो हरेः महीयताम् ॥ ६० ॥

भाष्याब्धिश्चातिगम्भीरः पाणिनीयश्च सागरः ।
उत्तर्तुं हरिणा बद्धः ग्रन्थसेतुर्विनिर्मितः ॥ ६१ ॥
सङ्ग्रहन्यूनता नूनं समाप्ता हरिणा भृशम् ।
वाक्यपदीयनाम्ना वै ग्रन्थेनागमसारतः ॥ ६२ ॥

यद्यपि त्रिमुनिः ख्याता व्याकृतिः पाणिनीयिका ।
तथापि मुनयोऽनेके पाणिनीयप्रयोजकाः ॥ ६३ ॥
भगवान् पाणिनिः व्याडिः कात्यायनो महामुनिः ।
पतञ्जलिर्महाचार्यः भर्तृहरिः सुशाब्दिकः ॥ ६४ ॥

आचार्यैः शोभते एभिः पञ्चभिः पाणिनीयकम् ।
शब्दानुशासनं शिष्टं सर्वलोके महीयताम् ॥ ६५ ॥
चन्द्रश्च वसुरातश्च आचार्यौ लब्धकीर्तिकौ ।
पुनरुज्जीवकौ लोके पाणिनीयस्य सम्मतौ ॥ ६६ ॥

तन्त्रे च दर्शने काव्ये अनेकत्र च वाङ्मये ।
आस्तिके नास्तिके चापि सर्वगं सार्वकालिकम् ॥ ६७ ॥
अनादि निधनं नित्यं सर्वतत्त्वाभिधायकम् ।
बहुभिश्चैव आचार्यैः शब्दतत्त्वमुपाश्रितम् ॥ ६८ ॥

दर्शनेषु च सर्वेषु दर्शनं शब्ददर्शनम् ।
व्याचष्ट माधवः ख्याते सर्वदर्शनसङ्ग्रहे ॥ ६९ ॥
वामनेन जयादित्यपण्डितेन प्रकाशिता ।
काशिका सूत्रवृत्तिर्हि पाणिनीयप्रकाशिता ॥ ७० ॥

पाणिनितः हरिं यावत् सिद्धा शास्त्रपरम्परा ।
शाब्दिकसम्प्रदाया सा काशिकायां सुरक्षिता ॥ ७१ ॥
यच्छब्दत्वं तदस्माकं प्रमाणं भाष्यविश्रुतम् ।
सर्वशास्त्रीयराद्धान्तः काशिकायां विलोक्यते ॥ ७२ ॥

पाणिनीयसुरक्षाय परम्पराहिताय च ।
शास्त्रैकभावनाबद्धा काशिका सम्प्रवर्तताम् ॥ ७३ ॥
ऐतिह्यं रक्षितं तत्र संस्कृतिः प्रतिबिम्बिता ।
परम्परा सुसम्बद्धा काशिकायां मुहुर्मुहुः ॥ ७४ ॥
पाणिनिमर्मसम्पन्ना कात्यायनमतान्विता ।
पतञ्जलिरहस्या च काशिका कीर्तिवैभवा ॥ ७५ ॥
शाखाचरणनिर्बद्धा व्याकृतिः पाणिनीयका ।
तथैव काशिकावृत्तिः पाणिनीयनयानुगा ॥ ७६ ॥
न्यासाख्यां कृतवान् टीकां काशिकायाः मनोहराम् ।
जिनेन्द्रबुद्धिनामा हरदत्तः पदमञ्जरीम् ॥ ७७ ॥
वृषभदेव आचार्यः पुण्यराजश्च कीर्तिमान् ।
वाक्यपदीयमागारं हेलाराजोऽप्यटीकत ॥ ७८ ॥
प्रदीपाख्यं महाभाष्यव्याख्यानं भुवि विश्रुतम् ।
कृतवान् भाष्यमर्मज्ञः कैय्यटः जय्यटात्मजः ॥ ७९ ॥
भाष्यप्रदीपमुन्नेतुमुद्द्योतं कुरुते मुदा ।
नागेशः शब्दमर्मज्ञः परिभाषेन्दुशेखरम् ॥ ८० ॥
प्रक्रियाकौमुदी नव्या रामचन्द्रेण निर्मिता ।
प्रकाशं कुरुते टीकां शेषश्रीकृष्णपण्डितः ॥ ८१ ॥
प्रकाशेन विना नैव प्रकाशिताऽवलोक्यते ।
प्रक्रियाकौमुदी नूनं रामचन्द्रस्य धीमतः ॥ ८२ ॥
भट्टोजिदीक्षितः श्रीमान् पाणिनीयधुरन्धरः ।
प्रक्रियामर्मविद् धीरो नव्यशैलीप्रवर्तकः ॥ ८३ ॥
वैयाकरणसिद्धान्तकौमुदीं शब्दकौस्तुभम् ।
सिद्धान्तकौमुदीव्याख्यां ख्यातां प्रौढमनोरमाम् ॥ ८४ ॥
व्याकृतितत्त्वसम्पन्ना वैयाकरणभूषणाः ।
कारिकाश्च विनिर्मीय समगृह्णद् महद्यशः ॥ ८५ ॥
शब्दरत्नाख्यटीकाञ्च कृतवान् हरिदीक्षितः ।
कौण्डभट्टश्च मेधावी भूषणसारनामिकाम् ॥ ८६ ॥
कौमुदीसारसङ्क्षेपा मध्यसिद्धान्तकौमुदी ।
कृतिः वरदराजस्य ततोऽपि लघुकौमुदी ॥ ८७ ॥
वैयाकरणसिद्धान्तकौमुद्या गूढभावतः ।
गूढतत्त्वावबोधाय टीकाञ्च तत्त्वबोधिनीम् ॥ ८८ ॥

कृतवान् प्रक्रियालीनः ज्ञानेन्द्रश्च सरस्वता।
बालमनोरमां टीकां वासुदेवो हि दीक्षितः॥ ८९॥

नागेशः शब्दशास्त्रज्ञो विभिन्नागमशोधकः।
वैयाकरणसिद्धान्तमञ्जूषां तनुते मुदा॥ ९०॥
उद्द्योतञ्च प्रदीपस्य शब्देन्दुशेखरं तथा।
कौमुद्या मौलिकार्था हि शेखरेऽन्वेषिता ध्रुवम्॥ ९१॥
मञ्जूषा शब्दतत्त्वस्य दर्शनं तनुते सदा।
नागेशः पाणिनीये वै कृतभूरिपरिश्रमः॥ ९२॥
आर्षवाङ्मयभक्तस्य विरजानन्दस्वामिनः।
अन्तेवासी दयानन्दः स्वामी वेदप्रचारकः॥ ९३॥

वेदभाष्ये कृतोद्योगः पाणिनीये कृतश्रमः।
सत्यविद्यासमागारं वेदं समुदघोषयत्॥ ९४॥
अष्टाध्याय्याः समुद्धारे पठने पाठने तथा।
सततं स कृतोद्योगः पाणिनीयप्रयोजकः॥ ९५॥

आर्यसमाजसंस्थायाः संस्थापको महायतिः।
वैदिको वेदवागात्मा दयानन्दः सरस्वती॥ ९६॥
नव्याचार्येषु सम्मान्यो जगदीशो गदाधरः।
गोकुलो भरतो मिश्रः कृष्णमिश्रधुरन्धरः॥ ९७॥
श्रीभण्डारकरोपाह्वो रामकृष्णो महामतिः।
भाषातत्त्वस्य विज्ञेषु साम्प्रतिकेषु संश्रुतः॥ ९८॥

रामाज्ञापण्डितो विद्वान् शब्ददर्शनपीठकः।
रघुनाथश्च शर्माऽसौ अम्बाकर्त्रीविधायकः॥ ९९॥
प्रेरको विदुषां विद्वान् सुब्रह्मण्यम अय्यरः।
सूर्यनारायणो गोपीनाथो गिरिधरस्तथा॥ १००॥

लेखनेऽध्यापने ख्यातः सभापतिर्महाशयः।
श्रीकालिकाप्रसादश्च शुक्ल आगमशोधकः॥ १०१॥

शब्दार्थमर्मविच्चारु चारुदेवो महामतिः।
तदात्मजश्च विख्यातः शास्त्री सत्यव्रतः सुधीः॥ १०२॥
श्रीबलदेवसिंहोऽसौ भाषिकतत्त्वपण्डितः।
ज्येष्ठः श्रेष्ठश्च सम्मान्यः सतीर्थ्यो मम विश्रुतः॥ १०३॥
कालेजे खुरजास्थे हि श्रीराधाकृष्णसंस्कृते।
आचार्यो हरदत्तश्च शाब्दिकः कीर्तिवैभवः॥ १०४॥

नरदेवोऽद्य ग्रथ्नाति शास्त्रार्थमर्मसम्मतम् ।
ग्रन्थे शब्दार्थसम्बन्धसिद्धान्तं पाणिनीयकम् ॥ १०५ ॥
स्नातकाः खुरजापीठे विद्यावैभवभूषिते ।
जाताः ख्याताश्च विद्यायाः क्षेत्रेषु बहवस्तथा ॥ १०६ ॥
कुबेरदत्त आचार्यो वैयाकरणकेसरी ।
वेदवेदाङ्गमर्मज्ञो बहुज्ञः शिष्यवत्सलः ॥ १०७ ॥
कुबेरदत्तशिष्येषु ख्यातं शिष्यचतुष्टयम् ।
वलदेवो हरदत्तश्च नरदेवो मनोहरः ॥ १०८ ॥
समन्तेवासिनोऽनेके कुबेरदत्तशास्त्रिणाम् ।
वैदुष्येण च शोभन्ते पाणिनीयधुरन्धराः ॥ १०९ ॥
ग्रन्थं शब्दार्थसम्बन्धसिद्धान्तं पाणिनीयकम् ।
विवृण्वता मया नूनं नरदेवेन शास्त्रिणा ॥ ११० ॥
आचार्याणां ख्यातवृत्तानां सम्प्रदायस्य पाणिनेः ।
वर्णिता च मुदा ह्यत्र पाणिनीयपरम्परा ॥ १११ ॥
अन्ये साम्प्रतिका विज्ञा अनेके पाणिनीयकाः ।
सादरं संस्मृता ग्रन्थेऽन्यत्रात्रैव मया ध्रुवम् ॥ ११२ ॥
विद्वांसश्च विशेषज्ञा नीरक्षीरविवेकिनः ।
कृतेश्च कृतिकारस्य आश्रयाः प्राणदायिनः ॥ ११३ ॥

## द्वितीयपरिशिष्टम्

# ग्रन्थकृता संस्मृताः

### पाणिनीये संस्कृतायां वाचि च कृतश्रमाः पाश्चात्याः विद्वांसः

भूमण्डले हि विद्यायाः क्षेत्रं सार्वकालिकम् ।
नैव क्षेत्रस्य कालस्य कालुष्यं तत्र वर्तते ॥ १ ॥
ज्ञानं ज्ञाता च ज्ञेयञ्च लोके सर्वत्र सर्वदा ।
कालिको दैशिको भेदो नात्र विज्ञसमादृतः ॥ २ ॥
पौर्व-पाश्चात्यनिर्देशः विदुषां क्षेत्रबोधकः ।
सादरं विहितः शास्त्रे नान्यथाऽत्र च गृह्यताम् ॥ ३ ॥
विद्यया विनयः प्राप्तः, पात्रता विनयागता ।
पात्रता नाम वैदुष्यं, वैदुष्ये नैव विभ्रमः ॥ ४ ॥
पक्षपातो न वैदुष्ये, वैदुष्येऽन्योन्यसमादरः ।
ज्ञानागमे न वा दम्भः, सत्यान्वेषणतत्परे ॥ ५ ॥
संस्कृताः संस्कृतात्मानो विद्वान्सः संस्कृताश्रिताः ।
पाश्चात्या गतविद्वेषाः सततं ज्ञानसाधकाः ॥ ६ ॥
आप्ता ज्ञानैकधर्माणो विश्वकल्याणकारकाः ।
विज्ञाः सत्यानुसन्धाने भवन्ति शुद्धदृष्टयः ॥ ७ ॥
यूनानप्रभवो विद्वान् होमरस्तत्र विश्रुतः ।
दैवी वाग् वचसां मूलमित्यसौ मनुते सदा ॥ ८ ॥
योरोपे सुकरातोऽसौ ग्रीकीयो वाग्विदां वरः ।
प्लेटो च सुकरातस्य शिष्यो घोषविवर्णकः ॥ ९ ॥
अरस्तुश्च सुविख्यातः सिकन्दरगुरुः श्रुतः ।
शास्त्रे च व्यवहारे च भाषां पर्यभाषत ॥ १० ॥
यूनाने थ्रैक्सनामासीद् लौकिकः शाब्दिको मतः ।
खीष्टाब्दे प्रथमे नष्टा तत्र व्याकृतिपद्धतिः ॥ ११ ॥
महाभारतयुद्धाच्च पश्चाद्धि विश्वबान्धवाः ।
विस्मृता वै मिथो नूनं योजकसूत्रभावना ॥ १२ ॥
मूलभाषावियुक्तास्ते, जाताः प्राकृतभाषिणः ।
अक्तृत्वदुर्बला लोका विकलाः साधुभाषणे ॥ १३ ॥

मूलवाचा च सादृश्यं तथापि बहुलं ततः।
अनुमितादिभाषा सा वैदिकी संस्कृता मता ॥ १४ ॥
संस्कृतसदृशी भाषा उच्चजर्मनभूतले।
निम्नभागेऽपि जर्मन्या आङ्ग्ली संस्कृतमूलिका ॥ १५ ॥
ग्रीकलातिनगाथिक्यो लिथ्वानीया रसातले।
दृश्यन्ते च भृशं लोके नूनं संस्कृतसम्भवाः ॥ १६ ॥
नानायोरोपदेशीया भाषाः संस्कृतनिःसृताः।
भारोपीयासु भाषासु साम्यं संस्कृतया सह ॥ १७ ॥
दृष्ट्वाऽऽलोड्य च रूपाणि विज्ञैरेतद्विनिश्चितम्।
संस्कृतज्ञानयोगेन भाषाणां तत्त्ववेत्तृभिः ॥ १८ ॥
संस्कृतज्ञैश्च पाश्चात्त्यैः श्रमेण महता नवम्।
पाणिनीयानुगं शास्त्रं भाषाविज्ञानमाश्रितम् ॥ १९ ॥
कथञ्चिदपि नाभूत् तत् सम्भवं वाग्विवेचनम्।
योरोपवचसां नूनं संस्कृतज्ञानमन्तरा ॥ २० ॥
पाणिनीयप्रबोधेन विश्वभाषाविलोडनात्।
तुलनात्मकवाक्शास्त्रं विज्ञैराविष्कृतं मुदा ॥ २१ ॥
अष्टादशशताब्दात् प्राक् ख्रीष्टाब्दान्नैव कश्चन।
व्याचष्ट तथ्यमेतद्धि सार्वभौमं कदाचन ॥ २२ ॥
श्रीविलियमजोन्सो हि न्यायाधीशोत्तमो मतः।
राष्ट्रे भारते ख्याते ब्रिटिश-शासनावृते ॥ २३ ॥
योरोपवाक्षु वै साम्यं दृष्टवान् संस्कृतेन सह।
अधीत्य संस्कृतां भाषां संस्कृतात्मा बुधोत्तमः ॥ २४ ॥
नूनं संस्कृतवैशिष्ट्यं जोन्सेन सम्प्रसारितम्।
विशिष्टैर्भाषणैर्नित्यं शाकुन्तलमनूद्य च ॥ २५ ॥
निरस्ता भाषिकी भ्रान्तिः ऐतिह्यञ्चापि सूत्रितम्।
विधिशास्त्रे सुविख्याता अनूदिता मनुस्मृतिः ॥ २६ ॥
हेनरीटामसः कोलब्रुकः जोन्सानुयोगिकः।
पाण्डुलिपीन् च सङ्गृह्य संस्कृतवाङ्मयस्य हि ॥ २७ ॥
अध्ययनस्य शोधस्य संस्कृतस्य मुहुर्मुहुः।
विश्वे उद्घाटितः पन्थाः विदुषां लक्ष्यसिद्धये ॥ २८ ॥
आङ्गलाः फ्रान्सजा विज्ञाः शर्मण्या रूसदेशजाः।
ऋचा अमेरिकीयाश्च स्वीडीया डेनियास्तथा ॥ २९ ॥

भूतले विश्वविद्वान्सः संस्कृतान्वेषणे रताः ।
तुलनात्मकवाक्शास्त्रमाविष्कृत्य सुनिश्चितम् ॥ ३० ॥
आदिवाग् विश्वभाषाणां नूनं वदिकसंस्कृता ।
लौकिकी संस्कृता त्वेषा सहजा साधुसम्मता ॥ ३१ ॥
आत्मश्लाघारता नित्यं महामोहान्धजीविनः ।
नूनं पाश्चात्यविद्वान्सः जागृता ज्ञानवैभवात् ॥ ३२ ॥
संस्कृता वाक्च साहित्यं सूर्यः ज्ञानस्य उद्गतः ।
विमुग्धाश्चकिता जाता दृष्ट्वा संस्कृतवैभवम् ॥ ३३ ॥
संस्कृतान्वेषणमारब्धं हैमिल्टनेन धीमता ।
श्रीश्लेगलकविः शिष्यः तस्य कीर्तिविधायकः ॥ ३४ ॥
भारतीया हि भाषा वै प्रज्ञा चापि वर्णिता ।
विधिशास्त्रे स्वके नूनं विदुषा श्लेगनेन सा ॥ ३५ ॥
चेजीशिष्येषु बौपोऽभूत्, पाणिनीयार्थबोधकः ।
पाश्चात्त्ये जगति ख्यातः भाषाशास्त्रपितामहः ॥ ३६ ॥
वैदिकीं लौकिकीं वाचं संस्कृतां समवेक्ष्य च ।
योरोपीयाश्च भाषा वै ग्रीकादीः सुविलोड्य च ॥ ३७ ॥
संस्कृतां सर्वभाषाणां मूलामाचष्ट सादरम् ।
रक्षिका मूलभाषाया वेत्त्यप्यसौ उवाच च ॥ ३८ ॥
जार्मण्यः फ्रान्त्सबोपाख्यः विश्वभाषाविमर्शकः ।
नूनं वाक्तत्त्वमर्मज्ञः पाणिनिश्रममूलवित् ॥ ३९ ॥
श्रीहुम्बोल्टश्च रूकर्टः भाषातत्त्वज्ञ उच्यते ।
रोजेन-बर्नफौ रॉथः वैदिको मोक्षमूलरः ॥ ४० ॥
उपनिषत्सु संमुग्धौ शापेन्हावरशीलरौ ।
काण्टशेलिङ्गविद्वान्सौ श्रद्दधानौ च संस्कृते ॥ ४१ ॥
ग्रासमानो हि वै विद्वान् विलसनश्च वैदिकः ।
गोल्डनरपिशेलौ हि ऐलफ्रेड-लुडाविगौ ॥ ४२ ॥
बोथलिङ्करुडोल्फौ हि कोशकारौ च सम्मतौ ।
लौकिका बोथलिङ्केन शब्दा रॉथेन वैदिकाः ॥ ४३ ॥
संगृहीता यथाशास्त्रं कोशेऽस्मिन् सप्तखण्डके ।
समाहृतः समाम्नायः महति विश्वविश्रुते ॥ ४४ ॥
ओल्डेनबेर्गहेमंन्नो लासेनश्चैव विश्रुतः ।
संस्कृतवाङ्मयालीनः ऐतिह्यं समुपागमत् ॥ ४५ ॥

थियोडोराफरेख्तौ च बेबरकीथ-जूलिशाः ।
संस्कृतैतिह्यशास्त्रस्य मर्मज्ञाश्च बहुश्रुताः ॥ ४६ ॥
वेदव्याकरणं कृत्वा वैदिकीञ्च पुराकथाम् ।
लोकख्यातिं समालेभे एन्थोनीमैकडानलः ॥ ४७ ॥
वाकरनेगलः कालब्रुगमाञ्च धुरन्धरः ।
तुलनात्मकसंदृष्टया मतो व्याकृतिलेखकः ॥ ४८ ॥
वाकरनैगलो ग्रन्थं व्याकृतिसप्तभागकम् ।
जर्मण्याञ्च चकारासौ संस्कृतशिक्षणप्रदम् ॥ ४९ ॥
जर्मण्यामेव वै वाचि कालब्रुग्मानपण्डितः ।
शोभनं कृतवान् तत्र व्याकरणं बृहल्लघु ॥ ५० ॥
वाकरनेगलो ब्रुग्मान् भृशं लोके समादृतः ।
कालब्रुग्मानविज्ञस्य बृहदाङ्ग्ल्यामनूदितम् ॥ ५१ ॥
मारिषब्लूमफील्डश्च पदानुक्रमलेखकः ।
संस्कृतज्ञः कृतज्ञश्च पाणिनीयें कृतश्रमः ॥ ५२ ॥
ब्लूमफील्डश्च मेधावी पाणिनीयें कृतश्रमः ।
भाषाश्च ग्रथमानोऽसौ भाषाः पर्यवर्णयत् ॥ ५३ ॥
आश्रित्य पाणिनिं विज्ञो वान्द्रियैजश्च शब्दवित् ।
भाषाविज्ञानमारेभे संस्कृतवाग्विदोहनात् ॥ ५४ ॥
हौकेण्ट-ह्विटनी-फ्लीटाः कावेलवेनिश-स्मिथाः ।
फर्गुशन्-कीलहार्नौ च ग्रीयर्सन-कनिङ्घमौ ॥ ५५ ॥
गोल्डस्टूकरथीबौ च विण्टरनिट्जबुलरौ ।
शब्दवेत्ता हि याकोबी पार्जीटरः पुराणवित् ॥ ५६ ॥
सपीरशिष्य एमेन्युः बरो रैनी च हैरिशः ।
प्रिंसपः प्राच्यवित् ख्यातः शिलालेखप्रवाचकः ॥ ५७ ॥
उक्ताश्चैव ह्यनुक्ताश्च पाश्चात्या विबुधो मताः ।
श्रद्दधाना अधीयानाः संस्कृतायां सदा भुवि ॥ ५८ ॥
योरोपे पाणिनीयस्य सिद्धो यः पठनक्रमः ।
संस्कृतायाश्च भाषायाः शोधक्रमः प्रवर्तितः ॥ ५९ ॥
जेस्पर्सन्-श्रोडरौ वार्रोः स्टायिन्थाल श्लायिख्रस्तथा ।
नारीन इति विख्याताः केचित् पाश्चात्यशाब्दिकाः ॥ ६० ॥
पाश्चात्यानाञ्च विज्ञानां वैशिष्ट्यं समवेक्ष्य च ।
वर्णितो नरदेवेन शास्त्रिणा संस्कृतात्मना ॥ ६१ ॥

## तृतीयपरिशिष्टम्

# ग्रन्थकृता परिचिताः साम्प्रतिका विद्वांसः

सादरं परिगण्यन्ते साम्प्रतिका बुधोत्तमाः ।
आर्षविद्याप्रचाराय निष्ठया च धृतव्रताः ॥ १ ॥
येषां वैदुष्यसारेण तपसोत्सर्गभावतः ।
संस्कृता जीविता भाषा सभ्यता संस्कृतिस्तथा ॥ २ ॥
संस्कृतिः सभ्यता भाषा सर्वदा संस्कृताश्रिता ।
जायतां गौरवायेयं सततं विश्वश्रेयसे ॥ ३ ॥
ब्रह्मदत्तश्च जिज्ञासुः मीमांसकयुधिष्ठिरः ।
ब्रह्मानन्दध्रुवानन्दो विश्वेश्वरसुभद्रझौ ॥ ४ ॥
करपात्री च वै स्वामी ओमानन्दसरस्वती ।
स्वामी सत्यप्रकाशश्च विद्यानन्ददिगम्बरः ॥ ५ ॥
कवयित्री महादेवी विदुषी कपिला तथा ।
सुनयना च वै देवी मम वामाङ्गिनी मता ॥ ६ ॥
प्रज्ञा वेदकुमारी च बियार्दो विदुषी मता ।
लता वै गायिका मेघा नृत्याङ्गना च यामिनी ॥ ७ ॥
भूपनारायणो विज्ञः श्रीराजेश्वरद्राविडः ।
मुरलीधरभूपेन्द्रपतित्रिपाठिनौ मतौ ॥ ८ ॥
श्रीकालिकाप्रसादश्च कुबेरदत्तकौशिकः ।
पञ्चानन्दः सुधीर्विद्वान् वैदिको हर्षितात्मजः ॥ ९ ॥
उदयवीरशास्त्री च श्रीबलदेवसिंहकः ।
देवीदत्तश्च शर्मा वै भवानीलालभारती ॥ १० ॥
मधुसूदनझाविज्ञो वेदविज्ञानशोधकः ।
रामशङ्करवागीशौ विशुद्धानन्द-वामनौ ॥ ११ ॥
सिद्धेश्वरश्च धीरेन्द्रो वर्मा भाषिकविन्मतः ।
सुकथनकरो विष्णुः मायिनकरदाण्डेकरौ ॥ १२ ॥
विद्यानिवासमिश्रो हि गौरीनाथशास्त्रिणः ।
श्रीसुनीतिचटर्जी च क्षेत्रेशो राघवन् तथा ॥ १३ ॥

द्विजेन्द्रनाथशास्त्री वै खिस्ते निर्गुणशास्त्रिणौ ।
पट्टाभिरामबद्रीनाथौ मालवीयो महामनाः ॥ १४ ॥
श्रीरामकरणः शर्मा कपिलदेवशास्त्रिणः ।
रामदेवत्रिपाठी च नेनेदर्शनकेशरी ॥ १५ ॥
लोकेशरामगोपालौ विजयपालवामनौ ।
गिरिधरश्चतुर्वेदो माचवेऽस्ति प्रभाकरः ॥ १६ ॥
माधवश्चामरः स्वामी वेदानन्दसरस्वती ।
ब्रह्ममुनिश्च संन्यासी काशीनाथस्त्र्यम्बकः ॥ १७ ॥
अमरादित्यनाथौ च गङ्गानाथतनूभुवौ ।
मङ्गलदेव - धर्मेन्द्र - सूर्यकान्ताः मनीषिणः ॥ १८ ॥
सुमनाः क्षेमचन्द्रोऽसौ दिवङ्गतसुसेवकः ।
मुनिर्गङ्गेश्वरानन्दो रघुवीरश्च कोशकृत् ॥ १९ ॥
गुरुप्रसादशास्त्री च नित्यानन्दश्च पार्वतः ।
सत्यस्वरूपछज्जूरामौ श्रीरामचन्द्रभारती ॥ २० ॥
अन्ये चाधुनिका विज्ञा अनेके पाणिनीयकाः ।
सादरं संस्मृता ह्यत्र ग्रन्थेऽन्यत्र दयालवः ॥ २१ ॥
सातवलेकरो विद्वान् भगवद्दत्तो महामतिः ।
विश्वबन्धुश्च मेधावी चारुदेवः सुशाब्दिकः ॥ २२ ॥
अग्रवालो बुधो वासुदेवशरणनामकः ।
काव्यमर्मं विजानाति पाणिनीयञ्च भारतम् ॥ २३ ॥
रामनाथश्च वै योगी संस्कृतवाक्सुसेवकः ।
भोलानाथोऽभिमन्युश्च मिश्रो हि रामसागरः ॥ २४ ॥
शास्त्री श्रीविश्वदेवो मानसिंह ईश्वरस्तथा ।
मिश्रः श्रीहर्षनाथो वै मण्डनो मोदतां भुवि ॥ २५ ॥
उक्तानुक्ताश्च विद्वांसः सम्मान्याः सादरं हि ते ।
संस्कृतं पाणिनीयञ्च सेवमानाः सदा भुवि ॥ २६ ॥
ह्येतं शब्दार्थसम्बन्धसिद्धान्तं पाणिनीयकम् ।
ग्रथमानेन विज्ञानां प्रीतये महता मुदा ॥ २७ ॥
साम्प्रतं भारतीयानां विदुषाञ्च विवर्णना ।
वर्णिता नरदेवेन शास्त्रिणा संस्कृतात्मना ॥ २८ ॥
सम्पादकेन पत्रस्य संस्कृतमासिकस्य च ।
पत्रञ्च मासिकं तत् स्यान्नः संस्कृतप्रचारकम् ॥ २९ ॥

चतुर्थपरिशिष्टम्

## वंशानुकीर्तनं विद्यापरम्परा च

भूमण्डले हि विख्याते आर्यावर्ते च भारते।
यत्रासीत् संस्कृता भाषा जनभाषा कदाचन॥ १॥
मुजफ्फरपुरे ख्याते विहारप्रान्तवर्तिनि।
ख्यातो हर्षितशर्मा सरैयाग्रामविश्रुते॥ २॥
सरैयाभिजनो ग्रामो वायानदीतटे स्थितः।
वायालघुनदी दृष्टा नारायण्या विनिःसृता॥ ३॥
सरैया विश्रुतः ग्रामो वायोत्तरतटे स्थितः।
मिथिलापश्चिमे दृष्टो वैशाल्या उत्तरे तथा॥ ४॥
चम्पारण्याच्च पूर्वस्यां राजमार्गे प्रतिष्ठितः।
कृषिवैभवसम्पन्नो विपुलोद्योगमण्डितः॥ ५॥
वैशाल्युत्खनने ख्यातः पुरातत्त्वज्ञहर्षितः।
हर्षितस्यात्मजो विद्वान् पञ्चानन्दो महामतिः॥ ६॥
ग्रामीणश्च स ग्रामात्मा ग्रामीणोत्थानकारकः।
लब्ध-स्वाध्यायसन्दोहः तपस्वी साधनारतः॥ ७॥
राष्ट्रस्वातन्त्र्यसङ्ग्रामेऽर्पितसर्वस्वनिःस्वकः।
'भारतं त्यजताङ्ग्ला वै' आन्दोलने च सक्रियः॥ ८॥
स्वतन्त्रे भारते जाते शासनेन ह्युपेक्षितः।
जनैः समर्चितो नित्यं राष्ट्रात्मा राष्ट्रधर्मकः॥ ९॥
मनस्वी लोकमर्यादो लोककल्याणतत्परः।
लोकोद्धाररतो नित्यं दीनोऽप्यदीनभावनः॥ १०॥
ग्रामात्स कलिकातायां वाराणस्यां तथैव च।
भूमिगतश्च निर्दिष्टः सक्रियः कर्मठः सदा॥ ११॥
समर्च्य भारतं शिष्टो मनस्वी मानवैभवः।
कातरो नाभवत्क्वापि क्षुद्रान् स्वार्थसाधकान्॥ १२॥
स्वातन्त्र्यसैनिको हन्त! पीडितो वहुताडितः।
स्वतन्त्रे शासनारूढैः पारतन्त्र्यसहायकैः॥ १३॥

ग्राम्योऽप्यग्राम्य एवाऽसौ धर्मात्मा लोकपूजितः ।
वैदिको वेदवागात्मा पञ्चानन्दो महायशाः ॥ १४ ॥
दुर्बल-दलितवर्गाणां पञ्चानन्दः सहायकः ।
शिक्षया वृत्तिदानेन रक्षणेन च सर्वदा ॥ १५ ॥
पत्नी सरस्वती देवी पञ्चानन्दस्य शर्मणः ।
अन्वर्थनाम्न एवासन् भगिन्यः पञ्च भ्रातरः ॥ १६ ॥
पञ्चानन्दश्च वै ज्येष्ठो द्वितीयो रामलक्ष्मणः ।
श्रीरामवरणश्चान्यौ शिववरण-नारदौ ॥ १७ ॥
पञ्चानन्दस्य चत्वारः पुत्रा विश्रुतकीर्तयः ।
ज्येष्ठो नारायणः शर्मा नरदेवो द्वितीयकः ॥ १८ ॥
निरञ्जनस्तृतीयश्चेश्वरदत्तः चतुर्थकः ।
डाकपालश्च वै ज्येष्ठो नरदेवोऽस्ति शाब्दिकः ॥ १९ ॥
भूमिसर्वेक्षकः ख्यातः कृषकश्च निरञ्जनः ।
ईश्वरो राजधान्यां च देहल्यां दूरभाषकः ॥ २० ॥
भूत-द्रव्य-ग्रहावन्यां द्वादश्यां चैत्रशुक्लके ।
वैक्रमाब्दे दिने चन्द्रे नरदेवो ह्यजायत ॥ २१ ॥
सुपूर्वाफाल्गुनीभे वै बुद्धियोगे च बालवे ।
मीनार्के रात्रिपूर्वार्द्धे राहौ लग्ने ह्यवातरत् ॥ २२ ॥
खीष्टाब्दे भारते ख्याते ख-युग-ग्रहभूयुते ।
जनवरीद्वितीये च दिनाङ्के चन्द्रवासरे ॥ २३ ॥
चैत्रशुक्ले च द्वादश्याम् ऊनविंशशतात्मके ।
वैक्रमाब्दे च वै पञ्चनवतौ अधिके ततः ॥ २४ ॥
नरदेवो जनिं लेभे शुभे च चन्द्रवासरे ।
षष्टयधिके शके राहौ अष्टादशशतात्मके ॥ २५ ॥
स्वार्जितस्वत्वसारेण स्वयञ्च स्थापितो ध्रुवम् ।
अन्यशास्त्राण्यधीत्यापि पाणिनीये कृतश्रमः ॥ २६ ॥
सरैयाग्रामजन्मा हि क्रममाणः शनैः शनैः ।
अखिलभारतीयोऽसौ नरदेवोऽस्ति साम्प्रतम् ॥ २७ ॥
वर्णभेदांश्च सङ्क्रम्य उल्लङ्घ्य चावरोधकान् ।
संस्कृतजगतः क्षुद्रान् भारतस्य विनाशकान् ॥ २८ ॥
दौर्भाग्यं संस्कृतस्येदं भारतस्यापि वै ध्रुवम् ।
वैदुष्येषु च कालुष्यं विद्याक्षेत्रेऽपि [illegible] ॥ २९ ॥

जातिभेदोऽस्ति प्राप्तस्य भेदः सर्वत्र दृश्यते।
संस्कृतात्मा न वा सर्वो भारतीयोऽद्य राष्ट्रियः॥ ३०॥
भावैक्यं क्षीयते राष्ट्रे भारते संस्कृतालये।
तदर्थं यतनीयं हि शासकैः शासितैस्तथा॥ ३१॥
दौर्भाग्यं भारतस्येदं दृश्यतां हन्त ! दृश्यताम्।
वचसः संस्कृतस्यादो निराकृत्यानुगृह्यताम्॥ ३२॥
पत्नी सुनयनादेवी नरदेवस्य शास्त्रिणः।
त्रयः पुत्राश्च कन्यैका सन्ततयः सुखप्रदाः॥ ३३॥
प्रभातश्च प्रदीपश्च प्रशान्तः क्रमशो मतः।
पुत्री मञ्जुला कन्या आचार्याभिश्च मानिता॥ ३४॥
वंशानुकीर्तनन्त्वेतद् नरदेवस्य शास्त्रिणः।
ग्रन्थकर्तुः प्रसादाय पित्रोः पूज्यपादयोः॥ ३५॥
उपनयन-वेदारम्भौ गृहे जातौ यथाविधि।
सरैयाग्रामशालायां शिक्षा प्राथमिकी ततः॥ ३६॥
सर्वदानन्दविद्यापीठे, साध्वाश्रमे च विश्रुते।
स्थिते हरदुवागञ्जे गुरुकुले च दीक्षितः॥ ३७॥
कालीनदीतटे रम्ये गुरुशिष्यसमाकुले।
कुलपतिश्च तत्रासीद् ध्रुवानन्दसरस्वती॥ ३८॥
आचार्यश्च महावीरो नर्मदेश्वरशुक्लकः।
साहित्यिकाश्च विद्वांसः श्यामसुन्दरशास्त्रिणः॥ ३९॥
श्रीराधाकृष्णकालेजे खुरजास्थे च संस्कृते।
गुरोः कुबेरदत्तस्य अन्तेवासी च विश्रुतः॥ ४०॥
व्याकरणे च वै न्याये वेदान्ते साख्यदर्शने।
वेदे च काव्यशास्त्रे हि कृतभूरिपरिश्रमः॥ ४१॥
शास्त्रार्थे काव्यबन्धे च भाषणे लेखने तथा।
नरदेवः प्रथमः ख्यातः विश्वविद्यालयेषु वै॥ ४२॥
वैयाकरण आचार्योऽध्यापनकीर्तिवैभवः।
शिष्यः कुबेरदत्तोऽसौ परमानन्दशास्त्रिणः॥ ४३॥
पाणिनीयस्य तन्त्रस्य पारदृश्वा विचक्षणः।
कुबेरदत्तशास्त्री वै नूनं भाष्यार्थमर्मवित्॥ ४४॥
शास्त्रार्थे लब्धवैदुष्यः सततं शिष्यवत्सलः।
संस्थानेषु समारोहेष्वध्यक्षः परमादृतः॥ ४५॥

कुबेरदत्त - शास्त्री हि प्राचार्यः शिष्यवैभवः ।
खुरजानाम्नि वै धाम्नि विद्यापीठं समाश्रितः ॥४६॥
श्रीकालिकाप्रसादश्च शुक्ल। वैदुष्यमण्डितः ।
परमकृपयाऽस्माकं शोधमार्गनिदेशकः ॥४७॥

श्रीशुक्लः पाणिनीयेऽस्मिन् शास्त्रे च बहुग्रन्थकृत् ।
प्राचार्यः पाणिनीयस्य विभागे विश्वविश्रुते ॥४८॥
विश्वविद्यालये ख्याते वाराणसेयसंस्कृते ।
विज्ञसभापतेः शिष्यः पाणिनीयार्थसंविदः ॥४९॥

परमानन्दशास्त्री च उपाध्यायः सभापतिः ।
शास्त्रिणो नरदेवस्य सम्पूज्यश्च गुरोर्गुरुः ॥५०॥
श्रीब्रह्मानन्द शुक्लो वै हरदत्तश्च शब्दवित् ।
इन्द्रदत्तशिवानन्दौ हरिश्चन्द्रोऽपि शास्त्रवित् ॥५१॥

ज्योतिर्विदच्युतानन्दो विशुद्धानन्दकोविदः ।
खुरजास्थाश्च विद्वान्सः सर्वशास्त्रविचक्षणाः ॥५२॥
खुरंजा चापरा काशी विद्यावैभवशालिनी ।
खुरजानगरी रम्या महामार्गे प्रतिष्ठिता ॥५३॥

खुरजार्यसमाजेन नरदेवोऽतिमानितः ।
विद्वत्परिषदा तत्र नित्यं शास्त्रार्थयोजने ॥५४॥
विद्योद्योगालयाकीर्णा सर्वविद्वत्प्रतिष्ठिता ।
समितिशोभिता भव्या हृद्या हर्म्यमण्डिता ॥५५॥

ततो वाराणसीं गत्वा विद्याव्यसनतत्परः ।
नरदेवः कृतोद्योगः सर्वशास्त्रेषु पारगः ॥५६॥
शास्त्रश्रमं समाधाय वाराणसेयसंस्कृते ।
विश्वविद्यालये आचार्यो विद्यावारिधिः मतः ॥५७॥

कुलाधिपतिना तत्र वैदुष्यपोषकेण च ।
विश्वनाथेन दासेन नरदेवः प्रमाणितः ॥५८॥
दीक्षान्ते च समारोहे राष्ट्रपतिविभूषिते ।
विशिष्टः सर्वशास्त्रेषु स्वर्णपदकपूजितः ॥५९॥

श्रीराधाकृष्णनायङ्गारानन्तशयनम्युते ।
सुविद्वन्मण्डलीजुष्टे भव्ये चैवातिहासिके ॥६०॥
श्रीसुरतित्रिपाठी वै नारायणमणिः स्तुतः ।
सुरेन्द्रनाथशास्त्री च गौरीनाथशास्त्रिणः ॥६१॥

अस्माकं समये ख्याताः कुलपतय आस्थिताः।
शास्त्रे च शासने ख्याताः प्रबन्धे कुशलाः स्मृताः ॥६२॥
प्रतिकुलपतिस्तत्र काशीराजो महाद्युतिः।
श्रीमान् विभूतिनारायणसिंहो हि सताम्मतः ॥६३॥
क्षेत्रेशो बलदेवश्च उपाध्यायो महामतिः।
विश्वविद्यालये ख्यातः शोधपीठनिदेशकः ॥६४॥
श्रीमुरलीधरो मिश्रः मोकाटिः करुणापतिः।
पट्टाभिराम - भूपेन्द्रपतित्रिपाठिनौ मतौ ॥६५॥
श्रीकालिकाप्रसादश्च शुक्लो वाग्विदां वरः।
शाब्दिकदेवदत्तो वै बद्रीनाथश्च न्यायवित् ॥६६॥
श्रीरघुनाथशर्मा वै रामप्रसाद - शास्त्रिणः।
कालीप्रसाद - आचार्यः श्रीराजेश्वरशास्त्रिणः ॥६७॥
श्रीरेवतीप्रसादश्च दीपचन्द्रात्मजो मतः।
दुर्गाधरश्च तन्त्रज्ञो गोपीनाथो महामतिः ॥६८॥
भूपनारायणः शम्भुनाथो द्विजेन्द्रनिर्गुणः।
बटुकनाथखिष्टेः वै हर्षनाथश्च मिश्रकः ॥६९॥
हरिश्चन्द्रमणिः भट्टाचार्यः श्रीरामशङ्करः।
सत्यपालजगन्नाथौ श्रीजगदीशभिक्षवः ॥७०॥
उक्तानुक्ताश्च सम्मान्या यैर्मया चर्चितं भृशम्।
वाराणसेयविद्वांसो नरदेवेन शास्त्रिणा ॥७१॥
विद्वांसश्च वयस्याश्च विशिष्टाः सन्ति मामकाः।
संस्मृतिपथमायाता अनायासेन संस्मृताः ॥७२॥
एषाऽस्ति वर्णिताऽस्माकं नूनं विद्यापरम्परा।
गुरवश्च वयस्याश्च विद्वांसः तत्त्ववेदिनः ॥७३॥
विद्यावारिधिविज्ञोऽसौ गुरुवात्सल्यभूषितः।
पिपठीः नरदेवो हि शास्त्री च वाग्विदां मतः ॥७४॥
विश्वविद्यालये दिल्ल्यां शिक्षाशास्त्रप्रशिक्षितः।
संलग्नः शिक्षणे नित्यं विद्याव्यसनतत्परः ॥७५॥
आर्षे गुरुकुले ख्याते दिल्लीस्थे च टटेसरे।
महाविद्यालये ख्यातः प्राचार्यो बहुपूजितः ॥७६॥
रमेशनगरे मोतीनाथविद्यालयाश्रमे।
सुसंस्कृतविदां मान्यः शास्त्रज्ञानाञ्च भूरिशः ॥७७॥

संस्कृतस्य विशेषज्ञो नूनं सन्दर्भितो जनः ।
संस्थानेषु शिक्षाया निदेशालयमानितः ॥७८॥
नियन्ता शोधसंस्थाने सत्संस्कृतप्रचारके ।
संस्कृतशिक्षणमार्गस्य विकासस्य निदेशकः ॥७९॥
सार्वभौमस्य पत्रस्य संस्कृतमासिकस्य च ।
सम्पादकः सुविख्यातः संस्कृतसम्प्रचारकः ॥८०॥
संस्कृतमासिकं पत्रं प्राचीनं भव्यभावकम् ।
संस्कृतरक्षणे लग्नं तत् संस्कृतप्रचारकम् ॥८१॥

अष्टाध्याय्यां महाभाष्ये वाक्यपदीयग्रन्थके ।
वाग्विच्च लोकमर्मज्ञः कृतभूरिपरिश्रमः ॥८२॥
विश्वविद्यालये ख्याते शिमलास्थे हिमाचले ।
आचार्यः शब्दशास्त्रस्य बहुज्ञः शिष्यवैभवः ॥८३॥
भाषाविज्ञानवैशिष्ट्यं व्याकरणे च दर्शने ।
वैदुष्यं च सुविख्यातं नरदेवस्य शास्त्रिणः ॥८४॥
छात्रकालेऽपि वात्सल्याद् गुरूणां गौरवात्मनाम् ।
नियुक्तोऽध्यापने कार्ये व्याकरणे च दर्शने ॥८५॥

साध्वाश्रमे सदा रम्ये, खुरजाविज्ञपत्तने ।
सुविद्यावैभवायां वै वाराणस्यां तथैव च ॥८६॥
छात्रसङ्घस्य अध्यक्षः चिरं हि सचिवस्तथा ।
सदा सम्मानितो नेता छात्रैश्च छात्रसंसदि ॥८७॥

लिखनेऽध्यापने ज्ञाते नरदेवो हि शाब्दिकः ।
शास्त्री पिपठिषुः ख्यातो लोके च काव्यकर्मणि ॥८८॥
विश्वविद्यालये ख्याते वाराणसेयसंस्कृते ।
विशिष्टः सर्वशास्त्रेषु स्वर्णपदकपूजितः ॥८९॥
मेधावि-राष्ट्रसंवृत्त्या भारतशासनेन वै ।
छात्रकाले सदैवायं सम्मानितो भृशं तदा ॥९०॥
शिक्षणे सहयोगाद्धि वृत्त्या च भरणादपि ।
भारतशासनं नित्यमस्माकं प्रश्रयप्रदम् ॥९१॥
अथोत्तरप्रदेशस्य शासनेन पुरस्कृतः ।
योग्यताच्छात्रवृत्त्या वै वैदुष्यवर्धनाय च ॥९२॥
व्याख्याता खुरजास्थास्यां संसदि विदुषां सताम् ।
विशेषे समवाये च पाणिनिशब्ददर्शने ॥९३॥

शास्त्रार्थे लब्धवैदुष्यः प्राच्यविद्यासुसंसदि ।
वाराणस्यां तथाऽन्यत्र गोष्ठीषु विविधासु हि ॥ ९४॥
वैदिके शोधसंस्थाने विश्वबन्धुसुशासिते ।
होशियारपुरस्थे च व्याख्याता शब्ददर्शने ॥ ९५॥
विज्ञैः समादृतस्तत्र इन्द्रदत्तनियोजिते ।
शिष्टैः विद्वत्समारोहे विदुषामाश्रवो जनः ॥ ९६॥
वैदिकशोधसंस्थाने गाजियाबादसंस्थिते ।
व्याख्याता वेद-आध्यक्ष्ये उदयवीरशास्त्रिणाम् ॥ ९७॥
अमरस्वामिनस्तत्र विशुद्धानन्दस्वामिनः ।
परिव्राजो व्यराजन्त विद्यावैभवशालिनः ॥ ९८॥
सर्वदानन्दसंस्थाने हरदुवागञ्जसंस्थिते ।
वेदसम्मेलनाध्यक्षः साध्वाश्रमे सुविश्रुते ॥ ९९॥
शब्दपाथेयशास्त्रात्मा नरदेवो दिवानिशम् ।
मानामानौ परित्यज्य सेवते संस्कृतं भृशम् ॥१००॥
संस्कृतसम्प्रचाराय आजीवनमवेतनः ।
सम्पादकः सुविख्यातः संस्कृतमासिकस्य वै ॥१०१॥
प्रचारं कुरुते नित्यं विश्वे राष्ट्रे गृहे गृहे ।
संस्कृतस्य सदा पत्रं तत् संस्कृतप्रचारकम् ॥१०२॥
शतशो लेखका विज्ञाः लेखनाय प्रशिक्षिताः ।
सदाधुनिकसन्दर्भे विषये संस्कृते तथा ॥१०३॥
छात्रेषु जनसामान्ये संस्कृतं सम्प्रसारितम् ।
शास्त्रिणा नरदेवेन नेतृषु चाधिकारिषु ॥१०४॥
सार्वकालिकमाख्यातं संस्कृतं सर्वपार्षदम् ।
जीवनमूल्यकं विश्वे मानवताहिताय च ॥१०५॥
भारतं भ-रतं नैव नूनं संस्कृतं विना ।
सर्वत्र सर्वदा सर्वैः संस्कृतं परिरक्ष्यताम् ॥१०६॥
भारतपरिरक्षायै मानवताहिताय च ।
राष्ट्रभावैक्यलाभाय संस्कृतं परिरक्ष्यताम् ॥१०७॥
सर्ववाचामुपादानं संस्कृतं सर्वपार्षदम् ।
सर्वथा सर्वदा नूनं संस्कृतं परिरक्ष्यताम् ॥१०८॥
नित्यं सर्वत्र लोकेषु ऊर्ध्वबाहुः विरौति च ।
शास्त्री वै नरदेवोऽयं केवलं श्रुतिसम्बलः ॥१०९॥

लेखनैः भाषणैः वादैः जनेषु चाधिकारिषु ।
अध्यापनेन छात्रेषु यततेऽसौ दिवानिशम् ॥११०॥
पाणिनीयं विना नैव कथमपि हि सम्भवि ।
संस्कृतकार्यमेतद् वै पाणिनीये प्रवर्तताम् ॥१११॥
सर्वथा रक्षितं लोके संस्कृतं राष्ट्ररक्षकम् ।
पाणिनीयन्तु सर्वत्र संस्कृतरक्षकं मतम् ॥११२॥
पाणिनिः प्राणभूतोऽसौ भाषाशास्त्रेषु तत्त्ववित् ।
संस्कृतरक्षकायास्मै पाणिनये नमो नमः ॥११३॥
एतं शब्दार्थसम्बन्धसिद्धान्तं पाणिनीयकम् ।
ग्रथमातेन लोकेऽस्मिन् नूनं संस्कृतात्मना ॥११४॥
सरस्वतीप्रसूतेन पञ्चानन्दतनूभुवा ।
नरदेवेन वै गीतम् एतत् संस्कृतगौरवम् ॥११५॥

## पञ्चमपरिशिष्टम्

# आचार्यनामानुक्रमणिका

## षष्ठपरिशिष्टम

# विशिष्टपदानुक्रमणिका

□ □

# सहायक ग्रन्थ-सूची


| ग्रन्थ: | ग्रन्थकार: | प्रकाशनम् |
|---|---|---|
| १. अष्टाध्यायी | पाणिनि: | मद्रासे १९३७ |
| २. अष्टाध्यायीमहाभाष्यम् | पतञ्जलि: | गुरुकुलझज्झरे १९६२ |
| ३. अमरकोश: | अमरसिंह: | |
| ४. अथर्ववेदसंहिता | | मुरादाबादसंस्करणम् १९८८ वि० |
| ५. आपिशलिशिक्षासूत्रम् | आपिशलि: | भारतीय - प्राच्यविद्या-प्रतिष्ठानम् अजमेरे २०२४ वि० |
| ६. अभिज्ञानशाकुन्तलम् | कालिदास: | |
| ७. उत्तररामचरितम् | भवभूति: | |
| ८. उणादिसूत्रम् | पाणिनीयम् | मद्रास यूनिवर्सिटी १९५७ |
| ९. उद्द्योत: (महाभाष्य-प्रदीपटीका) | नागेश: | गुरुकुल-झज्झरे १९६२ |
| १०. ऋक्प्रातिशाख्यम् | शौनक: | संस्कृतसाहित्यपरिषत् कलकत्तास्था |
| ११. ऋक्संहिता (सायणभाष्य-युता) | | वैदिकसंशोधनमण्डलं पूनास्थम् १८६८ शक |
| १२. ऋक्तन्त्रव्याकरणम् | शाकटायन: | संस्कृत बुक डिपो, सैद-मीठा बाजार लाहौरे, १९३३ |
| १३. ऐतरेयारण्यकम् | | आनन्दाश्रममुद्रणालय पुण्यपत्तनम् १९४३ ई० |
| १४. ऐतरेयोपनिषत् | — | प्राच्यभारतीप्रकाशनम् १९६५ |
| १५. ऐतरेयब्राह्मणम् | — | राजवन्ती कलकत्ता १९५३ वि० |

| | | |
|---|---|---|
| १६. कौषीतकिब्राह्मणम् | — | (सरस्वतीभवन उपलभ्यम्) |
| १७. कात्यायनश्रौतसूत्रम् | — | अच्युतग्रन्थमाला काशी १९८७ |
| १८. काशिकावृत्तिः | जयादित्यः, वामनश्च | प्राच्यभारती प्रतिष्ठान-वाराणसी, |
| १९. कौटिल्यार्थशास्त्रम् | चाणक्यः | |
| २०. कारकचक्रम् | पुरुषोत्तमदेवः | नरेन्द्र रिसर्च म्युजियम राजशाही बंगाल १९४० |
| २१. खण्डनखाद्यम् | श्रीहर्षः | विश्वनाथ प्रेस बनारस, १९६८ |
| २२. गोपथब्राह्मणम् | — | एशियाटिक सोसायटी बंगाल १८७२ |
| २३. चरकसंहिता | पतञ्जलिः | चौ०खं०सी० बनारस, १९६२ |
| २४. छान्दोग्योपनिषत् | | प्राच्यभारती प्रकाशन १९६५ |
| २५. तत्त्वसङ्ग्रहः | शान्तरक्षितः | गायकवाड़ ओरियण्टल सीरिज बड़ौदा १९२६ |
| २६. तत्त्वमुक्तावली | — | रायल - एशियाटिक-सोसायटी कलकत्ता |
| २७. तत्त्वार्थसूत्रम् | उमास्वामी | |
| २८. तत्त्वार्थसूत्रवृत्तिः | श्रुतसागरसूरिः | भारतीयज्ञानमण्डल काशी प्रथमावृत्तिः १९४९ |
| २९. तत्त्वार्थश्लोकवार्त्तिकम् | विद्यानन्दिस्वामी | निर्णयसागर मुद्रणालय मुम्बई, १९१८ |
| ३०. त्रिकाण्डशेषः | पुरुषोत्तमदेवः | क्षेमराजकृष्णदास, बम्बई १८३७ शक |
| ३१. तैत्तिरीयोपनिषत् | — | प्राच्यभारतीयप्रकाशन १९६५ |
| ३२. तैत्तिरीयारण्यकम् | — | सरस्वतीभवन उपलभ्यम् |
| ३३. तैत्तिरीयप्रातिशाख्यम् | — | कलकत्ता १८७२ |
| ३४. तैत्तिरीयसंहिता | — | स्वाध्यायमण्डल पारडी नगर १९५७ |

| | | |
|---|---|---|
| ३५. दशपाद्युणादिवृत्तिः | — | सरस्वतीभवन उपलभ्या |
| ३६. नियमसारः | — | कुन्दकुन्दाचार्य । शोलापुर २०१६ |
| ३७. निघण्टुः | यास्कः | मनसुखराय मोर क्लाइ-बरो, कलकत्ता १९५२ ई० |
| ३८. निघण्टुनिर्वचनम् | देवराजयज्वा | |
| ३९. निरुक्तम् (सदुर्गम्) | यास्कः | |
| ४०. न्यायदर्शनम् | गौतमः | पशुपतिप्रेस कलकत्ता, तृतीय सं० १९१८ |
| ४१. भाषापरिच्छेदः | विश्वनाथः | निर्णयसागरप्रेस, मुम्बई १९१८ |
| ४२. न्यायमञ्जरी | जयन्तभट्टः | चौ०सं०सि० बनारस १९९२ |
| ४३. न्यासः (काशिकाटीका) | जिनेन्द्रबुद्धि-पादाचार्यः | प्राच्यभारती प्रतिष्ठान बनारस, १९६५ |
| ४४. पदमञ्जरी (काशिकाटीका) | हरदत्तः | प्राच्यभारती प्रतिष्ठान, बनारस |
| ४५. प्रक्रियाकौमुदी | रामानुजाचार्यः | राजकीय ग्रन्थमाला पूना १९३५ ई० |
| ४६. प्रौढमनोरमा | भट्टोजी दीक्षितः | मोतीलाल बनारसीदास, वाराणसी |
| ४७. परिभाषावृत्तिः | पुरुषोत्तमदेवः | वरेन्द्र रिसर्च म्युजियम राजशाही बंगाल १९४० |
| ४८. परिभाषावृत्तिः | सीरदेवः | छन्नुलाल प्रेस, बनारस १८८७ |
| ४९. परिभाषेन्दुशेखरः | नागेशः | |
| ५०. प्रपञ्चसारतन्त्रम् | शङ्कर आचार्य | संस्कृतप्रेस डिपाजिटरी भवन, कलकत्ता १९३५ |
| ५१. प्रदीपः (महाभाष्यटीका) | कैयटः | गुरुकुल झज्झर, १९६२ |
| ५२. पाणिनीयशिक्षा | | कलकत्ता यूनिवर्सिटी, १९३४ |
| ५३. पाणिनीयशिक्षासूत्रम् | | भारतीय प्राच्यविद्या प्रतिष्ठान अजमेर, २०२४ |
| ५४. पञ्चास्तिकायसङ्ग्रहः | कुन्दकुन्दाचार्यः | कुन्दकुन्दप्राकृतसङ्ग्रहे— सम्पा० श्री कैलासचन्द्र- |

| | | |
|---|---|---|
| | | शास्त्री, जैनसंस्कृति संरक्षक संघ, शोलापुर-२०१६ वि० |
| ५५. प्रत्यभिज्ञाहृदयम् | राजानकक्षेमराजाचार्यः | अड्यार लाइब्रेरी १९३८ |
| ५६. बृहदारण्यकोपनिषत् | | वीडनयन्त्रालय कलकत्ता १८७५ ई० |
| ५७. ब्रह्मबिन्दूपनिषत् | | संस्कृति संस्थान बरेली। |
| ५८. भाषावृत्तिः | पुरुषोत्तमदेवः | कलकत्ता संस्कृत कालेज १९१८ |
| ५९. घाट्टदीपिका | कुमारिलभट्टः | |
| ६०. महाभाष्यटीका | भर्तृहरिः | बनारस हिन्दू विश्वविद्यालय २०२१ वि० |
| ६१. महाभारतम् | व्यासः | गीता प्रेस, गोरखपुर |
| ६२. मीमांसादर्शनम् (शाबरभाष्ययुतम्) | जैमिनिः | विशपकालेजयन्त्रमुद्रितम् १९२५ |
| ६३. मीमांसाश्लोकवार्तिकम् | कुमारिलभट्टः | हरिदास गुप्त, काशी, १८९८ |
| ६४. मनुस्मृतिः | मनुः | मनसुखराय मोर कलकत्ता |
| ६५. यजुःसंहिता | | गोविन्दराम हासानन्द, नई सड़क, देहली |
| ६६. योगदर्शनम् | पतञ्जलिः | |
| ६७. याज्ञवल्क्यशिक्षा | | बनारस प्रिंटिंग प्रेस, १८८९ |
| ६८. वाजसनेयिप्रातिशाख्यम् | कात्यायनः | मद्रास यूनिवर्सिटी १९३४ |
| ६९. वैशेषिकदर्शनम् | कणादः | मिथिलाविद्यापीठ दरभङ्गा |
| ७०. वाक्यपदीयम् | भर्तृहरिः | स्नातकोत्तरानुसन्धानसंस्थान पूना १९६६ |
| ७१. वाक्यपदीयम् (सवृत्तिकम्) | | रामलाल कपूर ट्रस्ट, १९९१ वि० |
| ७२. वाक्यपदीयम् (सवृत्तिकम्) | | चौ०सं० सीरिज आफिस बनारस |

| | | |
|---|---|---|
| ७३. वाररुचसङ्ग्रहः | वररुचिः | |
| ७४. वेदान्तदर्शनम् | व्यासः | |
| ७५. वैयाकरणसिद्धान्तकौमुदी | भट्टोजिदीक्षितः | क्षेमराज श्रीकृष्णदास, बम्बई, १८४७ शक |
| ७६, वैयाकरणसिद्धान्तलघुमञ्जूषा | नागेशः | चौ०सं०सि० बनारस, १९१७ |
| ७७. वेदान्तसारः | सदानन्दः | |
| ७८. लाट्यायनश्रौतसूत्रम् | | वाल्मीकि यन्त्रालय, कलकत्ता १८७२ |
| ७९ स्फोटचन्द्रिका | कृष्णभट्टः | चौ०सं०सि०, बनारस, १९८५ |
| ८०. स्फोटवादः | नागेशः | अड्यार लाइब्रेरी, १९४९ |
| ८१. सारस्वतव्याकरणम् | अनुभूतिस्वरूपाचार्यः | चौ० सं० सी० बनारस, १९३५ |
| ८२. सत्यार्थप्रकाशः | स्वा० दयानन्दः | वैदिक यन्त्रालय, अजमेर |
| ८३. सिद्धान्तशिरोमणिः | भास्कराचार्यः | चौ०सं०सि०, आफिस बनारस १९८६ वि० |
| ८४. सांख्यदर्शनम् | महर्षिकपिलः | |
| ८५. साहित्यदर्पणम् | विश्वनाथः | |
| ८६. शिवपुराणम् | श्यामकाशीप्रेस मथुरा | |
| ८७. शब्दशक्तिप्रकाशिका | जगदीशतर्कालङ्कारः | चौ०सं०सि०, बनारस १९३४ |
| ८८. शिशुपालवधः | माघः | |
| ८९. श्वेताश्वतरोपनिषत् | | संस्कृति संस्थान बरेली |
| ९०. शतपथब्राह्मणम् | | अच्युत ग्रन्थमाला कार्यालय, काशी १९८४ वि० |
| ९१ शिवदृष्टिः | सोमानन्दनाथः | |
| ९२. क्षीरतरङ्गिणी | क्षीरस्वामी | रामलाल कपूर ट्रस्ट, अमृतसर, २०१४ वि० |
| ९३. शब्दकौस्तुभः | भट्टोजिदीक्षितः | चौ० सं० सीरिज आफिस बनारस, १९८५ |

| | | | |
|---|---|---|---|
| ९४. | तर्कभाषा निगमन | भोलानाथ राय अनु० उमा भार्गव | द अपर इण्डिया पब्लि- लखनऊ, १९५९ |
| ९५. | Deductive Logic | By Bholanath Ray | |
| ९६. | Philosophy of word and Meaning | By gauri Nath Shastri | Sanskrit College Calcutta |
| ९७. | An Introduction to the Newtonian Attraction | By Ramsey | University Press Cambridge १९४९ |




# संशुद्धिर्विधेया

(परिशुद्धमुद्रणार्थं सर्वथा सम्प्रयतितेऽपि मानवसम्भवदौर्बल्याद् मुद्रकप्रमादाच्च काश्चन मुद्रणाशुद्धयः सञ्जाता एव। काश्चिदधो निर्दिश्यन्ते। तदनुसारं संशोध्य पठनायानुग्रहीतुं विज्ञाः सादरं सम्प्रार्थ्यन्ते।)

| पृष्ठे/पङ्क्तौ | इतिस्थाने | इति पठितव्यम् |
|---|---|---|
| १। १ (पुरोवाक्) | प्रत्यायितुम् | प्रत्याययितुम् |
| १६।२० (प्रस्तावना) | यथैकानुश्रुतिः | यथैकानुश्रुति |
| २७।१६ | हार्दिकाभार | हार्दिकाभारं |
| २७। ६ | दुःखवगाहम् | दुरवगाहम् |
| २५।१३ | भाष्य | भाष्यम् |
| २८। २ | प्रायच्छन् | प्रायच्छद् |
| २९। ८ | विनिर्मिताः | विनिर्मितः |
| ४९। ६ | सङ्ग्रह | सङ्ग्रहः |
| ६२। १ | शब्दब्रह्मण | शब्दब्रह्मणः |
| २७३।२७ | सवषु | सर्वेषु |
| २७८। १ | सुरक्षाय | सुरक्षायै |
| १३। ९ (प्र०) | शब्दपद | शब्दपदं |
| १५। २ (प्र०) | मित्येन | नित्येन |
| १६। ४ (प्र०) | यथा भर्तृहरिः | यथाभर्तृहरि |
| १८।२५ (प्र०) | केवल | केवलम् |
| २१।२२ (प्र०) | षण चापि | षणञ्चापि |
| २२।१३ (प्र०) | व्याकरण | व्याकरणं |
| २४। ३ (प्र०) | एव | एवं |

□ □ □



ग्रन्थकाराः डा० नरदेवशास्त्रिणः

## ग्रन्थकारीयं सङ्क्षिप्तं व्यक्तित्ववृत्तम्

जन्मस्थानम्—ग्रामः-सरैयाबाजारः, 'पारू' इति उपडाकघरीयः, मुजफ्फरपुरमण्डलम्, (बिहारप्रदेशः) ।

१. सम्बद्धशिक्षासंस्थानानि —

—गुरुकुल-संस्कृतमहाविद्यालयः श्रीसर्वदानन्दसाधुआश्रमः (हरदुवागञ्जम्) अलीगढम् ।

—श्रीराधाकृष्णसंस्कृतमहाविद्यालयः,खुरजा, बुलन्दशहरम्

—वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी ।

—मेरठ-विश्वविद्यालयः, मेरठम् ।

—दिल्ली-विश्वविद्यालयः, दिल्ली ।

२. सेवितशिक्षासंस्थानानि—

—प्रधानाचार्यः, आर्षगुरुकुल-संस्कृतमहाविद्यालये टटेसर-दिल्लीस्थे ।

— ,, श्रीमोतीनाथ संस्कृतमहाविद्यालये रमेशनगर-दिल्लीस्थे ।

—अनुसन्धानसञ्चालकः, अखिलभारतीयसंस्कृतप्रचारकम् एवं शिक्षासमितिः, इति दिल्लीस्थे ।

—प्राध्यापकः, संस्कृतविभागे, हिमाचलप्रदेशविश्वविद्यालये शिमलास्थे ।

—अवैतनिकः सम्पादकः, 'संस्कृतप्रचारकम्' मासिकस्य ।

शास्त्रैकवैभवः शिष्टः प्राच्यविद्याविचक्षणः,
पाणिनीये चिराद् धृत्या कृतभूरिपरिश्रमः ।

विद्वद्भिर्मानितो नित्यं संस्कृतसम्प्रचारकः,
श्रीनरदेवशास्त्री वै राजते विज्ञसंसदि ।

कृत्वा शब्दार्थसम्बन्धसिद्धान्तं पाणिनीयकम्,
ग्रन्थं ग्रन्थालये ख्यातं श्रीशास्त्री महीयताम् ॥

संस्तौति—**आचार्यविश्वदेवशास्त्री**

निवृत्तप्राचार्यः, आर्षगुरुकुलसंस्कृतमहाविद्यालयस्य टटेसर-दिल्लीस्थस्य गुरुकुलसंस्कृतमहाविद्यालयश्रीसर्वदानन्दसाधु-आश्रमहरदुवागञ्जस्थस्य च

ग्रन्थमूल्यम् : २५० रू०

# सिद्धवाक्

पाणिनीयं शब्दानुशासनं शब्दान्वाख्यानपरकं स्थितस्य गतिं ... स्थितो विषयो द्विविधः–(१) शब्दसिद्धिपरकः, शाब्दबोधीयजिज्ञासाप्रश...नपरक उच्चरितप्रध्वंसिशब्दस्तु शाब्दबोधाधारो नैव भवितुमर्हतीति कः शाब्दबोधाधा... इत्यादिजिज्ञासाप्रशमनाय वैयाकरणैर्यो विचारः प्रस्तुतः सोऽस्य दार्शनिकः प... पूर्वोक्तो द्विविधोऽपि पक्षो यथा पाणिनीयस्य प्रौढस्तथा नान्यस्य, उभयपक्षस्य ... पादनसौष्ठवादिदं व्याकरणं समीक्षकैर्महाशास्त्रमाख्यातम्, पातञ्जलञ्च सर्व... बीजनिबन्धनम् अर्थगाम्भीर्याद् गभीरं शब्दसौष्ठवादुत्तानं महाभाष्यमित्यु... अन्यत् सर्वं व्याख्यानं केवलं भाष्यमित्युच्यते, परमेतत् पातञ्जलं तु महाभा...

पाणिनीयव्याकरणस्य व्युत्पत्तिपक्षचिन्तनं यथा बुद्धेश्चरमो विकासः ... शब्दादिविषयकदार्शनिकचिन्तनमपि मनीषिणां मनीषायाः परमः प्रकाशः समु... विचारवीचीनाम्। अतएव पाणिनीयमिदं न केवलं वेदाङ्गेषु मुखमेव अपि तु ...त्तमं दर्शनमपि।

यत्र तत्र बहुत्र विकीर्णस्य तस्य पाणिनीयस्य दर्शनस्य तात्पर्यप्रतिपादनसमीक्षणसम्पृक्तः पाणिनीयव्याकरणदिशा शब्दार्थसम्बन्धसिद्धान्तस्य प्रौढ्या प्रतिपादकोऽयं साकल्येन समुपस्थापनादाकर इव शोधार्थिनां जिज्ञासूनां महत उपकारायाचार्येण डा० नरदेवशास्त्रिणा लिखितः सर्वतोभावेन स्तुत्यः पाणिनीयशब्दार्थसम्बन्धसिद्धान्तोऽन्वर्थनामा ग्रन्थो महान्। परमगभीरोऽपि विषयः पाणिनीयार्थविदा विदुषा लेखकेनात्र हस्तामलकीकृतः।

गुरुमुखादध्ययनेन सततं समाहितमनसा मननेन साभिनिवेशाद् अध्यापनेन च क्लिष्टोऽपि विषयो यथात्मसाद् भवति, यथा च सरलशैल्योपस्थापयितुं शक्यते, इत्येतस्य निदर्शनभूतोऽयं ग्रन्थः, नामूलमत्र किञ्चिदुक्तम्। व्याकरणदर्शनविषये वैयाकरणैस्तद्भिन्नाचार्यैः प्राचीनैरर्वाचीनैश्च विहितानां विचाराणां वर्गीकरणसहितं यथायथं प्रस्तुतीकरणम्, नीरक्षीरधिया तत्समीक्षणं सुस्पष्टं सिद्धान्तसंस्थापनञ्चेत्येवमस्य ग्रन्थरत्नस्य वैशिष्ट्यानि कं न चमत्कुर्वन्ति सचेतसम्। पदे पदे शास्त्रपरम्परागौरवोन्मग्नो ग्रन्थकारो मुधैव शास्त्रसमर्पितहृदयान् विज्ञान् समाकर्षति सुतराम्।

अलमत्र कथनविस्तरेण ग्रन्थोऽयं निर्मल आदर्श इव सर्वं रहस्यप्रतिविम्बमयं स्वयं प्रस्तौति पाठकस्य समक्षं गतः।

पुरोवाचि व्याकरणभाषाविज्ञान-दर्शनादिरहस्यविज्ञेन डा० बलदेवसिंहेन हि लिखितायां प्रतिपादितेन विचारेणास्य महत्त्वं संवर्धितम्। डा० नरदेवशास्त्रिणा सह सोऽपि धन्यवादार्हः। गुणैकपक्षपातिभिः ज्ञानोपासकैश्चास्य समादरोऽवश्यं विधास्यते। अहञ्चास्य सर्वतोभावेन प्रचारप्रसारौ सततं कामये।

**डॉ० हर्षनाथमिश्रः**
व्याकरणसाहित्याचार्यः, एम० ए० (सं० हिन्दी)
पी-एच० डी०
(नवदिल्लीस्थ-श्रीला०ब०शा०केन्द्रीयसंस्कृतविद्यापीठान्निवृत्तप्राचार्यः, शास्त्रचूडामणिः)

C. १२/३७९ यमुनाविहारः
दिल्ली-११००५३
दि० ३०।९।८७

मुद्रकः—वैदिक प्रेस, कैलाशनगर, दिल्ली-३१